॥ श्रीः ॥

काशी-संस्कृत-ग्रन्थमाला
१३३

महामहोपाध्याय श्रीकौण्डभट्टविरचितः

# वैयाकरणभूषणसारः

दर्पण-भैरवी टीकाद्वयोपेतः

भूषणव्याख्या-तिङर्थवादसारपरिशिष्टसहितः



चौखम्बा-संस्कृत-सीरिज, बनारस-१

मूल्यं ७)

THE

# KĀSHĪ SANSKRIT SERIES

( *HARIDĀS SANSKRIT GRANTHAMĀLĀ* )

133

( Vyākaraṇa Section No. 18. )

The

# VAIYĀKARAṆA BHŪS'AṆASĀRA

By

**M. M. S'RĪ KAUṆḌA BHAṬṬA**

WITH

**The DARPAṆA Commentary by Sri Harivallabha,**

**The PARĪKṢĀ Commentary by Bhairava Mis'ra,**

**and**

**A Short Commentary by S'rī Kris'na Mitra**

**With**

**Tinarthavādasāra by S'rī Khuddī Jhā S'armā,**

*Edited with notes, Introduction, etc.,*

BY

VYĀKARAṆĀCHĀRYA, SĀHITYOPĀDHYĀYA

*Pt. S'rī Sadās'iva S'āstri Joshi*

PUBLISHED BY

**JAYA KRISHNA DĀS HARIDĀS GUPTA**

*The Chowkhamba Sanskrit Series Office.*

**Benares City.**

1939.

॥ श्रीः ॥
हरिदाससंस्कृतग्रन्थमालासमाख्य-
काशी-संस्कृत-सीरिज़्पुस्तकमालायाः
१३३
व्याकरणविभागे (१८) अष्टादशं पुष्पम् ।

महामहोपाध्यायकौण्डभट्टविरचितः-

# वैयाकरणभूषणसारः ।

श्रीहरिवल्लभविरचित-दर्पण-टीकया, महामहोपाध्याय-पण्डित-
श्रीभैरवमिश्रकृतया-परीक्षा-टीकया, श्रीकृष्णमित्रकृत-
भूषणव्याख्यया, पण्डित श्री खुद्दीझाशर्मकृत-
तिङर्थवादसारेण च सहितः ।

सम्पादकः—
व्याकरणाचार्य-साहित्योपाध्यायः—
पण्डित-श्रीसदाशिवशास्त्री जोशी ।

प्रकाशकः--
जयकृष्णदास हरिदास गुप्तः—
चौखम्बा संस्कृत सीरिज आफिस,
बनारस सिटी ।

१९९६

# अथात्रस्थसंग्रहस्य सूचिका ।


| | | |
|---|---|---|
| १ | भूमिका । | १ .... ६ |
| २ | समर्पणम् । | १ ... १ |
| ३ | प्रकरणानुक्रमणिका । | १ .... १ |
| ४ | सटीकस्य भूषणसारस्य विषयानुक्रमणिका । | १ .... १० |
| ५ | भूषणसारस्थमूलकारिकासङ्कलनम् । | १ .... ५ |
| ६ | दर्पणपरीक्षासम्वलितभूषणसारः । | १ .... ४४२ |
| ७ | भूषणसारव्याख्या । | ४४३ .... ४५७ |
| ८ | तिङर्थवादसारः । | ४५८ .... ४६८ |
| ९ | अत्रोल्लिखितग्रन्थकृतां मतानाञ्च सूचकम् । | ४६९ .... ४६९ |
| १० | अत्रस्थकारिकाणामकारादिक्रमेणानुक्रमणिका | १ .... १ |
| ११ | प्रश्नपत्रसंग्रहः । | १ .... २ |


इति संग्रहसूचिका ।

॥ श्रीः ॥

# भूमिका

अथ खलु पूज्ये धराहृदये कर्मभूम्यभिधेऽस्मिन्भरतखण्डे को नाम विलक्षणधिषणो विचक्षणो न विजानाति यत्किल सत्स्वपि प्रमाणान्तरेषु व्यवहारप्रवर्तकेषु प्रत्यक्षादिषु; तेषां मूर्धन्यभूतो वेद एव सर्वोत्कर्षेण प्रमाणमिति। तत्रभगवतो वेदस्य लक्षणन्तावत् प्रामाणिकैस्तत्रभवद्भिः पूज्यपादैरस्मन्महर्षिवर्यैश्च—"इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो ग्रन्थो वेदयति स वेदः। अलौकिकपदेन प्रत्यक्षानुमाने व्यावर्त्येते। अनुभूयमानस्य स्रक्चन्दनवनितादेरिष्टप्राप्तिहेतुत्वम्, औषधसेवादेरनिष्टपरिहारहेतुत्वञ्च प्रत्यक्षतः सिद्धम्। स्वेनानुभविष्यमाणस्य पुरुषान्तरगतस्य च तथात्वमनुमानगम्यम्। एवं तर्हि भाविजन्मगतसुखादिकमपि अनुमानगम्यमिति चेद् ? न। तद्विशेषस्यानवगमात्। न खलु ज्योतिष्टोमादिरिष्टप्राप्तिहेतुः, कलञ्जभक्षणवर्जनादिरनिष्टपरिहारहेतुरित्यमुमर्थं वेदव्यतिरेकेणानुमानसहस्रेणापि तार्किकशिरोमणिरप्यवगन्तुं शक्नोति।

अत एवोक्तम्—प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते।
एतं विदन्ति वेदेन तस्माद्वेदस्य वेदता ॥ १ ॥ इति।

भर्तृहरिणाऽप्युक्तं वाक्यपदीये—
न चागमादृते धर्म्मस्तर्केण व्यवतिष्ठते।
ऋषीणामपि यद् ज्ञानं तदप्यागमहेतुकम् ॥ १ ॥

बृहदारण्यके समामनन्ति—"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति"।

एवञ्च सर्वप्रमाणाविषये धर्मादिविषये भगवान् वेद एवैकः प्रभुः, न प्रत्यक्षानुमाने। उक्तं हि श्लोकवार्तिके चोदनासूत्रे—
श्रेयःसाधनता ह्येषां नित्यं वेदात्प्रतीयते।
ताद्रूप्येण च धर्मत्वं तस्मान्नेन्द्रियगोचरः ॥ इत्यादि ॥

'मन्त्रब्राह्मणात्मकत्वं वेदत्वम्' इति तावददुष्टं वेदस्य लक्षणम्। तथाहि श्रूयते—"मन्त्रब्राह्मणयोर्वेदनामधेयम्" इति। अत्रभवतोऽपौरुषेयस्य परमपूज्यस्य वेदस्यान्यल्लक्षणम्भवितुं नार्हति। अव्याप्त्यतिव्याप्तिदोषसद्भावात्।

एवं ह्यस्य भगवतो वेदस्य प्रामाण्यम्बोधकत्वात्स्वत एव सिद्धम्। पौरुषेयवाक्यन्तु बोधकं सदपि पुरुषगतभ्रान्तिमूलत्वसम्भावनया तत्परिहाराय मूलप्रमाणमपेक्षते, न तथा वेदः। तस्य नित्यत्वेन वक्तृदोषशङ्कानुदयात्।

अत्र जैमिनिः—पौरुषेयं न वा वेदवाक्यं स्यात्पौरुषेयता।
काठकादिसमाख्यानाद्वाक्यत्वाच्चान्यवाक्यवत् ॥
समाख्यानं प्रवचनाद्वाक्यत्वं तु,पराहतम्।
तत्कर्त्रनुपलम्भेन स्यात्ततोऽपौरुषेयता ॥ ( जै० न्या० मा० १।२।८ )

ननु भगवता बादरायणेन वेदस्य ब्रह्मकार्यत्वं सूत्रितम् "शास्त्रयोनित्वात्" ( वे० सू० १।१।३ ) ऋग्वेदादिशास्त्रकारणत्वाद् ब्रह्म सर्वज्ञमिति सूत्रार्थः। बाढम्। नैतावता पौरुषेयत्वम्भवति, मनुष्यनिर्मितत्वाभावात्। ईदृशमपौरुषेयत्वमभिप्रेत्य व्यवहारदशायामाकाशादिवन्नित्यत्वं बादरायणेनैव देवताधिकरणे सूत्रितम् "अत एव च नित्यत्वम्" इति ( वे० सू० १।३।२९ )। श्रुतिस्मृती चात्र प्रमाणे भवतः। "वाचा विरूपनित्यया" ( ऋ० ८।७५।६ ) इति।

स्मृतिः—अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा ।
आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः ॥ इति ।

तस्मात्कर्तृदोषशङ्काया अनुदयात् मन्त्रब्राह्मणात्मकस्य वेदस्य यथार्थं प्रामाण्यं सिद्धम् ।

अतः सर्वप्रमाणशेखरायमाणस्य परमपूतस्य भगवतो वेदस्योपासना द्विजातिभिरवश्यं विधेयेति सर्वत्र मुक्तकण्ठेन निगदन्ति श्रुतिस्मृत्यादयः ।

श्रुतिः—"द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो विदन्ति, परा चैवापरा च । तत्रापरा—ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः, शिक्षा, कल्पो व्याकरणम्, निरुक्तं छन्दो ज्यौतिषमिति । अथ—परा यया तदक्षरमधिगम्यते" ( मुण्ड० १।१।४ ) इति ॥

स्मृतिः—योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।
सजीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥ इति ।

अत्र तत्रभवान् पतञ्जलिरपि—
"ब्राह्मणेन निष्कारणः षडङ्गो वेदोऽध्येयो ज्ञेयश्च"
इत्यादिर्द्विजातीन् बाढं वेदाध्ययने प्रवर्तयतीत्यलम्पल्लवितेन ।

यश्च किल द्विजन्मा वेदमधीत्यापि अर्थं न विजानाति सोऽयं पुमान् भारमेव वहति केवलम् ।

"स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम् । योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा" ( नि० १।६ ) इति श्रुतेः । तस्माद्द्विजातीनां वेदार्थज्ञानाय शिक्षादिषडङ्गस्याध्ययनम्परममावश्यकमिति न तिरोहितं तत्रभवताम्भवतां विपश्चिताम् ।

उक्तं हि पाणिनिशिक्षायाम्—
छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते ।
ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते ॥ ४१ ॥
शिक्षा घ्राणन्तु वेदस्य मुखं व्याकरणं स्मृतम् ।
तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते ॥ ४२ ॥ इति ।

छन्दः—छन्दसामुपयोगस्तावत्कर्मकाण्डेऽत्यावश्यकः; श्रूयते च—
"गायत्रीभिर्ब्राह्मणस्यादध्यात्, त्रिष्टुभो राजन्यस्य, जगतीभिर्वैश्यस्य" ॥ इति । (तै० ब्रा० १।१।९।६) तत्र मगणयगणादिसाध्यो गायत्र्यादिविवेकश्छन्दोग्रन्थमन्तरा न सुविज्ञेयः ॥

कल्पो नाम—आश्वलायनापस्तम्बबोधायनादिसूत्रम् । कल्प्यते समर्थ्यते यागप्रयोगोऽत्रेति व्युत्पत्तेः । "इषे त्वा"इत्यादिमन्त्रास्तु क्रत्वनुष्ठानक्रमेणैवाम्नाता इत्यापस्तम्बादयस्तेनैव क्रमेण सूत्रनिर्माणे प्रवृत्ताः । कल्पसूत्रं मन्त्रविनियोगेन क्रत्वनुष्ठानमुपदिश्योपकरोति ।

ज्योतिषस्य प्रयोजनम्—"यज्ञकालार्थसिद्धये"इति तस्मिन्नेव ग्रन्थे विहितम् । कालविशेषविधयश्च श्रूयन्ते—"सम्वत्सरमेतद्व्रतं चरेत्" ( तै० ब्रा० १।९।३४ ) "सम्वत्सरमुख्यं भृत्वा" इत्येवमादयः संवत्सरविधयः । "वसन्ते ब्राह्मणोऽग्निमादधीत" "ग्रीष्मे राजन्य आदधीत" "शरदि वैश्य आदधीत" (तै० ब्रा० १।१) इत्याद्या ऋतुविधयः । एवं मासपक्षतिथिकालनक्षत्रविधयः श्रूयन्ते । अतः कालविशेषान् अवगमयितुं ज्योतिषमुपयुज्यते ।



निरुक्तं नाम—अर्थावबोधे निरपेक्षतया पदजातं यत्रोक्तं तन्निरुक्तम् । यथा—गौः,

ग्मा, ज्मा, क्ष्मा, क्षा, क्षमेत्यारभ्य वसवः वाजिनः, देवपत्न्यो देवपत्न्य इत्यन्तो यः पदानां समाम्नायः समाम्नातस्तस्मिन् ग्रन्थे पदार्थावबोधाय परापेक्षा न विद्यते। एतावन्ति पृथिवीनामानि, एतावन्ति हिरण्यनामानीत्येवं तत्र तत्र विस्पष्टमभिहितत्वात्। यद्यपि व्याकरणबलेन केषांचिन्निर्वचनानां सिद्धिर्भवितुमर्हति, तथापि न सर्वेषां सिद्धिरस्ति। अतः श्रूयते च—"तदिदं विद्यास्थानं व्याकरणस्य कार्त्स्न्यं स्वार्थसाधकञ्च"इति ( नि० १।१५ )। तस्माद्वेदार्थावबोधायोपयुक्तं निरुक्तमिति ॥

शिक्षा नाम—वर्णस्वराद्युच्चारणप्रकारो यत्रोपदिश्यते सा शिक्षा। तथा च तैत्तिरीयोपनिषदारम्भे समामनन्ति—"शिक्षां व्याख्यास्यामः—वर्णः, स्वरः, मात्रा, बलं, साम, सन्तान इत्युक्तः शिक्षाऽध्यायः" ( तै० आ० ७।२ ) इति।

वर्णोऽकारादिः। स्वरः—उदात्तादिः। मात्रा-ह्रस्वादिः। बलम्—स्थानप्रयत्नौ। सामशब्देन साम्यमुक्तम्। अतिद्रुतातिविलम्बितगीत्यादिदोषराहित्येन माधुर्यादिगुणयुक्तत्वेनोच्चारणं साम्यम्। एतत्सर्वं पाणिनीयशिक्षायां स्पष्टम्। सन्तानः-संहिता, 'वायवायाहि'इत्यत्रावादेशः। 'इन्द्राग्नी आगतम्" इत्यत्र प्रकृतिभावः। एतच्च व्याकरणेऽभिहितत्वाच्छिक्षायां नोक्तम्। शिक्ष्यमाणवर्णातिवैकल्ये बाध इति पाणिनीयशिक्षायामेवाभिहितम्।

तथाहि—"मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्"॥ (पा० शि० ५२)

"इन्द्रशत्रुर्वर्धस्व"इत्यस्मिन्मन्त्रे ( तै० सं० २।४।१२।१ ) विवक्षितेऽर्थे तत्पुरुषसमासे "समासस्य" ( पा० सू० ६।१।२२३ ) इति सूत्रेण तत्पुरुषत्वाद् अन्तोदात्तेन भवितव्यम्। आद्युदात्तस्तु प्रयुक्तः, तथासति पूर्वपदप्रकृतिस्वरत्वेन बहुव्रीहित्वाद् इन्द्रो घातको यस्य इत्यर्थः सम्पन्नः। अतः स्वरवर्णाद्यपराधनिरासाय शिक्षाग्रन्थोऽप्यावश्यकः।

व्याकरणन्नाम—अर्थविशेषमाश्रित्य स्वरप्रकृतिप्रत्ययादीन् विशेषेण—संस्कारविशेषेण, आ—समन्तात्—वैदिकांल्लौकिकांश्च शब्दान् करोतीति तथाभूतः पाणिन्यादिमहर्षिप्रणीतो ग्रन्थसमूहः। अस्य व्याकरणस्य प्रणेतारोऽष्ट नव वा आचार्या बभूवुः। केचित्—

इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः।
पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः॥ १ ॥ इत्याहुः।

अपरे तु—ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम्।
सारस्वतं चापिशलं शाकलं पाणिनीयकम्॥ इत्याहुः।

सत्स्वपि सर्वेषु व्याकरणेषु सार्वलौकिकवैदिकशब्दानां नितरां व्युत्पादकं पाणिनीयव्याकरणमेव। अत एवास्य वेदाङ्गत्वम्। इदमेवाभिप्रेत्य "इदमक्षरच्छन्दो वर्णशः समनुक्रान्तं यथाऽऽचार्या ऊचुः, ब्रह्मा बृहस्पतये प्रोवाच, बृहस्पतिरिन्द्राय, इन्द्रो भरद्वाजाय, भरद्वाज ऋषिभ्यः, ऋषयो ब्राह्मणेभ्यस्तं खल्विममक्षरसमाम्नायमित्याचक्षते, "न भुक्त्वा न नक्तं प्रब्रूयात् ब्रह्मराशिः" इति ऋक्तन्त्रव्याकरणेऽस्य चतुर्दशसूत्रकदम्बस्याम्नायत्वमुक्तम्, तन्मूलकत्वादस्यैव व्याकरणस्य वेदाङ्गत्वं युक्तम्। अत एवास्य पाठे सर्ववेदपारायणजं पुण्यमिति शब्देन्दुशेखरे नागेशेन स्पष्टमभिहितम्। छान्दोग्योपनिषदि व्याकरणमुपक्रम्य "वेदानां वेदः" इत्युक्तम्।

अत्र पराशरोपपुराणम्—

पाणिनीयं महाशास्त्रं पदसाधुत्वलक्षणम्।
सर्वोपकारकं ग्राह्यं कृत्स्नं त्याज्यं न किञ्चन॥ इति॥

तस्य एतस्य व्याकरणस्य प्रयोजनविशेषो वररुचिना वार्तिके प्रदर्शितः—"रक्षोहागमलघ्वसन्देहाः प्रयोजनम्" इति एतानि रक्षादिप्रयोजनानि प्रयोजनान्तराणि च महाभाष्ये श्रीपतञ्जलिमहर्षिणा स्पष्टीकृतानि ।

ऋग्वेदेऽपि—चत्वारि शृङ्गा त्रयोऽस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य ।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ आविवेश ॥ ४।५८।३

अस्यार्थः—चत्वारि शृङ्गाः—चत्वारि पदजातानि—नामाख्यातोपसर्गनिपाताः । त्रयोऽस्य पादाः—त्रयः कालाः । द्वे शीर्षे—सुपस्तिङश्च । सप्तहस्तासः—सप्त विभक्तयः, त्रिधा बद्धः, त्रिषु स्थानेषु बद्धः, उरसि कण्ठे शिरसि । वृषभो वर्षणात्कामानाम् । रोरवीति–रौतिः शब्दकर्मा । महो देवो मर्त्याँ आविवेश । महता देवेन नस्तादात्म्यं यथा स्यादित्यध्येयं व्याकरणम् ।

अस्मिन् पाणिनीयव्याकरणविषये नानाविधाः प्रबन्धास्तत्रभवद्भिः पण्डितप्रकाण्डैर्मान्यवरैर्मनीषिभिर्विरचिताः सन्ति । तेषु प्रबन्धेष्वद्य श्रीमन्महामहोपाध्यायकौण्डभट्टविरचितो वैयाकरणभूषणसारः साम्प्रतम्भवताम्पुरतः प्रस्थाप्यते ।

अत्र धात्वर्थः लकारार्थः, सुबर्थः, नामार्थः, इत्यादयो भाष्यप्रामाण्यं पुरस्कृत्य सम्यक् विचारिताः, येन वैयाकरणानामप्यर्थज्ञानेऽप्रतिहता प्रतिभा सम्पन्ना स्यात् । अर्थज्ञानाय वैयाकरणानां किमुत, अन्येषामपि न्यायमीमांसादिशास्त्रविदां भूषणसारप्रभृतीनामध्ययनमावश्यकम् । उक्तं हि—
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥

अत्र हरिरप्याह—इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम् ।
इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः ॥ इति ॥

वैयाकरणानाम्मते—शब्दतत्वमेव ब्रह्म । स च शब्दः नित्यः । सोऽपि स्फोट इति शाब्दिकाः शब्दायन्ते । तत्रेमां श्रुतिं प्रमाणयन्ति ।

"शब्दब्रह्म यदेकं यच्चैतन्यं च सर्वभूतानाम् यत्परिणामस्त्रिभुवनम् अखिलम् इदं जयति सा वाणी ॥

अत्र हरिः—अनादिनिधनं ब्रह्म शब्दतत्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥ १ ॥ इति ।

एवञ्च वैयाकरणभूषणसारादिग्रन्थानाम्पठनेन न केवलं व्याकरणपदार्थानामेव ज्ञानं सम्पद्यते; किन्तु न्यायमीमांसावेदान्तादिशास्त्राणामपि पदार्थज्ञानस्य लाभोऽनेन सम्भवति । अत एवास्य ग्रन्थस्य सर्वत्र राजकीयपरीक्षासु पाठ्यत्वेन निर्धारणं दरीदृश्यते ।

अयं ग्रन्थकर्ता कौण्डभट्टः रङ्गोजिभट्टस्य पुत्रः, भट्टोजिदीक्षितस्य भ्रात्रीय इति, प्रकृतग्रन्थस्थमङ्गलश्लोकेन "भट्टोजिदीक्षितमहं पितृव्यं नौमि सिद्धये" इति श्लोकतश्च प्रतीयते । "भट्टोजिदीक्षितसमयश्च १६०० पर्यन्तं भवितुमर्हति । यतः किल भट्टोजिदीक्षितसहपाठिनो जगन्नाथस्य पण्डितराजस्य समयो निश्चितोऽस्ति । यतः—दिल्लीश्वरशहाजहानस्य सविधे तस्य पण्डितराजस्य स्थितिरासीत् । अत्र प्रमाणम्—"दिल्लीवल्लभपाणिपल्लवतले नीतं नवीनं वयः" इति पण्डितराजकृतश्लोक एव । तस्मात् कौण्डभट्टस्य किञ्चिदधिकः १६२५ समयो भवेत् ।

एते दाक्षिणात्या इति बहव आहुः । एभिः कृता ग्रन्थाः—१ तर्कप्रदीपः । २ तर्करत्नः । ३ न्यायपदार्थदीपिका । ४ बृहद्वैयाकरणभूषणम् । ५ लघुवैयाकरणभूषणसारः । ६ वैयाकरणसिद्धान्तदीपिका । ७ स्फोटवाद इत्यादयः । तत्र पदार्थदीपिका, बृहद्वैयाकरणभूषणम्, लघुवैयाकरणभूषणसार इति ग्रन्थत्रयं मुद्रितं समुपलभ्यते ।

अस्य वैयाकरणभूषणसारस्य सारोऽतिगहनविषयतया यथावज्ज्ञातुमशक्यः । अतोऽस्योपरि विद्वद्धौरेयैरनेकव्याख्या आविष्कृताः । सन्ति चास्योपरि—हरिवल्लभकृतो, १–दर्पणः । भैरवमिश्रकृता–२ परीक्षा । गोपालदेवकृता–३ कान्तिः । हरिशास्त्रिकृता—४ काशिका । रुद्रनाथकृता—५ विवृतिः । कृष्णमित्रकृता—६ भूषणव्याख्या इत्यादयष्टीकाः । परन्त्वेतासु दर्पणेन समा विस्तृता न्यायमीमांसादिमतस्य स्पष्टाभिप्रायप्रदर्शिका नैकापि, एवं परीक्षासमाप्यन्या नेत्यतोऽस्माभिर्दर्पणपरीक्षाभ्यां सम्वलितो भूषणसार इदानीं विदुषां कृते छात्राणाञ्चोपकृते सम्मुद्र्य प्राकाश्यं नीतः । पण्डितश्रीकृष्णमित्रकृता—वैयाकरणभूषणव्याख्या, पण्डितश्रीखुद्दीझाकृत—तिङर्थवादसारश्चास्माभिरन्ते निवेशितौ ।

अत्र हरिवल्लभस्य दर्पणकारस्य परिचयस्तावदित्थम्—श्रीवल्लभाभिधानस्य पण्डितवरेण्यस्य कूर्मगिरिनिवासस्य उत्प्रभातीयोपनामकश्रीवल्लभस्यायं सुपुत्रो दर्पणकारः श्री हरिवल्लभो नाम । अस्य समयः १८०० इत्यनुमातुं शक्यते । यतः किल १८५८ वैक्रमे निर्मितायां काशिकायां तत्र तत्र स्थलेषु दर्पणकारस्य मतमुपपादितं दरीदृश्यते । अस्य पाण्डित्यं न केवलं व्याकरणशास्त्रे एव, किन्तु न्यायमीमांदिशास्त्रेष्वपीति दर्पणटीकात एव निर्धारयितुं शक्यते ।

श्रीमन्माननीयमहामहोपाध्याय-पण्डितवर्यस्य अगस्त्यकुलावतंसश्रीमद्भवदेवात्मजभैरवमिश्रस्य परिचयस्तावन्न तिरोहितो विदुषाम् । एतेषां महोदयानां शब्देन्दुशेखरे, परिभाषेन्दुशेखरे, मनोरमाशब्दरत्ने च विस्तृता पाण्डित्यप्रगल्भा टीका प्रथिता वरीवर्ति । एतेषाम्माननीयानां समयः १७८० इति महामहोपाध्यायपण्डिताभ्यङ्करोपाह्ववासुदेवशास्त्रिसम्पादितसर्वदर्शनसंग्रहस्थपाणिनीयव्याकरणग्रन्थकारसमयग्रन्थनामसूचकपत्रतोऽवगम्यते । एते सनाढ्यब्राह्मणा इति केचित् । परे तु सरयूपारिण इत्याहुः ।

श्रीमान्यवराः कृष्णमित्राचार्याः सुलतानपुरमण्डलान्तर्गतलक्ष्मणपुरनिवासिनः पण्डितरामसेवकत्रिपाठिमहोदयानां पुत्राः, पं०देवीदत्तशर्मणः पौत्राः वैदिकाः कर्मकाण्डे धर्मशास्त्रे च निष्णाताः, न्यायव्याकरणतन्त्रे च स्वतन्त्राः । एभिः–लघुमञ्जूषोपरि कुञ्जिका, कौमुद्योपरि रत्नार्णवः, प्रौढमनोरमायां कल्पलता, कर्मकाण्डे-प्रेतप्रदीपः, धर्मशास्त्रे तिथिनिर्णयः, शक्तिवादटीका च विनिर्मिताः । एते नागेशभट्टसमकालीना इति प्रामाणिकमुखतः श्रूयते । अथ च अभ्यङ्करोपाह्ववासुदेवशास्त्रिसम्पादितसर्वदर्शनसङ्ग्रहस्थपाणिनीयव्याकरणग्रन्थकारसमयग्रन्थनामसूचकपत्रतः १७५० इति समयो निर्धार्यते ।

टीकात्रयभूषितभूषणसारस्य सम्पादनकार्यमतिदुष्करमतिकठिनञ्च विलोक्य मदीयमनोरमाशेखराद्यनेकग्रन्थसम्पादनसन्तुष्टचेतसः सुरभारतीसेवकगोलोकवासिश्रीहरिदासगुप्तात्मजश्रीजयकृष्णदासश्रेष्ठिवर्या भूप्रथितयशसः चौखम्बासंस्कृतपुस्तकालयाध्यक्षा मां सादरं साग्रहञ्च प्रार्थितवन्तः । श्रीजयकृष्णदासप्रेमादरवशंवदेन राजकीयप्रधानपाठशालाध्यापकव्याकरणाचार्यमोकाटेइत्युपनामकगणपतिशास्त्रिचरणान्तेवासिना मया गुरुकृपाम्बुधावितधिया अनेकप्राचीनहस्तलिखितग्रन्थाननेकप्राचीनमुद्रितग्रन्थाञ्च सम्पाद्य तैः सह सटीकं प्रकृतग्रन्थं सम्मेल्य तत्र तत्र त्रुटितग्रन्थं प्रपूर्य प्रमादपतितपाठान् निष्कास्य टीकायाम्प्रतीकचिन्हानि निधाय ग्रन्थादौ प्रकरणसूचिकां विषयसूचिकां कारिकासङ्ग्रहञ्च विधाय अन्ते कृष्णमित्राचार्यकृतभूषणव्याख्यां

पण्डितश्रीखुद्दीझाशर्मकृततिङर्थवादसारम्, भूषणसारोल्लिखितग्रन्थकृतां विशेषमतान्तराणां च सूचकपत्रम्, भूषणसारस्थकारिकाणामकारादिक्रमिकानुक्रमणिकाम्प्रश्नपत्रसङ्ग्रहञ्च विधाय यथाशेमुषि समपादि ।

अत्र राजकीयप्रधानपाठशालाध्यापकन्यायव्याकरणाचार्यपण्डितसूर्यनारायणशुक्लमहोदयैर्जटिलफक्किकालापने कृपया बहुतरं साहाय्यम्प्रदत्तम्, इति पण्डितवरेण्या अस्माभिर्नितरां धन्यवादार्हाः ।

अत्र संशोधनकार्ये सुहृद्वरपण्डितछविनाथत्रिपाठिना बहुतरं साहाय्यं प्रदत्तमिति तेभ्यो मे सादरमनेके धन्यवादाः ।

राजकीयप्रधानपाठशालाध्यापकव्याकरणवेदान्ताचार्यैनेनेइत्युपाह्वपण्डितगोपालशास्त्रिणः स्वकीयग्रन्थसङ्ग्रहतो ग्रन्थान् प्रदत्तवन्त इति तान् धन्यवादाञ्जलिमर्पयामः ।

श्रीपरममाननीयभैरवमिश्रविरचितपरीक्षां टीकां मुद्रापयितुमत्युत्कटेच्छाऽसीदस्माकम् । परन्तु सा झटित्युपलब्धा नाभवत् । चिन्तया तस्या अन्वेषणम्प्राचलत् । विश्वविद्यालयसाहित्याध्यापकपण्डितमधुसूदनमहोदयः परमतपस्विनः पण्डितमहादेवप्रसादस्य सविधे प्रकाशकं नीतवान् । पण्डितमहादेवशास्त्रिणो दर्शनेनास्य महादेव इति नामान्वर्थकम्मन्यते स्म प्रकाशकः । गोरक्षपुरमण्डलान्तर्गताहिरवलिग्रामनिवासी साम्प्रतम्वाराणस्यामसितटनिवासी द्विवेदीत्युपनामकः पण्डितमहादेवशास्त्री गोरक्षपुरमण्डलान्तर्गतवांसगावमण्डलान्तर्गतमध्यग्रामवास्तव्यशुक्लकुलावतंसवैयाकरणकेसरिश्रीपण्डितरामचरणात्मजयमुनाप्रसादपुत्रगदाधरप्रसादरक्षितां हस्तलिखितपरीक्षाटीकापुस्तिकामतिश्रमेण तेभ्यः सम्पाद्य श्रेष्ठिवराय जयकृष्णदासमहोदयाय प्रकाशनार्थम्प्रदत्तवानिति पण्डितमान्यवरमहादेवद्विवेदीनाम्महोपकारं शिरसि निधाय तेभ्यः पुनः पुनः धन्यवादाञ्जलयोऽस्माकम् ।

बडोदामण्डलान्तर्गतडभईनगरस्थलक्ष्मीनारायणपाठशालाध्यापकपण्डितनरहरशास्त्रिपेणसेमहोदयैः स्वकीयं परीक्षाटीकापुस्तकं संशोधनसाहाय्यार्थं प्रेषितमिति तेभ्योऽनेके धन्यवादाः ।

विश्वविद्यालयीयधर्मशास्त्राध्यापकपण्डितविश्वनाथशास्त्रिभिः पण्डितश्रीकृष्णमित्रकृतभूषणव्याख्याया हस्तलिखितं पुस्तकम्प्रदत्तमिति तेभ्योऽनेके धन्यवादाः ।

दर्पणपरीक्षाभूषणव्याख्यातिङर्थवादसारसहितस्य वैयाकरणभूषणसारस्य मुद्रणे श्रीहरिदासगुप्तात्मजवृजजीवनदासमहोदयेन सूक्ष्मेक्षिकया अतिश्रमो विहित इति तेषां नाम्मोलेखनमप्यावश्यकम्प्रतिभाति ।

यद्यप्यस्य संस्करणस्य संशोधनं सावधानतयातिश्रमेणातिशुद्धं समभवदिति नान्यदस्य तुलामधिरोहतीति वक्तुं शक्यम्, तथापि कदाचिद् दृष्टिदोषेण मतिमान्द्येन मम मुद्रकस्य वा अत्रानेके प्रमादाः स्युस्तान् गुणैकपक्षपातिनो विद्वांसो हंसक्षीरन्यायेन परिशोध्य ।

नचात्रातीव कर्तव्यं दृष्टिदोषपरम्मनः । दोषेऽह्यविद्यमानेऽपि तच्चित्तानाम्प्रकाशते ॥१॥

इत्युक्तिमनुसन्धाय च मामनुगृह्णन्त्विति सम्प्रार्थयते—

विदुषामनुचरः—

**सदाशिवशास्त्री जोशी**

व्याकरणाचार्यः साहित्योपाध्यायश्च ।

॥ श्रीः ॥

श्रीमद्गुरुवर्य**मोकाटे**कुलभूषण**गणपति**शास्त्रिणाम्

चरणारविन्दयुगले सादरम्



# समर्पणम्

विद्यामन्दिरमण्डना बुधजनैः सम्मानिताः सादरम्<br>
विद्यादानतपोनितान्तनिरता रोचिष्णवः सद्गुणैः ।<br>
**मोकाटे**कुलभूषणा **गणपति**प्रख्यातनाम्ना युताः<br>
वन्द्या नो **गुरवो** यदीयकृपया प्राप्ता सुविद्या **मया** ॥१॥

यस्याङ्घ्रिपद्मरजसा विमलीकृतन्तत्<br>
चेतो दुरूहविषयग्रहणक्षमं मे ।<br>
तस्यैव ते वरदकल्पतरुप्रसून–<br>
सङ्काशपादयुगले कृतिरर्पितेयम् ॥ २ ॥

भवदीयः—

**सदाशिवशास्त्री जोशी**

॥ श्रीः ॥

# अथ भूषणसारस्थप्रकरणानामनुक्रमणिका ।


| क्रमाङ्कः | प्रकरणनाम | पृ० अं० |
|---|---|---|
| १ | धात्वर्थनिर्णयः .... .... | ७ |
| २ | लकारार्थनिर्णयः .... .... | ११८ |
| ३ | सुबर्थनिर्णयः .... .... | १४७ |
| ४ | नामार्थनिर्णयः .... .... | २०३ |
| ५ | समासशक्तिनिर्णयः .... .... | २३१ |
| ६ | शक्तिनिर्णयः .... .... | २७५ |
| ७ | नञर्थनिर्णयः .... .... | ३०७ |
| ८ | निपातार्थनिर्णयः .... .... | ३२२ |
| ९ | त्वादिभावप्रत्ययार्थनिर्णयः .... .... | ३४४ |
| १० | देवताप्रत्ययार्थनिर्णयः .... .... | ३५२ |
| ११ | अभेदैकत्वसंख्यानिर्णयः .... .... | ३६३ |
| १२ | संख्याविवक्षानिर्णयः .... .... | ३७० |
| १३ | क्त्वाद्यर्थनिर्णयः .... .... | ३७५ |
| १४ | स्फोटनिरूपणम् .... .... | ३८५ |


इति श्रीभूषणसारस्थप्रकरणानामनुक्रमणिका ।

# वैयाकरणभूषणसारस्य सटीकस्य विषयानुक्रमणिका


विषयः । पृष्ठम् ।
मङ्गलाचरणम् । १
जगदूशब्दस्य व्युत्पत्तिविवरणे ३
मतान्तरेण यत इत्यस्यार्थप्रतिपादनम् ३
द्वितीयमङ्गलाचरणम् । ४
मुक्तिपदार्थस्य वेदान्तिमते नैयायिकमतेच विचारः टी० ४
ग्रन्थारम्भप्रतिज्ञादिकम् । ७
धात्वर्थनिर्णयप्रारम्भः । ७
फलव्यापारतिङन्तानां विशेष्यविशेषणभावप्रतिपादनम् । ८
फलपदार्थनिर्वचनम् । टी० ८
परारीत्या फलपदार्थनिरूपणम् ८
व्यापारपदार्थकथनम् । ९
तदर्थं वाक्यपदीयप्रदर्शनम् । १०
साध्यत्वनिर्वचनम् । ११
साधननिर्वचनम् ११
साधननिर्वचनमन्येतुमते ११
अत्र हरिसम्मतिः ११
वस्तुतस्तु प्रकारेण साध्यत्वकथनम् टी० ११
केचित्तुरीत्या पचित्वादिकं जातिरित्यादिकथनम् । टी० ११
तदर्थं वाक्यपदीयप्रदर्शनम् । १२
नानार्थतापत्तिवारणम् । १३
अत्र तदादिन्यायस्वरूपदर्शनम् । टी० १३
वाक्यपदीयप्रदर्शनम् । १४
आश्रये तु तिङः स्मृता इत्यस्यार्थस्य प्रतिपादनम् । १४
फलव्यापाराश्रयस्य तिङर्थत्वे मीमांसकशङ्का । १५
तस्याः खण्डनम् । १६
न्यायशास्त्ररीत्या व्यापारस्य धात्वर्थत्वे शङ्का । १७
विषयः । पृष्ठम् ।
तस्याः खण्डनम् । १८
मीमांसकमतेऽपरापत्तिदानम् । १८
कर्तुर्वाच्यतावश्यकत्वप्रदर्शनम् । २०
सोमेन यजेतेत्यादावभेदान्वयबोधानापत्तौ शङ्का । टी० २१
सोमेन यजेतेत्यत्र कर्तृवाचित्वप्रतिपादनम् । टी० २२
अत्रापरमतम् । टी० २२
वैश्वदेव्यामिक्षेतिन्यायनिर्वचनम् टी० २२
बलाबलाधिकरणम् प० टी० २३
अरुणयेतिन्यायनिर्वचनम् । २४
प्रधानषष्ठ्यर्थेऽनुशासनस्य युक्तेरप्युपलक्षणत्वम् । २३
अत्र वस्तुतस्तुमतप्रतिपादनम् । टी० २४
अरुणाधिकरणीयसिद्धान्तप्रतिपादनम् । टी० २४
केचिन्मते सङ्गतः फलम् । टी० २५
फले प्रधानमित्यादिकारिकार्थनिरूपणम् । २५
नैयायिकादिरीत्या कार्यकारणभावप्रतिपादनम् । २६
षोढासङ्गतिनिरूपणम् । टी० २५
उक्तकार्यकारणभावे गौरवप्रदर्शनम् । २७
चैत्र इव पचतीत्यादिस्थलीयदोषवारणम् । टी० २९
प्रदर्शितलाघवस्य कर्तृकर्मणोराख्यातार्थत्वे प्रमाणत्वप्रदर्शनम् । टी० २९
कालस्य व्यापारे विशेषणत्वम् । २९
कर्तृकर्मणोराख्यतार्थत्वे प्रदर्शितप्रमाणस्य नैयायिकरीत्या समाधानम् । टी० २८
सङ्ख्यावत् कर्तृकर्मणोः कालस्यान्वयवारणम् । २९

| विषयः । | पृष्ठम् । |
|---|---|
| कालस्य फलेऽन्वयवारणम् । | २९ |
| केचिन्मते फलव्यापारयोः पार्थक्येन-शक्तेरङ्गीकरणम् । | टी० ३० |
| उक्तमतस्य खण्डनम् । | टी० ३० |
| आमवातजडीकृतकलेवरस्योत्तिष्ठतीति प्रयोगवारणम् । | ३० |
| परमतेनोक्तापत्तिवारणम् । | ३१ |
| उक्तापत्तिवारणप्रकारस्य खण्डनम् | टी० ३१ |
| स्वमतेनापत्तिवारणम् । | टी० ३१ |
| अत्रापरमतम् | ३१ |
| प्रत्ययस्य प्राधान्यत्वेऽपि निरुक्तादि-प्रामाण्यात्तस्यास्वीकरणम् । | ३२ |
| भावप्रधानमाख्यातमिति वाक्यार्थ-प्रदर्शनम् । | ३२ |
| भावत्वस्य निरूपणत्वम् । | टी० ३२ |
| प्राधान्यस्य निरूपणम् । | टी० ३२ |
| भावप्रधानकत्वनिरूपणम् । | टी० ३२ |
| सत्वप्रधानानीत्यस्य निर्वचनम् । | टी० ३३ |
| भूवादिसूत्रीयभाष्यप्रदर्शनम् । | टी० ३३ |
| अत्रबोधनप्रकारः | ३५ |
| कृत्यादिरूपभावनाया आख्यातार्थत्वे मानप्रदर्शनम् । | टी० ३५ |
| क्रियायाः द्वित्वादिसत्वे शङ्कापूर्वकप्र-माणकथनम् । | टी० ३५ |
| चैत्रौ पचत इत्यादौ चैत्रादिगतस-ङ्ख्यारोपे प्रमाणाभावकथनम् । | टी० ३६ |
| कर्तृकर्मणोः देवदत्तादीनामन्वयासंभ-वकथनम् । | टी० ३६ |
| कर्त्रादौ सङ्ख्यान्वयासंभवकथनम् | टी० ३६ |
| कर्तृत्वेन विवक्षया राजा पुरुषो गच्छ-तीतिप्रयोगापादानम् । | टी० ३७ |
| चैत्रादिपदोत्तरं तृतीयापत्तिवारणम् | टी० ३७ |
| चैत्रस्याधेयतासम्बन्धेनान्वयापत्ति-वारणम् । | टी० ३७ |
| पश्य मृगो धावतीत्यत्रैकवाक्यताऽ-नापत्तिरूपदूषणकथनम् । | ३९ |
| पश्येत्यत्र तमित्यध्याहारनिवारणम् । | ३९ |
| अत्र नैयायिकमतप्रदर्शनम् । | टी० [illegible] |
| पश्य मृग इत्यत्रान्वयदोषकथनम् | ४० |
| दिगर्थस्य प्रदर्शनम् | ४० |
| पचतीत्यस्य बोधप्रदर्शनम् । | ४३ |
| अत्र नव्यमतम् | ४३ |
| प्रथमान्तार्थविशेष्यकबोधवादिमते-शङ्कानिवारणम् । | टी० ४२ |
| अत्रनैयायिकमतप्रदर्शनम् । | टी० ४२ |
| पचतीत्यस्य बोधप्रदर्शने नवीनमतक-थनम् । | टी० ४३ |
| भावाख्याते भावनैव विशेष्येतिकथ-नम् । | टी० ४३ |
| अत्र नवीनमतम् । | टी० ४३ |
| अत्रापरमतम् । | टी० ४४ |
| घटो नश्यतीत्यादिबोधप्रदर्शनम् । | ४५ |
| पचतीत्यत्र बोधे तात्पर्यग्राहकप्रदर्शनम् | ४७ |
| अत्र व्यभिचारवारणम् । | ४८ |
| लङाद्यन्तेभावनाऽवाच्येतिप्रभाकर-मते व्यवस्थापनम् । | ४९ |
| कृतित्वस्य शक्यतावच्छेदकत्वनिवा-रणम् । | ५१ |
| यत्नस्याख्यातार्थत्वनिवारणम् | ५२ |
| भावनाया अवाच्यत्वे आपत्तिप्रद-र्शनम् | ५३ |
| अस्मिन् विषये द्वितीयापत्तिप्रदर्शनम् | ५४ |
| अत्र भावप्रदर्शनम् । | ५५ |
| अस्मिन् विषये वास्तविकमतप्रदर्श-नम् । | टी० ५६ |
| जानात्यादेः केवलज्ञानादिवाचित्वदू-षणम् । | ५६ |
| अत्र भावप्रदर्शनम् । | ५७ |
| अस्मिन् विषये वास्तविकमतप्रदर्श-नम् । | टी० ५७ |
| अत्र नव्यनैयायिकमतम् । | टी० ५७ |
| क्रियानामेयमित्यादिभाष्ययोजना | टी० ५७ |
| व्यापारमात्रशक्तिवादिमतम् । | टी० ५८ |
| कृञादौ सकर्मकत्वव्यवहारो भाक्तेति-मतस्य खण्डनम् । | ५८ |
| कारिकयाकर्त्रर्थादिप्रदर्शनम् । | ५९ |

| विषयः | पृष्ठम् । |
|---|---|
| अत्र परमतम् । | ५९ |
| फलावच्छिन्नव्यापारबोधकत्वं सकर्मकत्वमिति मतेऽपि अयम्पक्षः टी० | ५९ |
| ज्ञानाल्यादेः विषयावच्छिन्नावरणभङ्गादिफलवाचकत्वनिराकरणम् । | ६० |
| अत्र वास्तविकं मतम् । टी० | ६० |
| निर्वर्त्यादिषु कर्मवद्भावो नतु प्राप्येतिकथनम् । | ६१ |
| फलावाचकत्वे त्यजिगम्योः पर्यायतापत्तिः । | ६४ |
| आख्यातवाच्या भावनेति मीमांसकमतम् । | ६५ |
| अत्र तदागमन्यायदर्शनम् । | ६६ |
| तदागमन्यायस्य समूलं विवरणम् । | ६६ |
| मीमांसकमतखण्डनम् । | ६७ |
| मीमांसकमतखण्डनपूर्वकमभिप्रायप्रदर्शनम् । | ६७ |
| सम्बन्धमात्रमितिभाट्टवार्तिकप्रदर्शनपूर्वकं शङ्का | ७० |
| उक्तमतस्य खण्डनम् । | ७० |
| वास्तविकमतप्रदर्शनम् । | ७१ |
| बोधो व्युत्पत्त्यनुसारीतिप्रदर्शनम् । | ७१ |
| तदागमे हीतिन्यायस्यातिव्याप्तत्वप्रदर्शनम् । | ७३ |
| व्यापारस्य धात्वर्थत्वे साधकान्तरमाह | ७५ |
| कर्तुर्वाच्यत्वावश्यकमितिशङ्का । | ७६ |
| अस्य मतस्य खण्डनम् । | ७६ |
| एकक्रियान्वयित्वरूपसामर्थ्यस्य खण्डनम् । | ७७ |
| भावनायास्तिङर्थत्वे आपत्तिप्रदर्शनम् | ७८ |
| णिजाख्यातार्थान्यतरार्थव्यापाराश्रयत्वरूपकर्तृत्वस्य खण्डनम् । टी० | ७८ |
| धातोर्भावनावाच्यत्वे प्रमाणप्रदर्शनम् । | ८० |
| क्रियावाचकत्वे सति गणपठितत्वरूपधातुत्वस्य खण्डनम् । | ८२ |
| अस्त्यादीनां क्रियावाचकत्वाभावनिराकरणम् । | ८३ |
| स ततो गतो नवेति प्रश्नानुरोधेन तत्रापि भावना प्रतीयते | ८४ |
| उक्तप्रश्नोत्तरविषये शङ्कासमाधानम् टी० | ८४ |
| अस्तीत्यत्र स्पष्टं भावना न प्रतीयतेऽत्र कारणप्रदर्शनम् । | ८५ |
| करोतीतिप्रश्ने प्रश्नस्यास्तीत्युत्तरस्य वारणम् । | ८५ |
| सर्वेषां सकर्मकतापत्तिनिवारणम् । | ८६ |
| अत्रार्थे वाक्यपदीयप्रदर्शनम् । | ८७ |
| पाक इत्यत्रासत्वभूतक्रियाप्रतीतिनिवारणम् । | ८८ |
| घञन्ते साध्यत्वेन क्रियाभिधाने प्रमाणप्रदर्शनम् । | ९० |
| अस्यैव स्पष्टीकरणम् । | ९१ |
| स्तोकः पाक इति प्रयोगवारणम् | ९२ |
| समानवाक्ये निघातादिविषये वाक्यपदीयप्रदर्शनम् । | ९४ |
| सम्बोधनपदार्थकथनम् । टी० | ९४ |
| तिङन्तानामप्येकवाक्यताऽस्तीति प्रतिपादनम् । | ९५ |
| अत्र वास्तविकमतप्रदर्शनम् । | ९६ |
| सम्बोधनान्तं कृत्वोर्था इत्यादीनामुदाहरणप्रदर्शनम् । | ९६ |
| असमस्तनञः क्रियान्वये प्रमाणप्रदर्शनम् । | ९७ |
| सम्बोधनाद्यष्टकस्य क्रिययैव साधुत्वम् | १०० |
| फलांशोऽपि भावनायां विशेषणं कारकाण्यपि । | १०२ |
| स्वीयोपपत्तिप्रदर्शनम् । | १०३ |
| कर्त्रादौ विहितेऽन्यादीनां क्रिययैवान्वयः | १०५ |
| अस्मिन् विषये वास्तविकं मतम् टी० | १०६ |
| भावनायाः पदाथकदेशत्वेऽप्यन्वयकथनम् | १०६ |
| अस्मिन् विषये नवीनमतम् । टी० | १०७ |
| तेषामाशयप्रदर्शनम् । टी० | १०७ |
| पूर्व[illegible] | १०८ |

विषयः । पृष्ठम् ।

धातोरेव भावना वाच्यानाख्यातस्येत्यत्र विनिगमकम् । ११०

नानृतमितिनिषेधः क्रत्वर्थं न सिद्ध्येदितिशङ्का । ११२

नानृतमिति निषेधस्य क्रत्वर्थत्वादिविवरणम् । टी० ११२

उक्तमीमांसकशङ्कानिरासः । ११२

श्रुत्यादिषड्विधप्रमाणोदाहरणानि टी० ११३

अत्र विरोधोदाहरणादि । टी० ११४

अत्र पूर्वपक्षसिद्धान्तौ । टी० ११४

विरोधोदाहरणान्तराणि० टी० ११५

क्रतुयुक्तपुरुषधर्माङ्गीकरणे जञ्जभ्यमानदृष्टान्तः । ११६

उक्तदृष्टान्तविवरणम् । टी० ११६

धात्वर्थनिरूपणोपसंहारः ११७

इति धात्वर्थनिर्णयः ।

---

## अथ लकारार्थनिर्णयः ।

लकारार्थप्रारम्भः । ११८

लडर्थविवेचनम् । ११८

खण्डकाल एव वर्तमानवाच्यः । टी० ११९

वर्तमानत्वादि लडादि द्योत्यम् । १२१

लिडर्थवर्णनम् १२२

परोक्षे इत्यस्याव्यावर्तकत्वस्य शङ्कापूर्वकं निवारणम् । १२३

शब्दादप्यपरोक्षज्ञानमस्तीतिशङ्कानिवारणम् । १२४

व्यातेने इति किरणावलीप्रयोगस्य साधुत्वविचारः १२४

अत्र नैयायिकमतम् । टी० १२४

लुडर्थविवरणम् । १२६

अत्र तात्पर्यकथनम् । टी० १२६

लृडर्थकथनम् । १२६

अत्र परमतम् । १२६

अत्रान्यमतम् । टी० १२७

अत्र तत्वम् । टी० १२७

लोडर्थविवरणम् । १२७

विषयः । पृष्ठम् ।

लङादिङितामर्थवर्णनम् । १२९

अत्र तात्पर्यकथनम् । टी० १२९

विध्यादीनामुदाहरणादि टी० १२९

इष्टसाधनत्वमेव विध्यर्थः १३१

अस्य विवरणम् । टी० १३०

इष्टसाधनत्वस्य विध्यर्थत्वे ज्योतिष्टोमेनेत्यत्र तृतीयोपपत्तिः । टी० १३१

इष्टसाधनत्वस्य प्रवर्तनात्वे मण्डनमिश्रसम्मतिः । १३६

कृतिसाध्यत्वस्य प्रवर्तनात्वे विवरणम् । टी० १३४

अत्र परमतम् । टी० १३६

अत्रगुरुमतम् । टी० १३७

अस्य खण्डनपूर्वकमपरमतम् । टी० १३८

परेत्वित्यादिना मतान्तरकथनम् टी० १३९

अभिधालिङादिनिरूपिताशक्तिरित्यादिविस्तरेण कथनम् । टी० १४०

आचार्यमतम् । टी० १४२

लुङर्थनिरूपणम् । टी० १४२

अस्मिन् विषये संग्रहेण कथनम् । १४३

लुङर्थकथनम् । १४३

लकारार्थनिरूपणसमाप्तिः, १४६

इति लकारार्थनिर्णयः ।

---

## अथ सुबर्थनिर्णयः ।

सुबर्थनिर्णयप्रारम्भः । १४७

कर्मण आश्रय एवार्थः । १४७

अत्र नैयायिकमतम् । १४९

जानातीत्यत्रावरणभङ्गरूपधात्वर्थफलाश्रयत्वात्कर्मता १५१

चैत्रो ग्रामं गच्छतीत्यत्रचैत्रस्यकमतावारणम् । १५२

चैत्रश्चैत्रमित्यत्र शाब्दबोधापत्तिवारणम् । १५३

अत्र नैयायिकरीत्यावारणम् । १५४

परत्वनिर्वचनम् । टी० १५५

प्रसङ्गतो दीधितिकारमतकथनम् टी० १५५

विषयः । पृष्ठम् ।

चैत्रोग्रामंगच्छतीत्यत्रनैयायिकरीत्या परिष्कृतरूपवर्णनम् । टी० १५६
अत्र शङ्कापूर्वकं समाधानम् टी० १५६
पूर्वोक्तनैयायिकमतखण्डनम् । टी० १५७
कर्मणः सप्तविधत्वम् । १५९
निर्वर्त्यस्य पारिभाषिकत्वम् । १६०
विकार्यलक्षणनिर्वचनपूर्वकं परमतं टी० १६०
काष्ठं भस्मकरोतीत्यत्र नैयायिकमतेन विवेचनम् । टी० १६४
अत्र वास्तविकमतकथनपूर्वकं विकृतिकर्मणो लकाराभिधाने बाधकाभावः । टी० १६२
विकृतिवाचकाद्द्वितीयापत्तिवारणम् । टी० १६३
अत्र केचिदित्यादिना मतान्तरकथनम् । टी० १६३
पुनरावृत्तः सुवर्णपिण्ड इत्यादिभाष्यस्यापरमतेनार्थकथनम् । १६३
प्राप्यकर्मणः कथनम् । १६३
अन्यपूर्वककर्मण उदाहरणकथनम् । टी० १६५
कर्तृतृतीयाद्यर्थविवेचनम् । १६६
स्वातन्त्र्यस्य निर्वचनम् । १६७
अत्रान्यमतम् । टी० १६७
कर्मकर्तृव्यपदेशाच्च इति सूत्रीयशङ्कासमाधानम् । १६८
कृत्याश्रयत्वस्याव्याप्तत्वप्रदर्शनपूर्वकमन्यदपि विवेचनम् । टी० १६९
अत्र वास्तविकमतम् । १७०
तृतीयार्थत्वेन निरुक्तस्य त्रैविध्यम् । १७१
करणत्वनिर्वचनं तदर्थं वाक्यपदीयप्रदर्शनम् । १७२
अत्र परमतम् १७२
अत्रापरमतम् । टी० १७३
अत्र वास्तविकमतकथनम् टी० १७३
नैयायिकमतकथनम् टी० १७३
कर्ताशास्त्रार्थवत्वादित्यधिकरणविरोधसमाधानम् । १७४

विषयः । पृष्ठम् ।

समाधानस्यान्वाचयमात्रताकथनम् १७५
सप्तम्यर्थनिर्वचनपूर्वकन्त्रैविध्यप्रतिपादनम् । १७७
अत्र नैयायिकमतम् । टी० १७८
पञ्चम्यर्थप्रतिपादनम्-वाक्यपदीयप्रदर्शनञ्च । १७९
उक्तवाक्यपदीयस्यार्थस्य विवेचनम् १७९
पञ्चम्यर्थवर्णने मतान्तरकथनम् । टी० १८०
वृक्षात् त्यजतीतिप्रयोगवारणम् । १८३
अपादानस्य त्रैविध्यप्रतिपादनम् १८४
चतुर्थ्यर्थस्य कथनम् । १८५
विप्राय गां ददातीत्यत्र धात्वर्थकथनपूर्वकं नैयायिकमतकथनम् । टी० १८६
अत्रापरमतम् । टी० १८६
सम्प्रदानस्यैव शेषित्वम् १८७
रजकाय वस्त्रन्ददातीत्यस्योपपत्तिः, वृत्तिकारमतं च १८८
अत्र तादर्थ्यवर्णनप्रसङ्गेन प्रयोजनत्ववर्णनम् । टी० १८९
सम्प्रदानत्वस्य त्रैविध्यम् । १९०
प्रकृतिप्रत्ययार्थयोरभेदसंसर्गकथनम् १९१
मतान्तरप्रदर्शनम् १९१
कैयटमतप्रदर्शनम् । टी० १९१
विभक्तीनां धर्मवाचकत्वनिराकरणम् । १९२
धर्ममात्रवाचकत्ववर्णनपूर्वकषष्ठ्यर्थनिरूपणम् । १९२
कारकषष्ठ्याः शक्तिवाचकत्वम् । १९६
शक्तिः कारकमिति मते कैयटाद्याशयवर्णनम् । टी० १९८
घटज्ञानातीत्यत्र विषयतायां लक्षणेति-नैयायिकमतस्य खण्डनम् । १९९
द्विविधनियमस्य प्रदर्शनम् । २००


इति सुबर्थनिर्णयः ।

---

## अथ नामार्थनिर्णयः ।


नामार्थनिरूपणम् । २०३
जातेर्वाच्यत्वे व्यक्तिबोधः लक्षणया । २०५

विषयः । पृष्ठम् ।
केवलजातिवाच्यत्वपक्षे दिगर्थप्रदर्शनम् । टी० २०६
अत्र वास्तविकमतप्रदर्शनम् २०६
अन्ये तु मतम् २०६
केवलव्यक्तिरेव एकशब्दार्थः २०६
व्यक्तेर्वाच्यत्वपक्षे जातेर्वाच्यत्वशङ्का २०७
नह्याकृतिपदार्थस्येति भाष्याद्विशिष्टं वाच्यम् । २१०
व्यक्तेर्द्रव्यपदेन व्यवहारो भवति टी० २०८
उक्तपक्षद्वयमपि न विचारसहमिति शङ्का टी० २०९
उभयोरुभयं पदार्थं इतिभाष्यस्य सामान्याभिप्रायः । टी० २१०
वास्तविकमतकथनपूर्वकमन्यमतकथनम् । टी० २१०
अन्ये तु रीत्या उभयोरुभयं पदार्थः इति कथनम् २११
विशिष्टवाच्यतापक्षे एकमित्यस्याभिप्रायवर्णनम् । २१२
जातिव्यक्त्योर्द्वयोरपि वाच्यता । २१३
लिङ्गस्यापि वाच्यत्वाभिप्रायेण त्रिकोपपत्तिः । २१३
पशुनेत्यत्र पुंस्त्वस्य विवक्षितत्वान्नपशुस्त्रियायागः । २१६
सङ्ख्यासहितत्वे कारकसहितत्वे च चतुष्कपञ्चकत्वोपपत्तिः । २१७
लिङ्गेशक्तिग्रहविषयताभावेन त्रिकपक्षानुपपत्तिशङ्का । टी० २१७
केचिन्मतेन लिङ्गस्यापि प्रातिपदिकार्थत्वमेव । टी० २१८
एकवचनत्वादेरननुगतत्वशङ्कापूर्वकं तत्समाधानम् । टी० २१९
विभक्तीनां द्वित्वादिवाचकत्वं द्योतकत्वंच । २२०
शब्दोऽपि शाब्दबोधे भासते । २२२
क्वचित् षोढापि प्रातिपदिकार्थः । २२३
अनुकार्यानुकरणयोर्भेदविवक्षायामभिप्रायकथनम् । २२४
अतिप्रसङ्गाय वृत्तिजन्यपदोपस्थितिहेतुः । २२५
सम्बन्धस्योभयनिरूप्यत्वादित्यत्राभिप्रायवर्णनम् । टी० २२६
परे तु मतरीत्या प्रदर्शनम् २२६
अनुकार्यानुकरणयोरभेदपक्षे साधकम् २२८
अभेदपक्षेऽर्थवत्वाद्यभावेऽपिसाधुत्वम् २२८

इति नामार्थनिर्णयः ।

---

## अथ समासशक्तिनिर्णयः ।

समासभेदाः । २३१
समासैकार्थीभावजहत्स्वार्थाद्यर्थनिरूपणम् । टी० २३१
सुपांसुपेतिश्लोकोक्तानामुदाहरणानि २३२
समासस्तु चतुर्धेतिप्राचीनोक्तमयुक्तम् २३४
सिद्धान्तेऽव्ययीभावादिकानां लक्षणानि । २३४
जहत्स्वार्थाजहत्स्वार्थवृत्त्योस्त्रैविद्ध्यकथनम् । २३७
अजहत्स्वार्थपक्षाभिप्रायः । २३९
वृत्तित्रैविध्यनिरूपणम् । २४०
समासे भिन्नैव शक्तिः । २४१
अत्र प्रसङ्गतो रथकारादिदृष्टान्तप्रदर्शनम् । २४४
समासेशक्तेर्भेदे साधकान्तरवर्णनम् । २४६
समासे शक्त्यनङ्गीकारे दूषणान्तरम् २४७
समानाधिकरणप्रातिपदिकार्थयोरभेधान्वयव्युत्पत्तिभङ्गापत्तिरूपदोषः २४८
समासे शक्तेः साधकान्तरम् । २४९
चरमपदेऽपि लक्षणानङ्गीकर्त्तुं शक्या २५०
प्रसङ्गतश्चरमवर्णस्य वाचकताकल्पनारूपदोषप्रदर्शनम् । २५१
व्यपेक्षावादिनैयायिकादिमतम् । २५२
शक्त्यग्रहे लक्षणयापि विशिष्टार्थप्रत्ययो न भवति । २५४
नैयायिकादिमताभिप्रायवर्णनम् टी० २५५
उक्तमतखण्डनम् । २५६

| विषयः । | पृष्ठम् । |
|---|---|
| अतिष्प्रातिपदिकमितिन्यासप्रदर्शनेन शङ्का । | २५९ |
| समासग्रहणस्य नियामकत्वाभाववर्णनेन शङ्का । | २५९ |
| चित्रगुमानयेत्यादौ कर्मत्वाद्यनन्वयापत्तिशङ्का । | २६० |
| प्रकृतित्वाश्रये विभक्त्यर्थान्वय इतिकल्पनया शङ्का । | टी० २६० |
| समासे शक्त्यस्वीकारे राजपुरुषादावनन्वयप्रसङ्गः । | २६४ |
| विशेषणविभक्तेरभेदार्थिकत्वे शङ्कासमाधानम् । | २६४ |
| राजपुरुष इत्यादौ लक्षणया न निर्वाहः | २६६ |
| मीमांसकैरपि वषट्कर्तुरित्यादिस्थलेषु विशिष्टशक्तिरभ्युपेया । | २६८ |
| विशिष्टशक्त्यङ्गीकारेऽरुणाधिकरणारम्भः । | २६९ |
| राज्ञः पुरुष इत्यस्य विग्रहत्वसाधनम् | २७० |
| निषादस्थपत्यधिकरणसिद्धान्तसाधनम् । | २७२ |
| नानार्थे तात्पर्यान्निर्णयः । | २७३ |


इति समासशक्तिनिर्णयः ।

## अथ शक्तिनिर्णयः ।


| | |
|---|---|
| शक्तेः स्वरूपवर्णनम् । | २७५ |
| वृत्तिद्वैविध्यप्रतिपादनम् । | टी० २७५ |
| बोधकारणतारूपयोग्यतैव शक्तिरितिमते शङ्का | २७७ |
| सङ्केतस्य स्वरूपेण हेतुत्वाप्रतिपादनम् । | २७९ |
| स्वातन्त्र्येण बोधकताज्ञानस्याकारणत्वम् । | २८१ |
| शाब्दबोधे कार्यकारणद्वयापेक्षया शक्तिजन्योपस्थितेरेवकारणत्वम् । | २८३ |
| वृत्तिजन्योपस्थितित्वेन शब्दबोधहेतुत्वकथनम् । | २८५ |
| उक्तहेतुत्वस्य निराकरणम् । | २८६ |
| समूहालम्बनस्मरणवतो शाब्दबोधापत्तिदानम् । | २८७ |
| पदनिष्ठार्थबोधजनकत्वस्य शक्तित्वासम्भवः | टी० २८७ |
| शक्तिलक्षणाज्ञानयोरेकरूपेणैव हेतुत्वकथनम् । | टी० २८८ |
| शक्तिग्राहकाणामुदाहरणानि । | टी०२९० |
| नानार्थेषु शक्तिनियामकानि । | २९१ |
| शक्तित्रैविध्यकथनम् । | २९३ |
| लक्षणाया विचारः । | २९३ |
| लाक्षणिकं पदं नानुभावकमित्यस्यार्थवर्णनम् । | २९५ |
| बोधकताशक्तिर्भाषाशब्देषु नास्ति | २९६ |
| अपभ्रंशानां साक्षादवाचकत्वे प्रमाणप्रदर्शनम् । | २९७ |
| अपभ्रंशानामपि साक्षाद्बोधकत्ववर्णनम् । | ३०० |
| भाषाशब्दानां कोशे गणनावारणम् | ३०१ |
| भाषाशब्दानां साधुत्वस्य निवारणम् | ३०१ |
| अतिरिक्तशक्तिग्रहोपायप्रदर्शनम् । | ३०६ |


इति शक्तिनिर्णयः ।

## अथ नञर्थनिर्णयः ।


| | |
|---|---|
| नञर्थप्रदर्शनम् । | ३०७ |
| अत्र पक्षान्तरप्रदर्शनम् । | ३०९ |
| नञोभेदार्थकत्वेऽपि नाब्राह्मणमानयेत्यत्र लोष्टानयनापत्तिः । | टी० ३१० |
| क्वचिन्नञः विकल्पाप्रसक्त्याप्रतिषेधार्थकत्वम् । | टी० ३११ |
| केचिन्मतेन विकल्पाप्रसक्त्यापि न निषेधबोधकत्वम् । | ३१२ |
| सादृश्यादिकं न नञ्वाच्यम् | ३१३ |
| अभावस्य विशेष्यत्वमपि । | ३१४ |
| अनेकमन्यपदार्थे इत्यादिष्वेकवचनं सर्वसंग्रहार्थम् । | ३१६ |

विषयः । पृष्ठम् ।

प्रसज्यप्रतिषेधार्थकनञो व्यवस्थाकथनम् । ३१७

अन्योन्याभावस्य पृथक् शक्तिकल्पने शङ्का । टी० ३१९

नञोऽत्यन्ताभावबोधकत्वे भूतले न घटः इत्यादौ अन्योन्याभावापत्तिःटी० ३२०

इति नञर्थनिर्णयः ।


---

## अथ निपातार्थनिर्णयः ।


निपातानां द्योतकत्वमेव । ३२२

द्योतकत्वे युक्तिप्रदर्शनम् । ३२४

चादीनामपि द्योतकत्वमेव । ३२५

प्रादीनां वाचकत्वे आपत्तिप्रदर्शनम् । ३२६

भेदान्वयबोधे स्वीकृतस्य कार्यकारणभावस्य निपातातिरिक्तत्वस्य खण्डनम् । ३२७

अत्र नैयायिकमतम् । टी० ३२९

निपातानां वाचकत्वे दोषान्तरम् । ३३०

उपसर्गस्यार्थवत्वाभावेन विभक्त्यनुपपत्तिदोषवारणम् । ३३२

मीमांसकमतेनापि निपातानां द्योतकत्वम् । ३३३

निपातानां वाचकत्वाङ्गीकरणं नतु द्योतकत्वम् । ३३५

निपातानां केचिद्वाचकाः केचिद्द्योतका इतिमतस्य खण्डनम् । ३३६

निपातत्वं परमतवदस्माकं मतेऽपि । ३३७

अत्र नैयायिकानां मतम् । टी० ३३८

इवार्थकथनपूर्वकमेवकारस्यार्थकथनम् । टी० ३४१

एवकारार्थविषये केचिन्मतम् । टी० ३४१

अत्र केचिन्मतम् ३४१

वास्तविकमतकथनम् । टी० ३४२

इति निपातार्थनिर्णयः ।


---

## अथ त्वादिभावप्रत्ययार्थनिर्णयः ।


भावप्रत्ययार्थकथनम् । ३४४

राजपुरुषत्वादिकानामर्थवर्णनम् । ३४४

प्रकृत्यर्थविशिष्टे द्रव्यमात्रवाचकत्वं तद्धितस्येतिमतस्य खण्डनम् । ३४५

क्त्वादिषु सिद्धान्ते पक्षद्वयम् । ३४७

पक्षद्वयोपपादनम् । ३४७

अत्र वाक्यपदीयस्य प्रदर्शनम् । ३४७

श्लोकोक्तशब्दपरा अमीत्यस्य विवरणम् । ३४७

सामान्यतःपदप्रकारक एव शक्तिग्रहः ३५०

अत्र नैयायिकमतम् । टी० ३५१

इति त्वादिभावप्रत्ययार्थविचारः ।


---

## अथ देवताप्रत्यार्थनिर्णयः ।


देवताप्रत्ययार्थनिरूपणम् ३५२

प्रकृत्यर्थस्य प्रत्ययार्थैकदेशे विशेषणत्वम् । ३५३

प्रकृतेर्लक्षणा प्रदेये च शक्तिः । ३५४

क्रीडायां ण इत्यादावपि रीतिरियम् ३५६

सास्मिन्पौर्णमासीत्यादिकानामर्थवर्णनम् । टी० ३५७

इति देवतादिप्रत्ययार्थनिर्णयः ।


---

## अथाभेदैकत्वसंख्यानिर्णयः ।


वृत्तावभेदैकत्वसङ्ख्या प्रतीयते । ३६३

अत्र कारणत्वप्रदर्शनम् । ३६४

सङ्ख्याया एकत्वेन प्रतीता दृष्टान्तरीत्यादिकथनम् । टी० ३६६

इति अभेदैकत्वसंख्यानिर्णयः ।


---

## अथ संख्याविवक्षानिर्णयः ।


उद्देश्यविधेययोः सङ्ख्याविवक्षाविवक्षानिर्णयः । ३७०

विधेयविशेषणं विवक्षितमित्यपि नियमो नास्ति ३७२

विषयः । पृष्ठम् ।

विधेयविशेषणं विवक्षितमनुवाद्यस्य नियमो नास्ति ३७२

भिन्नमित्यादौ नकारद्वयोपपादनम् । ३७३

इतिसंख्याविवक्षानिर्णयः ।

---

## अथ क्त्वाद्यर्थनिर्णयः ।

क्त्वाप्रत्ययादेरर्थनिरूपणम् । ३७५

अधीत्य तिष्ठतीत्यादि प्रयोगाणामुपपत्तिः ३७७

क्त्वाप्रत्ययादीनां द्योतकत्वम् । ३७८

समानकर्तृकयोः पूर्वकाले इत्यत्र नवीनमतम् । टी० ३७९

समानकर्तृकत्वस्य क्त्वाऽवाच्यत्वे शङ्कापूर्वकं समाधानम् । टी० ३७९

पूर्वपक्षिणा दत्ततृतीयापत्तेर्वारणम् । ३८०

इति क्त्वाद्यर्थनिर्णयः ।

---

## अथ स्फोटः ।

आसत्त्यादिकं शाब्दबोधे सहकारि । ३८५

आसत्यादिलक्षणे नवीनमतम् । टी० ३८५

योग्यताज्ञानं कारणमिति मतम् । टी० ३८५

योग्यताज्ञानस्य हेतुत्ववारणम् । टी० ३८५

आकाङ्क्षानिर्वचनं तस्याः सहकारित्वसमर्थनम् । टी० ३८६

नवीनमतेनाकाङ्क्षानिर्वचनम् । ३८७

वाक्यस्फोटस्यैव वास्तवत्वमन्येषामवास्तवत्वकथनम् । ३८७

वर्णस्फोटनिरूपणम् । ३८९

स्थानिवाचकत्वनिराकरणम् । ३९३

तत्र प्रयुक्तहेतुनिरूपणम् । ३९४

लकारस्य वाचकत्वे आपत्तिप्रदर्शनम् ३९६

शानचः कर्ता वाच्य इतिशङ्काया उत्तरम् । ३९६

पदस्फोटनिरूपणम् । ३९८

सुप्तिङन्तंपदमिति पदत्वस्वीकर्तृमतम् । ४००

सुप्तिङन्तचयरूपवाक्यस्य वाचकत्ववर्णनम् । ४०१

वाक्यस्फोटसंसाधनम् । ४०२

अत्र बृहद्भूषणविवेचनप्रदर्शनम् टी० ४०४

वास्तविकमतप्रदर्शनपूर्वकं वदन्तीति विवेचनम् । टी० ४०५

वाक्यार्थस्यापूर्वत्वाच्छक्तिग्रहः कथमिति शङ्कायाः वारणम् । ४०६

समुदितार्थे विशिष्टवाक्यस्यैव प्रथमं शक्तिग्रहः । ४०७

अत्र मीमांसकादीनामियमेवगतिः । ४०९

अखण्डपदवाक्यस्फोटवर्णनप्रारम्भः। ४११

अत्राभिप्रायवर्णनम् । ४११

वायुसंयोगस्य वाचकत्वनिराकरणम् ४१२

वर्णानां प्रत्येकं वाचकत्वादिशङ्कानिवारणम् । ४१३

अत्रकैयटमतं तत्खण्डनं च । ४१५

स्वमते दोषवारणम् । ४१५

कैयटाशयवर्णनम् । टी० ४१५

पर्यायस्थलेषु एक एव स्फोटो नाना वेत्यादि शङ्कानिवारणम् । ४१७

वर्णातिरिक्तस्फोटसाधने शब्दकौस्तुभयुक्तिप्रदर्शनम् । ४२०

स्फोटस्य वैशिष्ट्येन वर्णनम् । टी० ४२१

अखण्डस्फोटाङ्गीकारे शास्त्रप्रामाण्यनिवारणम् । ४९२

भृगुवल्युक्तदृष्टान्तप्रदर्शनम् । ४२३

अलीकप्रकृतिप्रत्ययकल्पनया स्फोटबोधासम्भवखण्डनम् । ४२५

वर्णेषूत्पत्तेरनुभवविरुद्धत्वम् । ४२६

वर्णस्थले ध्वनिसत्वे प्रमाणकथनम् । ४२९

मीमांसकमतेन शङ्कातत्समाधा० टी० ४२९

जातिस्फोटप्रारम्भः ४३२

नैयायिकमतेन वर्णानित्यत्वसाधनम् । टी० ४३०

| विषयः । | पृष्ठम् । |
| --- | --- |
| स्फोटे गत्वाद्यभ्युपेयत्वे शङ्कातत्समाधानञ्च । | ४३२ |
| वर्णानामस्तित्वेऽपि न वाचकत्वं किन्तुजातेः । | ४३४ |
| जातेः प्रत्येकं वर्णेषु सत्वेऽपि न प्रत्येकाद्बोधापत्तिः । | ४३५ |
| अत्राभिप्रायवर्णनम् । | ४३६ |
| का सा जातिरिति प्रश्नस्योत्तरम् । | ४३८ |
| ब्रह्मदर्शने गोत्वादिजातेरप्यनित्यत्वम् । | ४३९ |
| अत्राशयवर्णनम् । | टी० ४३८ |
| सत्यांशेऽभिप्रायवर्णनम् । | ४३९ |
| स्फोटस्य यौगिकत्वप्रदर्शनपूर्वकं ग्रन्थसमापनम् । | ४४१ |
| स्वप्रकाशत्वादिनिरूपणम् । | टी० ४४२ |
| टीकाकारस्य स्वीयनामोल्लेखनपूर्वकं टीकासमापनम् । | ४४२ |

इति सटीकस्य भूषणसारस्य विषयसूचिका ।

प्राप्तिस्थानम्—

चौखम्बा-संस्कृत-पुस्तकालय,

बनारस सिटी ।

# अथ भूषणसारस्थमूलकारिकासङ्कलनम् ।

फणिभाषितभाष्याऽब्धेः शब्दकौस्तुभ उद्धृतः ।
तत्र निर्णीत एवार्थः सङ्क्षेपेणेह कथ्यते ॥ १ ॥
फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः
फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम् ॥ २ ॥
फलव्यापारयोस्तत्र फले तङ्यकचिणादयः
व्यापारे शप्श्नमाद्यास्तु द्योतयन्त्याश्रयाऽन्वयम् ॥ ३ ॥
उत्सर्गोऽयं कर्मकर्तृविषयादौ विपर्य्ययात् ।
तस्माद् यथोचितं ज्ञेयं द्योतकत्वं यथागमम् ॥ ४ ॥
व्यापारो भावना सैवोत्पादना सैव च क्रिया ।
कृञोऽकर्म्मकतापत्तेर्नहि यत्नोऽर्थ इष्यते ॥ ५ ॥
किन्तूत्पादनमेवातः कर्म्मवत्स्याद्यगाद्यपि ।
कर्म्मकर्त्तर्य्यन्यथा तु न भवेत्तद् दृशेरिव ॥ ६ ॥
निर्वर्त्त्ये च विकार्य्ये च कर्मवद्भाव इष्यते ।
नतु प्राप्ये कर्मणीति सिद्धान्तोऽत्र व्यवस्थितः ॥ ७ ॥
तस्मात् करोतिर्धातोः स्याद् व्याख्यानं, नत्वसौ तिङाम् ।
पक्ववान् कृतवान् पाकं किं कृतं पक्वमित्यपि ॥ ८ ॥
किं कार्य्यं पचनीयं चेत्यादि दृष्टं हि कृत्स्वपि ।
किञ्च क्रियावाचकतां विना धातुत्वमेव न ॥ ९ ॥
सर्व्वनामाव्ययादीनां यावादीनां प्रसङ्गतः ।
नहि तत्पाठमात्रेण युक्तमित्याकरे स्फुटम् ॥ १० ॥
धात्वर्थत्वं क्रियात्वञ्चेद्धातुत्वं च क्रियार्थता ।
अन्योऽन्यसंश्रयः स्पष्टस्तस्मादस्तु यथाकरम् ॥ ११ ॥
अस्त्यादावपि धर्म्यंशे भाव्येऽस्त्येव हि भावना ।
अन्यत्राशेषभावात्तु सा तथा न प्रकाशते ॥ १२ ॥
फलव्यापारयोरेकनिष्ठतायामकर्म्मकः ।
धातुस्तयोर्धर्म्मिभेदे सकर्म्मक उदाहृतः ॥ १३ ॥
आख्यातशब्दे भागाभ्यां साध्यसाधनरूपता ।
प्रकल्पिता यथाशास्त्रे स घञादिष्वपि क्रमः ॥ १४ ॥
साधकत्वेन क्रिया तत्र धातुरूपनिबन्धना ।

सिद्धभावस्तु यस्तस्याः स घञादिनिवन्धनः ॥ १५ ॥
सम्बोधनान्तं कृत्वोऽर्थाः कारकं प्रथमो वतिः ।
धातुसम्बन्धाधिकारनिष्पन्नमसमस्तनञ् ॥ १६ ॥
तथा यस्य च भावेन षष्ठी चेत्युदितं द्वयम् ।
साधुत्वमष्टकस्यास्य क्रिययैवावधार्य्यताम् ॥ १७ ॥
यदि पक्षेऽपि वत्यर्थः कारकञ्च नञादिषु ।
अन्वेति त्यज्यतां तर्हि चतुर्थ्याः स्पृहिकल्पना ॥ १८ ॥
अविग्रहा गतादिस्था यथा ग्रामादिकर्म्मभिः ।
क्रियासम्बध्यते तद्वत्कृतपूर्व्यादिषु स्थिता ॥ १९ ॥
कृत्वोऽर्थाः क्त्वातुमुन् वत्स्युरिति चेत् सन्ति हि क्वचित् ।
अतिप्रसङ्गो नोद्भाव्योऽभिधानस्य समाश्रयात् ॥ २० ॥
भेद्यभेदकसम्बन्धोपाधिभेदनिवन्धनम् ।
साधुत्वं तदभावेऽपि बोधो नेह निवार्य्यते ॥ २१ ॥
वर्त्तमाने परोऽक्षे श्वो भाविन्यर्थे भविष्यति ।
विध्यादौ प्रार्थनादौ च क्रमाज्ज्ञेया लडादयः ॥ २२ ॥
ह्योभूते प्रेरणादौ च भूतमात्रे लङादयः ।
सत्यां क्रियातिपत्तौ च भूते भाविनि लृङ् स्मृतः ॥ २३ ॥
आश्रयोऽवधिरुद्देश्यः सम्बन्धः शक्तिरेव वा ।
यथायथं विभक्त्यर्थाः सुपां कर्मेति भाष्यतः ॥ २४ ॥
एकं द्विकं त्रिकं चाथ चतुष्कं पञ्चकं तथा ।
नामाऽर्थ इति सर्व्वेऽमी पक्षाः शास्त्रे निरूपिताः ॥ २५ ॥
शब्दोऽपि यदि भेदेन विवक्षा स्यात् तदा तथा ।
नोचेच्छ्रोत्रादिभिः सिद्धोऽप्यसावर्थोऽवभासते ॥ २६ ॥
अत एव गवित्याह भूसत्तायामितीदृशम् ।
न प्रातिपदिकं नापि पदं साधु तु तत् स्मृतम् ॥ २७ ॥
सुपां सुपा तिङा नाम्ना धातुनाथ तिङां तिङा ।
सुबन्तेनेति च ज्ञेयः समासः षड्विधो बुधैः ॥ २८ ॥
समासस्तु चतुर्द्धेति प्रायोवादस्तथापरः ।
योऽयं पूर्वपदार्थादिप्राधान्यविषयः स च ॥ २९ ॥
भौतपूर्व्यात्सोऽपि रेखागवयवदाश्रितः ।
जहत्स्वार्थाजहत्स्वार्थे द्वे वृत्ती ते पुनस्त्रिधा ॥ ३० ॥
भेदः संसर्ग उभयं वेति वाच्यव्यवस्थितेः ।
समासे खलुभिन्नैव शक्तिः पङ्कजशब्दवत् ॥ ३१ ॥

बहूनां वृत्तिधर्म्माणां वचनैरेव साधने ।
स्यान्महद्गौरवं तस्मादेकार्थीभाव आश्रितः ॥ ३२ ॥
चकारादिनिषेधोऽथ बहुव्युत्पत्तिभञ्जनम् ।
कर्तव्यं ते न्यायसिद्धं त्वस्माकं तदिति स्थितिः ॥ ३३ ॥
अषष्ठ्यर्थबहुव्रीहौ व्युत्पत्त्यन्तरकल्पना ।
कॢप्तत्यागश्चास्ति तव तत् किं शक्तिं न कल्पयेः ॥ ३४ ॥
आख्यातं तद्धितकृतोर्यत्किञ्चिदुपदर्शकम् ।
गुणप्रधानभावादौ तत्र दृष्टो विपर्ययः ॥ ३५ ॥
पर्यवस्यच्छाब्दबोधाऽविदूरप्राक्क्षणस्थितेः ।
शक्तिग्रहेऽन्तरङ्गत्वबहिरङ्गत्वचिन्तनम् ॥ ३६ ॥
इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा ।
अनादिरर्थैः शब्दानां सम्बन्धो योग्यता तथा ॥ ३७ ॥
असाधुरनुमानेन वाचकः कैश्चिदिष्यते ।
वाचकत्वाविशेषे वा नियमः पुण्यपापयोः ॥ ३८ ॥
सम्बन्धिशब्दे सम्बन्धो योग्यतां प्रति योग्यता ।
समयाद् योग्यतासंविन्मातापुत्रादियोग्यवत् ॥ ३९ ॥
नञ्समासे चापरस्य प्राधान्यात् सर्वनामता ।
आरोपितत्वं नञ्द्योत्यं नह्यसोऽप्यतिसर्ववत् ॥ ४० ॥
अभावो वा तदर्थोऽस्तु भाष्यस्य हि तदाशयात् ।
विशेषणं विशेष्यो वा न्यायतस्त्ववधार्य्यताम् ॥ ४१ ॥
द्योतकाः प्रादयो येन निपाताश्चादयस्तथा ।
उपास्येते हरिहरौ लकारो दृश्यते यथा ॥ ४२ ॥
तथान्यत्र निपातेऽपि लकारः कर्म्मवाचकः ।
विशेषणाद्ययोगोऽपि प्रादिवच्चादिके समः ॥ ४३ ॥
पदार्थः सदृशाऽन्वेति विभागेन कदापि न ।
निपातेतरसङ्कोचे प्रमाणं किं विभावय ॥ ४४ ॥
शरैरुस्रैरिवोदीच्यानुद्धरिष्यन् रसानिव ।
इत्यादावन्वयो न स्यात् सुपाश्च श्रवणं ततः ॥ ४५ ॥
नञ्समासे चापरस्य द्योत्यं प्रत्येव मुख्यता ।
द्योत्यमेवार्थमादाय जायन्ते नामतः सुपः ॥ ४६ ॥
निपातानां वाचकत्वमन्वयव्यतिरेकयोः ॥
युक्तं वा नतु तद्युक्तं परेषां मतमेव नः ॥ ४७ ॥
निपातत्वं परेषां यत्तदस्माकमिति स्थितिः ।

व्यापकत्वाच्छक्ततायास्त्ववच्छेदकमिष्यते ॥ ४८ ॥
कृत्तद्धितसमासेभ्यो मतभेदनिबन्धनम् ।
त्वतलोरर्थकथनं टीकायां हरिणा कृतम् ॥ ४९ ॥
अत्रार्द्धजरतीयं स्याद् दर्शनान्तरगामिनाम् ।
सिद्धान्ते तु स्थिते पक्षद्वयं त्वादिषु तच्छृणु ॥ ५० ॥
प्रयोगोपाधिमाश्रित्य प्रकृत्यर्थप्रकारताम् ।
धर्म्ममात्रं वाच्यमिति यद्वा शब्दपरा अमी ॥ ५१ ॥
जायन्ते तज्जन्यबोधप्रकारे भावसंज्ञिते ।
प्रत्ययार्थस्यैकदेशे प्रकृत्यर्थो विशेषणम् ॥ ५२ ॥
अभेदश्चात्र संसर्ग आग्नेयादावियं स्थितिः ।
देवतायां प्रदेये च खण्डशः शक्तिरस्तु वा ॥ ५३ ॥
प्रदेय एव वा शक्तिः प्रकृतेर्वास्तु लक्षणा ।
देवतायां निरूढेति सर्वे पक्षा अमी स्थिताः ॥ ५४ ॥
क्रीडायां णस्तदस्यास्तीत्यादावेषैव दिक् स्मृता ।
वस्तुतो वृत्तिरेवेति नात्रातीव प्रयत्यते ॥ ५५ ॥
अभेदैकत्वसङ्ख्याया वृत्तौ भानमिति स्थितिः ।
कपिञ्जलालम्भवाक्ये त्रित्वं न्यायाद् यथोच्यते ॥ ५६ ॥
लक्ष्यानुरोधात् सङ्ख्यायास्तन्त्राऽतन्त्रे मते यतः ।
पश्वैकत्वादिहेतूनामाश्रयणमनाकरम् ॥ ५७ ॥
विधेये भेदकं तन्त्रमन्यतो नियमो नहि ।
ग्रहैकत्वादिहेतूनामाश्रयणमनाकरम् ॥ ५८ ॥
रदाभ्यां वाक्यभेदेन नकारद्वयलाभतः ।
क्षतिर्नैवास्ति तन्त्रत्वे विधेये भेदकस्य तु ॥ ५९ ॥
अव्ययकृत इत्युक्तेः प्रकृत्यर्थे तुमादयः ।
समानकर्तृकत्वादि द्योत्यमेषामिति स्थितिः ॥ ६० ॥
वाक्यस्फोटोऽतिनिष्कर्षे तिष्ठतीति मतस्थितिः ।
साधुशब्देऽन्तर्गता हि बोधका नतु तत्स्मृताः ॥ ६१ ॥
व्यवस्थितेर्व्यवहृतेस्तद्धेतुन्यायतस्तथा ।
किञ्चाख्यातेन शत्राद्यैर्लडेव स्मार्यते यदि ॥ ६२ ॥
कथं कर्तुरवाच्यत्ववाच्यत्वे तद्विभावय ।
तरबाद्यन्ततिङ्क्ष्वस्ति नामता कृत्स्विव स्फुटा ॥ ६३ ॥
नामार्थयोरभेदोऽपि तस्मात्तुल्योऽवधार्य्यताम् ।
अथादेशा वाचकाश्चेत् पदस्फोटस्ततः स्फुटः ॥ ६४ ॥

घटेवेत्यादिषु नहि प्रकृत्यादिभिदा स्थिता ।
वस्नसादाविवेहापि सम्प्रमोहो हि दृश्यते ॥ ६५ ॥
हरेऽवेत्यादि दृष्ट्वा च वाक्यस्फोटं विनिश्चिनु ।
अर्थं विशिष्य सम्बन्धाग्रहणं चेत् समं पदे ॥ ६६ ॥
लक्षणादधुनाचेत्तत्पदेऽर्थेऽस्त्यस्तु तत् तथा ।
सर्वत्रैव हि वाक्यार्थो लक्ष्य एवेति ये विदुः ॥ ६७ ॥
भाट्टास्तेऽपीत्थमेवाहुर्लक्षणाया ग्रहे गतिम् ।
पदे न वर्णा विद्यन्ते वर्णेष्ववयवा नच ॥ ६८ ॥
वाक्यात् पदानामत्यन्तं प्रविवेको न कश्चन ।
पञ्चकोशादिवत्तस्मात् कल्पनैषा समाश्रिता ॥ ६९ ॥
उपेयप्रतिप्रत्यर्था उपाया अव्यवस्थिताः ।
कल्पितानामुपाधित्वं स्वीकृतं हि परैरपि ॥ ७० ॥
स्वरदैर्घ्याद्यपि ह्यन्ये वर्णेभ्योऽन्यस्य मन्यते ।
शक्यत्व इव शक्तत्वे जातेर्लाघवमीक्ष्यताम् ॥ ७१ ॥
औपाधिको वा भेदोऽस्तु वर्णानां तारमन्दवत् ।
अनेकव्यक्त्यभिव्यङ्ग्या जातिः स्फोट इति स्मृतः ॥ ७२ ॥
कैश्चित् व्यक्तय एवास्या ध्वनित्वेन प्रकल्पिताः ।
सत्यासत्यौ तु यौ भागौ प्रतिभावं व्यवस्थितौ ॥ ७३ ॥
सत्यं यत्तत्र सा जातिरसत्या व्यक्तयो मताः ।
इत्थं निष्कृष्यमाणं यच्छब्दतत्त्वं निरञ्जनम् ।
ब्रह्मैवेत्यक्षरं प्राहुस्तस्मै पूर्णात्मने नमः ॥ ७४ ॥

इति भूषणसारस्थमूलकारिकासङ्कलनम् ।

---

प्राप्तिस्थानम्—
चौखम्बा संस्कृत पुस्तकालय,
बनारस सिटी ।



# वैयाकरणभूषणसारः

## दर्पणपरीक्षाभ्यां सहितः ।

श्रीलक्ष्मीरमणं नौमि गौरीरमणरूपिणम् ।

---

दर्पणः

रमाप्रेमाऽऽमज्जज्जगदवनदक्षं मधुहृतश्रुतिस्तोमाऽऽहृत्या परिजनितवेदाननमुदम् ।
अखण्डानन्दाढ्यं निखिलजनहृत्कञ्जनिलयं हयग्रीवं वन्दे प्रकृतकृतिविघ्नक्षतिकृते ॥ १ ॥

सत्येकस्मिन्नपि बाधके समवहितसाधकसहस्रादपि कार्योत्पत्तेरदर्शनादपेक्षितप्रारिप्सितप्रत्यूहापोहायानुष्ठितं भगवत्स्तुतिरूपं मङ्गलं ग्रन्थकृच्छिष्यशिक्षार्थमादौ निबध्नाति-*श्रीलक्ष्मीरमणमिति*। अधिकरणव्युत्पन्नल्युडन्त'रमण'शब्देन कर्तृषष्ठ्यन्त-'लक्ष्मी'पदस्य समासः । तेन च श्रीसहितशब्दस्य मध्यमपदलोपी समासः । शाकपार्थिवादेराकृतिगणत्वात् । तदुपादानञ्च सशक्तिकस्यैव भगवतो जगन्निर्माणकारणत्वमिति ध्वनयितुम् । *नौमीति* । "णु स्तुतौ" इति धातोरस्मच्छब्दाप्रयोगेऽपि

परीक्षा

॥ श्रीगणेशाय नमः ॥

प्रणम्य जानकीनाथं पाणिन्यादिमुनीन् गुरून् ।
बालानां सुखबोधाय सिद्धान्तस्थापनाय च ॥ १ ॥
टीका भूषणसारस्य परीक्षा नामिका शुभा ।
भवदेवात्मजेनाथ भैरवेण वितन्यते ॥ २ ॥

सत्येकस्मिन्नपि बाधके साधकसहस्रस्याकिञ्चित्करतया प्रतिबन्धकाभावस्यावश्यकतया प्रारिप्सितसमाप्तिप्रतिबन्धकविघ्नविघाताय कृतमिष्टदेवतानतिरूपं मङ्गलं शिष्यशिक्षायै निबध्नाति—*श्रीलक्ष्मीरमणमित्यादिना* । अधिकरणल्युडन्तरमणशब्देन कर्तृषष्ठ्यन्तलक्ष्मीशब्दस्य समासः । तेन च श्रीशब्दस्य श्रिया युक्तो लक्ष्मीरमण इति लौकिकविग्रहे समासे शाकपार्थिवादित्वाद्युक्तशब्दलोपः । श्रीशब्दोपादानं च सशक्तिकस्य भगवतो जगदुपादानकारणत्वमित्यभिव्यञ्जयितुम् । *नौमीति* । अत्रास्मदोऽनुपादानेऽपि पूर्वसूत्रात् स्थानिनीत्यस्यानुवृत्योत्तमः पुरुषः । णुधात्वर्थश्चोत्कृष्टगुणाश्रयत्वप्रकारकबोधानुकूलव्यापाररूपा स्तुतिः, तद्विशेष्यकश्च शाब्दबोधः । एतच्छास्त्रप्रवर्त्तकत्वेन शिवस्याभ्यर्हितत्वात्तस्यापि स्तुतिरवश्यङ्कार्य्येति तस्यापि तत्कृतैवेति ध्वनयितुमाह—*गौरीरमणेति* । स्वरूपपररूपशब्दस्य गौरीरमणशब्दस्य

**स्फोटरूपं यतः सर्वं जगदेतद् विवर्त्तते ॥ १ ॥**

दर्पणः

गम्यमानतदर्थसामानाधिकरण्यस्य लकारार्थकर्त्तरि सत्त्वाद् वर्त्तमानक्रियाद्योतकलडु-त्तमपुरुषः। "अस्मद्युत्तमः" (पा०सू०-१-४-१०७)इत्यत्र पूर्वसूत्रात् स्थानिनीत्य-स्यानुवृत्तेः। स्तुतिश्चोत्कृष्टगुणवत्त्वप्रकारकबोधानुकूलो व्यापारः। स एव च प्रकृत-धात्वर्थः। बोधरूपधात्वर्थफलाश्रयत्वाल्लक्ष्मीरमणस्य कर्मता। एवञ्च वैयाकरणमते प्रकृते श्रीसहितलक्ष्मीरमणाश्रयकोत्कृष्टगुणवत्त्वप्रकारकबोधानुकूलो मदभिन्नाश्रयको वर्त्तमानशब्दप्रयोगरूपो व्यापार इति वाक्यार्थः। नन्वेतच्छास्त्रप्रवर्त्तकत्वेन शिवस्याभ्यर्हिततरत्वात्तत्स्तुत्यात्मकमङ्गलमपि कुतो नाचरितमत आह-*गौरीरम-णरूपिणमिति*। स्वरूपपररूपपदेन गौरीरमणपदस्य षष्ठीसमासस्ततोऽदन्तत्वनि-बन्धनो मत्वर्थीय इनिः। गौरीरमणो रूपं स्वरूपं यस्येति षष्ठ्यर्थबहुव्रीहिणोक्तार्थ-लाभेऽपि लाघवमूलक-'न कर्मधारयाद्' इतिन्यायस्य "प्रत्ययस्थात्" (पा०सू० ७-३-४४) इति सूत्रे "असुव्वतः" इति प्रयोगमुदाहरता भाष्यकृताऽनादृतत्वान्न मत्वर्थीयानुपपत्तिः। दृश्यते चेदृशस्थले प्रयोगद्वैविध्यम्—

'शिवाय विष्णुरूपाय विष्णवे शिवरूपिणे।'

इत्यादि। तथा च तदभिन्नमित्यर्थः। प्रमाणं चात्रोक्तपुराणवाक्यमेव। एवञ्च कार्यवैचित्र्यस्य कारणवैचित्र्यनियम्यत्वाज्जगदवनादिकार्यवैचित्र्योपपत्तये तत्तद्गुण-प्रधानमूर्तिपरिग्रहो भगवतो न पारमार्थिको भेद इति स्तुतिकर्मता शिवस्य नानुपपन्ने-ति भावः। उत्कृष्टगुणवत्त्वमेवाविष्करोति—*यत इति*। वेदान्तिमते मायाशबलस्य ब्रह्मणो जगदुपादानत्वात् "जनिकर्त्तुः" (पा० सू० १-४-३०) इत्युपादानहेताव-पादानसंज्ञानिबन्धना पञ्चमी। 'गुण' इत्युक्तेः "विभाषा" (पा० सू० २-३-२५) इत्यस्य न प्रसक्तिः। तथाच यस्मादुपादानहेतोरित्यर्थः। सर्वं जगत् स्फोटरूपं विव-

परीक्षा

षष्ठीसमासः, ततो मत्वर्थीय इनिः। लाघवमूलको 'न कर्मधारयात्' इति न्यायस्तु 'असुब्वत' इति "प्रत्ययस्थात्" इति सूत्रस्थभाष्यप्रयोगादनित्य इति न मत्वर्थी-यानुपपत्तिः। नन्वनयोर्भेदाद्गौरीरमणमित्यनुपपन्नमिति भ्रमितव्यम्? कार्य्यस्य वैचित्र्यसिद्धयै विजातीयरूपपरिग्रहेण भगवतो विभिन्नव्यवहारो न त्वेतयोः (१)पार-मार्थिको भेद इति सिद्धान्तात्।

यदुक्तं प्राक् तन्निष्ठोत्कृष्टगुणाश्रयत्वप्रकारकज्ञानमित्यादि, तदेतदुपपादयति—*स्फोटरूपमिति*। यत एतत्सर्वं स्फोटरूपं जगद्विवर्त्ते इति सम्बन्धः। स्फुटत्यर्थो-ऽस्मादिति स्फोटः बाहुलकादपादाने घञ्। स च स्फोटो वाचकः शब्दः। रूप्यते ज्ञायते इति रूपो ऽर्थः, स्फोटश्च रूपश्चतयोः समाहारः स्फोटरूपम्। वाच्यवाचकयो-श्चाभेदः। एतदित्युभयोः समीपतरवर्त्तित्वान्नानुपपन्नम्। *विवर्त्तते*—उत्पद्यते। ननु "सदेव सौम्येदमग्र आसीत्"इति श्रुत्या प्रपञ्चस्य नित्यत्वं प्रतीयत इति कथमेतदिति शङ्कावारणायाह—*जगदिति*। गच्छतीति जगदिति "वर्त्तमाने पृषत्"इत्यादिना

(१) अत एव—"विष्णुरुद्रान्तरं यच्च यो ब्रूते मूढधीस्तु सः।
गौरवादिषु घोरेषु नरकेषु पतत्यधः" इति सङ्गच्छते॥

दर्पणः

र्त्तत इति योजना । स्फुटत्यभिव्यक्तीभवत्यर्थोऽस्मादिति स्फोटो नामाद्यात्मकः शब्दः । बाहुलकादपादाने घञ् । रूप्यते निरूप्यते इति रूपमर्थः । तयोः समाहारद्वन्द्वे नपुंसकैकवचनान्तम् । वाच्यवाचकस्वरूपमिति तदर्थः । "नामरूपे व्याकरवाणि" ( छान्दोग्ये ६।३।२ ) इति श्रुतेः । *एतत्*—अत्यन्तसान्निध्येन बुद्धया विषयीक्रियमाणम् । *विवर्त्तते* । उत्पद्यत इत्यर्थः । धातोरुपसृष्टत्वात् । ननु नामरूपात्मकस्य, "सदेव सोम्येदमग्र आसीत्" ( छान्दोग्ये ६।२१ ) इति श्रुत्या सनातनत्वबोधनात् कथमुत्पत्तिशालित्वमत आह-*जगदिति* । "वर्त्तमाने पृषत्" ( उणादिसू० पा० २ सू० २५० ) इति निपातनात्साधु । तथा च गच्छति तिरोधत्त इति व्युत्पत्त्या तिरोधाने उक्ते यत्तिरोधत्ते तदाविर्भवतीति नियमेनाविर्भावस्य लाभात्स एवात्रोपसृष्टार्थः । एवञ्च सत्त्वेनैतस्य सनातनत्वेऽपि नामत्वादिनाविर्भावाद्यभ्युपगमान्नोक्तश्रुतिविरोधो; नापि "तस्मादेतस्माद्वा आत्मन आकाशः सम्भूतः" ( तैत्तिरीयके २।१ ) इत्याद्युत्पत्तिबोधकतद्विरोधः । यत्किञ्चिन्नामरूपात्मकस्यान्यतोऽपि सम्भवादाह-*सर्वमिति* । यावदर्थकम् । उत्पत्तिरूपलक्षणमवनादेः । तेन जगत्कर्तृत्वादिरूपोत्कृष्टधर्मस्य स्तुत्यतावच्छेदकस्य लाभः । अत्र च "यतो वा इमानि भूतानि जायन्ते; येन जातानि जीवन्ति; यत् प्रयन्त्यभिसंविशन्ति" ( तैत्तिरीयके ३।१ ) इत्याद्याः श्रुतयः प्रमाणम् ।

मतान्तरे-'यत' इति पञ्चमी निमित्तहेतुतायाम् । व्युपसृष्टवृतुधातोराद्यक्षणसम्बन्धरूपोत्पत्तिरर्थः । ननु सर्वान्तर्गतवियदाद्यात्मकपदार्थस्यानादितया कथमुत्पत्तिमत्त्वमत आह-*जगदिति* । स्थावरजङ्गमात्मकमित्यर्थः । तथा च गच्छति नश्यतीति व्युत्पत्त्या विनाशित्वे बोधिते विनाशिभावस्य जन्यत्वनियमेन तस्योत्पत्तिर्न विरुद्धेतिभावः । एतत्कल्पे स्फोटपदं शास्त्रानुमानप्रतीतपरम् । तादृशं रूपं यस्येतिव्युत्पत्त्या स्फोटरूपमिति भगवतो विशेषणं बोध्यम् । शेषं पूर्ववत् । यद्वा स्तुत्यतावच्छेदकरूपं प्रदर्शयितुं विशिनष्टि-*स्फोटरूपमिति* । वक्ष्यमाणव्युत्पत्त्या समस्तार्थप्रकाशकस्वरूपमित्यर्थः । तदुपपादयन्नेव स्तुत्यतावच्छेदकान्तरमपि दर्शयति-*यत इति* । यस्मादुपादानादिति सार्वविभक्तिकतसिना यस्मिन्नधिष्ठाने इति वाऽर्थः । विवर्तश्चातात्त्विकोऽन्यथाभावः । अपरित्यक्तपूर्वरूपस्य रूपान्तरप्रकारकप्रतीतिविषयत्वमिति यावत् । जगच्छब्दश्च रूढ्या नामरूपपरः । तथाच यस्मिन्नधिष्ठाने एतत्सर्वं जगद्भूतेन्द्रियादितत्तद्रूपेण प्रतिभातीत्यर्थः । "नेह नानाऽस्ति" ( काठके २।४।११ ) इति श्रुत्या बोधितबाधस्यापि जगतः प्रतिभासे अधिष्ठानसत्ताया एव नियामकत्वात् समस्तार्थप्रकाशकत्वोपपत्तिः, अप्रच्युतस्वरूपस्यैव ब्रह्मणो जगद्रूपेण विवर्तनादविकारित्वरूपोत्कृष्टधर्मावगतिश्च । अत्र च "तमेव भान्तमनुभाति सर्वम्" ( काठके २।५।१५, मुण्डके २।२।१२ ) इत्याद्याः कूटस्थस्वरूपप्रतिपादिकाश्च श्रुतयः प्रमाणत्वेनानुसन्धेया इति भावः । अत्र भगवद्विषयकरतिभावस्य हेत्वलङ्कारोऽङ्गम् ॥१॥

जगदुपादानत्वेन स्तुत्वा अपवर्गसाधनज्ञानविषयत्वेनैतच्छास्त्रव्याख्यातृशेषभूषण-

परीक्षा

अयं साधुः । एतेन नश्वरत्वस्य लाभः । नाशश्च तिरोभावः । एवञ्च यस्य तिरोभावो भवति तस्याविर्भावो भवतीति भगवतो जगद्विवर्त्तोपादानत्वस्य नानुपपत्तिः । अत एव श्रुतौ-"यतो वा इमानि भूतानि जायन्ते; येन जातानि जीवन्ति; यत् प्रयन्त्यभि-

**अशेषफलदातारं भवाब्धितरणे तरिम् ।**
**शेषाऽशेषार्थलाभार्थं प्रार्थये शेषभूषणम्(१) ॥ २ ॥**

---

दर्पणः

त्वेन च स्तुवञ्छेषोक्तसमस्तसिद्धान्तप्रतिपत्तये प्रार्थयते-*अशेषेति* । फलं-प्रवृत्त्युद्देश्यम् । स्वर्गादियत्किञ्चित्फलदातृत्वस्य देवतान्तरसाधारण्यादाह-*अशेषेति* । तथा चापवर्गरूपफलस्याप्यशेषपदेन कुक्षीकृतत्वात् तद्दातृत्वस्यानन्यसाधारण्यात् प्रार्थ्यतावच्छेदकधर्मलाभः; तदेव विशदयति-*भवाब्धीति* । भव एवाब्धिरिति रूपकम् । अब्धीयग्राहादिसदृशकामलोभाद्याक्रान्तत्वाद् दुरवगाहत्वेन भवे तदारोपः । तेन च भवस्य दुस्तरत्वं व्यज्यते । तस्य तरणं पारदेशप्राप्तिस्तस्मिन्नित्यर्थः । *तरिम्*—साधनम् । यद्यपि तरन्त्यनया इति व्युत्पत्त्या तरणसाधनं तरिपदार्थस्तथाऽपि तद्घटकीभूततरणस्य सन्निहितपदेनैव लाभात् द्विरुक्तिर्मा भूदिति विशेष्यमात्रपरतया व्याख्यातम् । मुक्तिसाधनज्ञानविषयमिति यावत् । मुक्तिश्च वेदान्तिमतेऽज्ञाननिवृत्तिसमकाला स्वरूपप्राप्तिः । नन्वज्ञाननिवृत्तेरधिकरणाऽनतिरिक्तायाः, स्वरूपस्याऽपि च सिद्धत्वात्तद्रूपायास्तस्यास्तत्त्वज्ञानसाध्यत्वानुपपत्तिरिति चेत्; न । परेषां प्रागभावस्येव सिद्धाया एवाज्ञाननिवृत्तेर्योगक्षेमसाधारण्याःसाध्यतायाः सम्भवात् । अधिकमन्यतोऽवधेयम् ।

नैयायिकास्तु–आत्यन्तिकदुःखध्वंसो मोक्षः । ध्वंसे आत्यन्तिकत्वञ्च–स्वसमानाधिकरणदुःखासमानकालिकत्वम् । अत्रैव तत्त्वज्ञानस्योपयोगः । विशेष्यांशस्य स्वासाधारणसामग्र्या एव सम्भवात्, नित्यसुखाभिव्यक्तिर्वा स इत्याहुः ।

*शेषाशेषेति* । कर्मधारयोत्तरपदः षष्ठीतत्पुरुषः । तस्य च लाभपदेन समासः । लाभायेदमिति विग्रहे चतुर्थ्यन्तलाभपदस्यार्थपदेन सः । शेषः-पतञ्जलिः, शेषांशत्वा-

परीक्षा

संविशन्ति"इति प्रतिपादितम् ।

मुक्तिसाधनज्ञानविषयत्वेनैतच्छास्त्रे प्रधानीभूतो यः शेषस्तत्भूषणत्वेन च स्मृतः शिवो भगवानभीप्सितं सर्वं दास्यतीत्याशयेन तं प्रार्थते-*अशेषफलदातारमिति* । अत्राशेषपदोपादानेन यत्किञ्चित्फलदातृदेवतान्तरादुत्कर्षलाभः । अशेषफलमध्ये मोक्षस्याऽपि घटकत्वान्मोक्षदातृत्वं यद्यपि लब्धम्; तथाऽपि तस्य फलस्य सर्वोत्कृष्टत्वसूचनाय पुनराह—*भवाब्धीति* । भवः संसारः स एवाब्धिः ग्राहादितुल्यलोभकामाद्याक्रान्तत्वेन अस्याब्धित्वेन निरूपणम् । एतेन दुस्तरत्वस्य लाभः, तस्य तरणं परं पारगमनन्तच्चात्र; ततो निवृत्तिस्तत्र तरिम्-पोतम् , तत्साधनमितियावत् । एतेन मुक्तिसाधनज्ञानविषयत्वं स्पष्टतयैव लभ्यत इति । मुक्तिश्चाज्ञाननिवृत्तिपूर्वकस्वस्वरूपप्राप्तिः । निवृत्तिश्चाभावरूपाधिष्ठानात्मिका स्वस्वरूपमपि ब्रह्मात्मकमेव । तच्च यद्यपि न जन्यं तथाऽपि योगक्षेमसाधारणसाध्यतेह विवक्षिता । *शेषाशेषेति* । कर्मधारयोत्तरपदकः षष्ठीतत्पुरुषः । शेषः पतञ्जलिस्तत्प्रतिपादितत्वं षष्ठ्यर्थः । एतेन

---

(१) "वाग्देवी यस्य जिह्वाग्रे नरीनर्ति सदा मुदा । भट्टोजिदीक्षितमहं पितृव्यं नौमि सिद्धये"॥
अत्रायं श्लोक उपलभ्यते क्वचित् ।

पाणिन्यादिमुनीन् प्रणम्य पितरं रङ्गोजिभट्टाभिधं
द्वैतध्वान्तनिवारणादिफलिकां पुम्भाववाग्देवताम् ।

---

दर्पणः

त्तस्य । तथा च शेषोक्तभाष्यप्रतिपादितनिखिलसिद्धान्तज्ञानायेत्यर्थः । *शेपभूषण-मिति* । शेपोऽनन्तः, स भूषणं यस्येत्यर्थः । यतोऽस्य-भूषणं शेषोऽतोऽस्य शेषोक्त-सिद्धान्तलब्ध्यै प्रार्थनमिति साभिप्रायविशेष्यस्योपादानात्परिकराङ्कुरोऽलङ्कारोऽत्र भगवद्विषयकरत्यङ्गम् ॥ २ ॥

प्रेक्षावत्प्रवृत्तये। इतरग्रन्थेभ्यः स्वग्रन्थस्योत्कर्षं प्रदर्शयन्नेव दर्शनीयविषयप्रयोज-नसम्बन्धाधिकारिणां मध्येऽवश्यप्रदर्शनीयं विषयं दर्शयति-*पाणिन्यादीति* । पुम्भा-ववाग्देवतामिति पितुर्विशेषणम् । पुंसो भावो यस्या इति व्यधिकरणबहुव्रीहिपूर्वपदकः कर्मधारयो वाग्देवतापदेन । अथवा-पुम्भावशब्दोऽर्शआद्यजन्तः । तथा चाऽऽविष्कृ-तपुंविग्रहां सरस्वतीमित्यर्थः । *द्वैतध्वान्तेति* । द्वाभ्यां प्रकाराभ्यामितो ज्ञातो विरुद्धोभयधर्मप्रकारकज्ञानविषयो धर्मीति यावत् । यद्वा-द्वयोर्भावो द्विता । स्वनिष्ठै-कविशेष्यतानिरूपितप्रकारतासम्बन्धेन विरुद्धनानाधर्मांशे धर्मिणोऽपि भावत्त्वसम्भ-वाद् द्वितापदार्थोऽपि धर्म्येव । तत्र भवं द्वैतं संशयात्मकज्ञानम् । अथ वा-द्वयोरने-कस्य भावो द्विता—नानात्वं, तत्सम्बन्धिज्ञानं द्वैतम्, परमार्थदशायामद्वितीयस्यैव ब्रह्मणोऽङ्गीकारेण श्रुतिबाधितनानात्वावगाह्यन्तःकरणवृत्तिविशेषरूपम्—अविद्यापरप-र्यायं-मिथ्याज्ञानम् । तदेव ध्वान्तम्-तमः, तत्त्वाऽऽच्छादकत्वात्तन्निवारणमेकं मुख्यं

परीक्षा

महाभाष्यार्थस्य लाभः । *शेषभूषणम्*—शेषोऽनन्तः स भूषणं यस्य तम् । अत्र विशेष्यस्य तादृशशिवस्य प्रार्थनया शेषो यस्य भूषणं तदधीनत्वात्तत्प्रार्थनया तदुक्तार्थलाभोऽवश्यमेव भविष्यतीत्यभिप्रायलाभ इति (१)परिकराङ्कुरालङ्कारलाभः ।

एतच्छास्त्रे मुनित्रयस्य प्राधान्यान्निर्विघ्नपरिसमाप्त्यर्थं तन्नतिरूपं मङ्गलं कुर्वन् पितुरपि उत्कृष्टदेवतात्वात्तमपि नमस्कुर्वन् विषयप्रदर्शनस्य प्रेक्षावत्प्रवृत्त्यर्थमाव-श्यकत्वात्, तदपि करोति—*पाणिन्यादितीति । *पुम्भाववाग्देवतामिति* । इदं पितुर्विशेषणम्, पुंसो भावो धर्मो यस्यां सा, सा चासौ वाग्देवता चेति समासः । एवं चाविष्कृतपुंविग्रहा या सरस्वती तद्रूप एव तस्यैव विशेषणान्तरम् । *द्वैतध्वान्ते-त्यादि* । द्वैतशब्दो द्वाभ्यां विरुद्धधर्माभ्यामितो ज्ञातो यो धर्मो तत्परः, स एव द्वैतस्तस्मिन् यत् ध्वान्तमज्ञानं विषयतासम्बन्धेन वर्त्तमानं विरुद्धधर्मप्रकारकं ज्ञानमेव तन्निवारणफलिकामित्यर्थः । अथवा द्वयोर्भावो द्विता द्वितैव द्वैतं द्वित्वरूपा संख्या तस्मिन्, यद् ध्वान्तमेकविशेष्यकद्वित्वप्रकारकं ज्ञानमेव तन्निवारणफलिकाम् । "एक-मेवाद्वितीयं ब्रह्म" "नेह नानास्ति किञ्चन"इत्यद्वितीयत्वप्रतिपादिका या श्रुतिस्तद्वय-

---

(१) अस्यालङ्कारस्य लक्षणं साहित्यदर्पणे नास्ति, कुवलयानन्दकारिकायां तु दृश्यते ।
"साभिप्राये विशेष्ये तु भवेत्परिकराङ्कुरः । चतुर्णां पुरुषार्थानां दाता देवश्चतुर्भुजः" ॥६२॥
अत्र परिकराङ्कुरोऽलङ्कारो; न तु परिकर इति न विस्मर्तव्यम् ।

ढुण्ढिं गौतमजैमिनीयवचनव्याख्यातृभिर्दूषितान्
सिद्धान्तानुपपत्तिभिः प्रकटये तेषां वचो दूषये(१) ॥ ३ ॥

प्रारिप्सितप्रतिबन्धकोपशमनाय कृतं श्रीफणिस्मरणरूपं मङ्गलं शिष्यशिक्षार्थं निबध्नन् चिकीर्षितं प्रतिजानीते—

फणिभाषितभाष्याऽब्धेः शब्दकौस्तुभ उद्धृतः ।

---

दर्पणः

फलं यस्यास्तामित्यर्थः । अनधिकारिणां स्वाश्रितानामेकतरकोटिकज्ञानोत्पादकत्वेनाधिकारिणां सन्मात्रावलम्बनज्ञानप्रदत्वेन पुम्भाववाग्देवतायास्तन्निवर्तकत्वमिति भावः । *ढुण्ढि* । गणपतिं, प्रणम्येत्यनुषज्यते । *सिद्धान्तानिति* । भाष्यकारादिनिर्णीतार्थाः सिद्धान्तास्तानित्यर्थः । *उपपत्तिभिः* । साधकप्रमाणोपन्यासरूपाभियुक्तिभिरित्यर्थः । *दूषये* । उपपत्तिभिरेव बाधकप्रमाणोपन्यासरूपाभिरित्यर्थः ।

एतेनाऽन्यग्रन्थेभ्यः स्वग्रन्थस्योत्कृष्टत्वं ध्वनितम् । तथाच वैयाकरणसिद्धान्तोऽत्र विषयः प्रदर्शितः । तेनैव तज्ज्ञानं प्रयोजनं, प्रतिपाद्यप्रतिपादकभावः सम्बन्धः, सिद्धान्तजिज्ञासुरधिकारीति त्रयोऽन्येऽपि दर्शितप्राया इति भावः ॥ ३ ॥

ग्रन्थादावनुष्ठितस्य मङ्गलस्य तन्निबन्धनस्य च प्रयोजनमाह—*प्रारिप्सितेत्यादिना* । समाप्तये इति विहाय 'प्रतिबन्धकोपशमनाय' इत्युक्त्या अलौकिकाऽविगीतशिष्टाचारानुमितमङ्गलस्य विघ्नध्वंस एव फलम् । जन्मान्तरीयसमाप्तिमुद्दिश्य शिष्टानां मङ्गलाननुष्ठानान्मङ्गलसमाप्त्योः शरीरनिष्ठप्रत्यासत्त्यैव कार्यकारणभावस्य कल्पनीयतया तस्य च नास्तिकसमाप्तौ व्यभिचारेण समाप्तेस्तत्त्वासम्भवात्, किन्तु कार्यमात्रं प्रति प्रतिबन्धकाभावस्य हेतुतया दुरितरूपप्रतिबन्धकनिरास एव मङ्गलस्योपयोगी ; न तु समाप्तावपि, विघ्नध्वंसेनान्यथासिद्धत्वात्, समाप्तिस्त्वन्यत्र क्लृप्तसत्कारणकलापादिति सूच्यते । *फणिस्मरणेति* । फणी—शेषः । "शेषाख्यं धाम मामकम्" इति भगवदुक्तेस्तत्स्मरणस्य विघ्ननिवारकत्वात् । मङ्गलस्य नतिस्तुत्यादिभेदेन नानात्वमिति सूचयितुं स्मरणेत्युक्तम् । *प्रतिजानीत(१) इति*। प्रतिज्ञाफलं तु

परीक्षा

वस्थापकमिति यावत् । *ढुण्ढिम्*—गणपतिम् । *सिद्धान्तान्*—भाष्यकारसम्मतसिद्धान्तान् । *उपपत्तिभिः*—साधकप्रमाणोपन्यासरूपायुक्तिभिः । *दूषये इति* ॥ बाधकप्रमाणोपन्यासेनेति शेषः । एतेन वैयाकरणसिद्धान्तो विषयस्तज्ज्ञानं प्रयोजनं तज्जिज्ञासुरधिकारी प्रतिपाद्यप्रतिपादकभावः सम्बन्ध इति त्वर्थादुक्तं भवति ।

ग्रन्थादौ कृतस्य मङ्गलस्य प्रयोजनमाह-*प्रारिप्सितस्येत्यादिना* । अत्र प्रतिबन्धकोपशमनायेति कथनेन विघ्नध्वंसस्यैव मङ्गलफलत्वमुक्तम् । आत्मनिष्ठप्रत्यासत्या चैतयोः कार्य्यकारणभावः । समाप्तिस्तु विघ्नध्वंसघटितकारणकलापाद्भवति । स्मरणरूपमित्यनेन मङ्गलस्य नतिस्मृत्युभयरूपत्वं ध्वनितम् । *चिकीर्षितमित्यादि* ।

---

(१) अस्याग्रे—"नत्वा गणेशपादाब्जं गुरूनथ सरस्वतीम् । श्रीकौण्डभट्टः कुर्वेहं वैयाकरणभूषणम् ॥", क्वचिदयं श्लोक उपलभ्यते ।

**तत्र निर्णीत एवार्थः सङ्क्षेपेणेह कथ्यते ॥ १ ॥**

उद्धृत इति । अत्र 'अस्माभिः' इति शेषः । भाष्याऽब्धेः शब्दकौस्तुभ उद्धृत इत्युक्तिस्तु शब्दकौस्तुभोक्तानामर्थानामाधुनिकोत्प्रेक्षितत्वनिरासाय । अन्यथा तन्मूलकस्यास्य ग्रन्थस्याप्याधुनिकोत्प्रेक्षितसारत्वापत्तौ पाणिनीयानामनुपादेयतापत्तेः । तत्र निर्णीत इत्युक्तिरितोऽप्यधिकजिज्ञासुभिः शब्दकौस्तुभे द्रष्टव्यमिति ध्वनयितुम् ॥१॥

## अथ धात्वर्थनिर्णयः ।

प्रतिज्ञातमाह—

**फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः ।**
**फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम् ॥ २ ॥**

---

दर्पणः

शिष्यावधानं बोध्यम् ।

उद्धरणकर्त्राकाङ्क्षायामाह—*अस्माभिरिति* । मूले-*कथ्यत इति* । हर्यादिनिबद्धकारिकाभिरिति शेषः ॥ १ ॥

### अथ धात्वर्थनिर्णयः ।

तत्र स्फोटस्यार्थबोधजनकत्वात् तेनैवाऽऽकाङ्क्षानिवृत्तेश्च वाक्यस्फोटस्य 'वाक्यस्फोटोऽतिनिष्कर्षे' इत्यादिना सिद्धान्तयिष्यमाणत्वेऽपि प्रतिवाक्यं सङ्केतग्रहासम्भवात् तदन्वाख्यानस्य लघूपायेनासुकरत्वाच्च तत्र कल्पनया पदानि विभज्य तेष्वपि प्रकृतिप्रत्ययभागांस्तथैव प्रविभज्य, कल्पिताभ्यामन्वयव्यतिरेकाभ्यां तत्तदर्थेष्वपि प्रकृतिप्रत्ययानामनादिसङ्केतबोधनद्वारा साधुत्वान्वाख्यायके महर्षिप्रणीते शास्त्रे प्रक्रियानिर्वाहाय पदवर्णस्फोटावपि सम्मताविति दर्शयँस्तिङन्तार्थप्रधाने सुप्तिङ्चयादिरूपे वाक्ये धात्वर्थस्य प्राधान्यात्तमेवादौ निरूपयितुमाह मूले-*फलव्यापारयोरिति* ।

परीक्षा

कर्त्तुमिष्टं यत्तत्कर्मिका भट्टोजिदीक्षितकर्त्तृका प्रतिज्ञेति बोधः । प्रतिज्ञा च–निरूपणीयार्थविशेष्यनिरूपणविषयत्वप्रकारकज्ञानानुकूलव्यापाररूपा । स च व्यापारः शब्दोच्चारणमेव ।

उद्धृत इत्युक्तेः कर्त्राकाङ्क्षा भवति; तच्छान्तये आह-*अस्माभिरिति* । एतेन मूलस्था कारिका भट्टोजिदीक्षितकर्त्तृका इति सूचितम् । *कथ्यत इति* । हर्य्यादिनिबद्धकारिकाभिरिति शेषः ।

### अथ धात्वर्थनिर्णयः ।

सिद्धान्ते वाक्यस्फोटस्यैव व्यवस्थापनं भविष्यति; तत्र वाक्यं सुप्तिङ्चयरूपम्; तयोरपि तिङर्थस्य प्राधान्यमित्यादौ तिङन्तार्थो निरूपणीयस्तत्रापि धात्वर्थस्य प्राधान्येन भानादादौ धात्वर्थं निरूपयति—*फलव्यापारयोरित्यादिना* । सप्तम्यर्थो

धातुरित्यत्र स्मृत इति वचनविपरिणामेनान्वयः।
फलं विक्लित्त्यादि।

---

दर्पणः

तत्र धातुरित्यस्य 'स्मृताः' इति न विशेषणम्। विभिन्नवचनान्तोपस्थापितत्वात्। विशेष्यवाचकपदोत्तरविभक्तितात्पर्यविषयसंख्याविरुद्धसंख्याया अविवक्षायां विशेष्यविशेषणवाचकपदयोः समानवचनकत्वनियमात्। अत एव 'नीलो घटा' इत्यादेर्न साधुत्वम्। तद्विवक्षायां तु 'वेदाः प्रमाणं' 'जात्याकृतिव्यक्तयः पदार्थः' (न्यायसूत्रे-२।२।१८) इत्यादौ विभिन्नवचनत्वमपि। न च प्रकृते तद्विवक्षायां बीजमस्तीत्यतो वचनविपरिणामेनान्वयं दर्शयति भूषणसारे—*धातुरित्यत्रेति*।

ननु यदुद्देशेन श्रुतेर्लोकतो वा प्रवृत्तिरवगता तत्त्वं फलत्वम्। अन्येच्छानधीनेच्छाविषयत्वमिति यावत्। तदुक्तं हरिणा—

"यस्यार्थस्य प्रसिद्ध्यर्थमारभ्यन्ते पचादयः।
तत्प्रधानं फलं तेषां न लाभादि प्रयोजनम्॥"इति।

"स्वरितञितः" (पा०सू० १।३।७२) इति सूत्रेऽपि फलपदस्य प्रवृत्त्युद्देश्यमुख्यफले एव प्रसिद्धेः। तथा च तादृशफलस्य धातुवाच्यत्वे विक्लित्यनुकूलव्यापारदशायां तण्डुलस्य धात्वर्थतादृशफलाश्रयत्वाभावात् कर्मत्वानुपपत्तिः, तज्जन्यतादृशफलाश्रयस्य तदापत्तिश्चेत्यत आह—*फलं विक्लित्त्यादीति*। अयमाशयः—फलपदस्य लोके रूढ्या तादृशार्थोपस्थापकत्वेऽप्यत्र पारिभाषिकार्थपरतैव। अन्यथा सकर्मकत्वादिव्यवहारो दुरुपपादः स्यादिति। तत्त्वं च—तद्धात्वर्थजन्यत्वे सति तद्धातुजन्योपस्थितिविषयत्वं तद्धात्वर्थत्वं वा। जन्यत्वं च—जन्यत्वप्रकारकप्रतीतिविषयत्वम्। तेन सत्तादौ नातिप्रसङ्गः। गम्याद्यर्थव्यापारजन्यविभागादावतिप्रसङ्गवारणाय विशेष्यं, तदर्थव्यापारेऽतिप्रसक्तिनिरासाय च सत्यन्तम्। तच्च विक्लित्त्यादीनामक्षतम्। तस्यापि प्रकृतपच्यादिशक्यता तत्तद्रूपेणैव, तथा बोधस्य सर्वानुभवसिद्धत्वात्। यद्वक्ष्यति वाक्यार्थप्रदर्शनाऽवसरे-'विक्लित्यनुकूलो व्यापार' इति, धातुत्वादिकमजानतोऽपि तद्बोधाच्चेति भावः।

परे तु-कर्तृप्रत्ययसमभिव्याहारे तद्धात्वर्थजन्यत्वे सति तद्धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतावत्त्वम्। जन्यता चाऽऽरोपिताऽनारोपिता चेत्यन्यदेतत्। विभागज-

परीक्षा

वाच्यत्वम्। धातुरित्यस्यैकवचनान्तस्य विशेष्यवाचकताऽस्ति। तद्विशेषणवाचकमपि यदि विशेष्यवाचकपदार्थगतसङ्ख्याविरुद्धसङ्ख्याया अविवक्षा; तदा समानवचनकत्वमेवापेक्षितम्। विरुद्धसङ्ख्याविवक्षायान्तु विभिन्नवचनकत्वमपि भवति 'वेदाः प्रमाणम्' इत्यादौ यथा। प्रकृते तु तद्विवक्षायां मानाभाव इत्याशयेनाह-*धातुरित्यत्रेति।

फलशब्दोऽत्र न "स्वरित ञित" इति सूत्रे फलशब्दो यत्परस्तत्परः; किन्तु विलक्षणार्थबोधक इत्याशयेनाह—*फलमित्यादि। तद्धात्वर्थफलत्वं च—तद्धात्वर्थजन्यत्वे सति तद्धात्वर्थत्वम्। इदं च जन्यस्य यत्र फलत्वेन ग्रहणं तत्र; यत्र

व्यापारस्तु भावनाऽभिधा साध्यत्वेनाऽभिधीयमाना क्रिया ।

---

दर्पणः

न्यसंयोगादिरूपे पतत्यर्थे विभागसंयोगयोः फलत्ववारणायोभयम् । कर्माख्याते फलस्य विशेष्यतयैव भानात्तत्रातिप्रसङ्गवारणाय कर्तृप्रत्ययसमभिव्याहार इति वदन्ति। तच्चिन्त्यम्। अनुगतफलत्वानिरुक्तेः। विभागजन्यसंयोगे निरवयवत्वात्प्रत्यक्षत्वात् पतत्यर्थत्वाभावस्य वक्ष्यमाणतया व्यावर्त्याऽप्रसिद्धेश्चेत्यधिकमग्रे वक्ष्यते ।

ननु व्यापारत्वं न फलप्रयोजकक्रियात्वम् । आत्माश्रयात् । क्रियात्वस्यैव हि तत्त्वाद्, दण्डादिव्यापारस्य धात्वर्थत्वापत्तेश्च । नचेष्टापत्तिः । धात्वर्थव्यापाराश्रयस्यैव कर्तृताया वक्ष्यमाणतया तदाश्रयस्य दण्डादेः कर्तुराख्यातेनाभिधानाद् 'दण्डेन देवदत्तः पचति' इत्यादौ दण्डादिपदोत्तरं तृतीयाऽनापत्तेः,प्रथमापत्तेश्च । कर्तृकरणसंज्ञयोराकडारीयतया संज्ञाद्वयसमावेशासम्भवेनाभिमतकरणसंज्ञायाः परया कर्तृसंज्ञया बाधात् । किञ्च प्रयोजकत्वं यदि साक्षाज्जनकत्वं, तदा 'पचति' इत्यादौ कर्तृव्यापारस्य धात्वर्थत्वानापत्तिः, तस्य करणव्यापारद्वारैव फलजनकत्वात् । यदि जनकाजनकसाधारणं तदा तण्डुलक्रयणस्यापि फलप्रयोजकक्रियात्वात् तद्दशायामपि देवदत्तादौ 'पचति' इति प्रयोगापत्तिः । तण्डुलादिक्रयणादिव्यावृत्तस्य तादृशप्रयोजकत्वस्य निर्वक्तुमशक्यत्वाच्च । अत एव न तज्जन्यत्वे सति तज्जन्यजनकत्वरूपं तन्त्रान्तरप्रसिद्धं तत् । तदवच्छिन्नस्य धातुवाच्यत्वे साक्षाद्विक्लित्तिजनकान्तिमाग्निसंयोगदशायामेव 'पचति' इति प्रयोगः स्यान्नत्वधिश्रयणादिदशायामपि । तेषामन्तिमाग्निसंयोगेनान्यथासिद्धतया विक्लित्त्यजनकत्वादित्यत आह—*व्यापारस्त्विति*। साध्यत्वेनेति विशेषणे तृतीया । तथा च पदान्तरसमभिव्याहाराप्रयोज्यसाध्यत्वप्रकारकाऽभिधानविषयत्वं व्यापारत्वमित्यर्थः । अभिधानस्य प्रकारतावत्त्वं विषयतानिरूपकत्वं चौपचारिकम् । तादृशसाध्यत्वप्रकारकप्रतीतिविषयत्वमिति यावत् । 'घटं करोति' इत्यादौ कृञ्समभिव्याहारे घटादीनामपि साध्यत्वेन प्रतीतेरतिप्रसङ्गभङ्गाय पदान्तरसमभिव्याहाराप्रयोज्येति प्रतीतिविशेषणम् । तदसमभिव्याहारे तेषां तत्त्वेनाप्रतीतेः। अधिश्रयणाऽऽद्यऽधःश्रयणपर्यन्तक्रियाकलापस्य पदान्तरसमभिव्याहारमन्तरेणापि साध्यत्वेन प्रतीयमानत्वादुक्तव्यापारत्वसविकलमिति तदवच्छिन्ने पच्यादिधातुवा-

परीक्षा

तु सत्तादेः फलत्वं तत्कर्तृप्रत्ययसमभिव्याहृततद्धातुजन्यशाब्दबोधीया या तद्धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारता तदाश्रयत्वरूपम् । एवं च व्यापकत्वादिदमेवादर्त्तव्यम् । न चैवं तत्वनिवेशे नानुगमः; पूर्वलक्षणेऽपि तत्त्वेनैव निवेशावश्यकतयाऽविशेषात् । व्यापारस्य स्वरूपमाह—*व्यापारस्त्विति । *साध्यत्वेनेति* । तृतीया प्रकृत्यादित्वात् । तदर्थश्च प्रकारता, अभिधीयमानेत्यत्राभिधानं प्रतीतिः, निरूपितत्वसम्बन्धेन प्रकृत्यर्थसम्बद्धप्रकारितायाश्चाभिधानेऽन्वयः । कर्मप्रत्ययार्थो विशेष्यत्वम् । एवं सति साध्यत्वप्रकारकप्रतीतिविशेष्यत्वमिति फलितम् । न च कटं करोतीत्यादौ कटादेरपि साध्यत्वेन प्रतीयमानत्वात्तेष्वतिव्याप्तिरिति वाच्यम्, पदान्तरसमभिव्याहाराप्रयोज्यत्वस्याभिधानविशेषणत्वात् । अस्मिन्नर्थे प्रमा-

उक्तञ्च वाक्यपदीये—

यावत् सिद्धमसिद्धं वा साध्यत्वेनाऽभिधीयते ।
आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते ॥ इति ।

न च साध्यत्वेनाऽभिधाने मानाभावः । पचति, पाकः, करोति, कृतिः, इत्यादौ धात्वर्थाऽवगमाविशेषेऽपि क्रियान्तराऽऽकाङ्क्षाऽनाकाङ्क्षयोर्दर्शनस्यैव मानत्वात् । तथा च क्रियान्तराऽऽकाङ्क्षानुत्थापकता-

---

दर्पणः

च्यता नानुपपन्नेति भावः ॥ उक्तार्थस्य स्वोत्प्रेक्षितत्वं निरस्यति—*उक्तञ्चेति* । *यावदिति* । सर्वमित्यर्थः । सर्वपदार्थमेव विवृणोति—*सिद्धमित्यादिना* । सिद्धम्—विद्यमानध्वंसप्रतियोगि 'अपाक्षीत्' इत्यादौ । असिद्धम्—भूतभिन्नं वर्त्तमानं तादृशप्रागभावप्रतियोगि च, 'पचति' 'पक्ष्यति' इत्यादौ । *साध्यत्वेन*—वक्ष्यमाणस्वरूपेण । *अभिधीयते* । तत्प्रकारकप्रतीतिविषय इत्यर्थः । क्वचिद्विवक्ष्यते इति पाठः । एतेन क्रियाशब्दस्य रूढिः प्रदर्शिता । यौगिकत्वमप्याह—*आश्रितेति* । आश्रितं क्रमरूपं यस्यास्तत्त्वात् पूर्वापरीभूतावयवकत्वादित्यर्थः । तदीयाऽवयवानामधिश्रयणाद्यधःश्रयणपर्यन्तानां क्रमेणोत्पत्तेःक्रियापदेन सा उच्यते । यत्र च न क्रमिकावयवको व्यापारस्तत्र रूढिरेवादरणीया, पौर्वापर्यारोपो वा । फलस्यापि स्वजनकव्यापारगतपौर्वापर्यारोपेण तथैव भानम् । अत एव तन्मात्रवाचकस्य धातुत्वसिद्धिरिति भावः । *पाक इति* । यद्यपि साध्यत्वेनोपस्थितिरप्यत्र, कथमन्यथा स्तोकं पाक इत्यादौ स्तोकादीनां कर्मता, तथाऽपि तत्र धातूपस्थाप्यभावस्य गुणतया प्रधानीभूतघञुपस्थाप्यस्य तस्य सिद्धतैवेत्याशयः । पर्यवसितार्थमाह—*तथा चेति* । क्रियान्तरेति* । अयमाशयः—यद्धर्मवत्ताज्ञानात् क्रियान्तराकाङ्क्षोदयस्तादृशज्ञाने प्रकारतयावच्छेदकं यत्तत्सिद्धत्वम् । तद्भिन्नत्वं ज्ञाननिष्ठतादृशाऽऽकाङ्क्षोत्थापकत्वाभावावच्छेदकं वा साध्यत्वम् । साध्यत्वज्ञानस्य तु नाकाङ्क्षाप्रतिबन्धकत्वम् । क्लृप्तका-

परीक्षा

णमाह—*उक्तञ्चेति* । कारिकायां सिद्धमित्यस्य निष्पन्नमित्यर्थः । इदं चापाक्षीदित्याद्यभिप्रायेण । असिद्धमनिष्पन्नमिदं पचति पक्ष्यतीत्याद्यभिप्रायेण । इदं विशेष्यबोधकम् । एवं च सिद्धमसिद्धं वा यावत्साध्यत्वेनाभिधीयते । आश्रितेति योगप्रदर्शनम्, क्रियतेऽवयवानां क्रमेणोत्पत्या सा क्रिया । अत एवाश्रितक्रमरूपा आश्रितं क्रमरूपं यस्याः; यथा पचधात्वर्थव्यापारावयवानामधिश्रयणाद्यधःश्रयणपर्य्यन्तानां क्रमेणोत्पत्तेस्तादृशावयवसमूहः क्रिया पचादिनोच्यते । तथाऽन्यत्राऽपि बोध्यम् । यत्र तु नावयवानां क्रमस्तत्रारोपो रूढिर्वा स्वीकार्य्या । *पाक इति* । अत्र प्रकृत्यर्थस्य साध्यत्वेनैव प्रतीतिः । अत एव स्तोकं पाक इत्यत्र स्तोकपदात्कर्मत्वार्थकद्वितीयासिद्धिः, तथाऽपि प्रत्ययार्थस्य सिद्धत्वेन भानमिति विशेषः । *आकाङ्क्षाऽनाकाङ्क्षयोरिति* । अल्पाच्तरत्वादाकाङ्क्षाशब्दस्य पूर्वनिपातः । *अनुत्थापकतावच्छेदकरूपमिति* । तच्च रूपमुत्पाद्यत्वात्मकम्, तेन रूपेण प्रतीतौ शाब्दिकव्यवहारभावो

दर्पणः

रणाभावादेव तदनुत्पादात् । न च क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकधर्मरूपसाध्यत्वेन धात्वर्थोपस्थितौ 'कृष्णं नमेच्चेत् सुखं यायात्' इत्यादावाकाङ्क्षाभावेन क्रियान्तरान्वयो न स्यादिति वाच्यम् । तत्रापि चेत्पदसमवधानेनाकाङ्क्षोत्थापनात् । हिरुगादीनां क्रियाप्राधान्यव्यवहारस्तु तदर्थस्य क्रियामात्रविशेषणत्वात् । अत एव न हिरुगाद्यर्थे कारकाणामन्वयः । तेषां क्रियान्तरसाकाङ्क्षत्वादिति ।

वस्तुतस्तु सिद्धत्वज्ञाने साध्याकाङ्क्षावत् पच्याद्यर्थे साध्यतयावगते 'किमस्य साधनम्' इत्याकाङ्क्षोदयेन साधनाकाङ्क्षोत्थापकतावच्छेदकरूपवत्त्वमेव साध्यत्वम् । अत एव 'एतदेवोपादाय' इत्यग्रिमग्रन्थसङ्गतिः, अन्यथा पचति भवतीत्यादौ पूर्वोक्तरूपाभावेन तदसङ्गतिः स्पष्टैव ।

उक्तञ्च हरिणा—"प्रयोगार्हेषु सिद्धः सन् मन्तव्योऽर्थो विशेषणैः ।

प्राक् च साधनसम्बन्धात् क्रिया नैवोपजायते" ॥ इति ॥

'साधनं हि क्रियां निर्वर्तयति' इति "सुट्कात्" ( पा० सू० ६।१।१२९ ) इति सूत्रस्थभाष्यमप्येतत्कल्पेऽनुगुणमित्यवधेयम् ।

केचित्तु—पचतीत्यनुगतव्यवहाराद्स्ति पचित्वादिकं जातिः । तथा च क्रमिकानेकव्यक्तिवृत्तिजातिरेव क्रिया । साध्यत्वं च तस्या व्यक्तिद्वारकमेव । स्फोटवदस्याः क्रमवद्भिः क्षणैरभिव्यक्तिः ।

परीक्षा

मानम् । एवं च यद्धर्मप्रकारकज्ञानात् क्रियान्तराकाङ्क्षा भवति, स धर्मो ज्ञाननिष्ठा या क्रियान्तराकाङ्क्षोत्थापकता तस्यां प्रकारतासम्बन्धेनावच्छेदकस्तत् सिद्धत्वम् । साध्यत्वं तु क्रियान्तराकाङ्क्षोत्थापकत्वाभावावच्छेदको धर्मः । पचतीत्यादौ तादृशधर्मप्रकारकज्ञानाभावान्न क्रियान्तराकाङ्क्षा, कृष्णं नमेच्चेत्सुखं यायादित्यादौ तु चेत्पदसमभिव्याहारः क्रियान्तरान्वयप्रयोजकः । साध्यत्वेन क्रियाप्रतीतिस्तु धातुभ्य एव । नचैवं हिरुगादीनां क्रियाप्रधानत्वव्यवहारानुपपत्तिरिति वाच्यम्? तेषां क्रियामात्रविशेषणतया तथाव्यवहारात् । वस्तुतस्तु साध्यस्यैव साधनसाकाङ्क्षत्वमिति साधनाकाङ्क्षोत्थापकतावच्छेदकधर्मवत्वमेव तत् । अत एव पचति भवतीत्यत्र न साध्यत्वानुपपत्तिः ।

अत एव(१) "सुट् कात्पूर्वं" इति सूत्रे भाष्यकृतोक्तम्—"साधनं(२) हि क्रियां निर्वर्त्तयति, तामुपसर्गो विशिनष्टि" इति ।

अन्ये तु—तत्र धातुवाच्या सा जातिरेव क्रियापदेनोच्यते; सा जातिः पचित्वादिरूपानुगतव्यवहारात् । सिध्यतीति तस्याश्च व्यक्तिद्वारा साध्यत्वं क्रमिकानेकव्यापारे वर्त्तमाना साऽनेकव्यक्तिभिरेवाभिव्यज्यते । तदुक्तं हरिणा—

जातिमन्ये क्रियामाहुरनेकव्यक्तिवर्त्तिनीम् ।

असाध्यव्यक्तिरूपेण सा साध्येवोपलक्ष्यते ॥ १ ॥

इति स्वतो नित्यत्वादसाध्येत्युक्तमित्याहुः ।

---

( १ ) अत एव इत्यारभ्य 'प्रयोगं कुर्यात्' इत्येतावत्पाठः पुस्तकान्तरे उपलब्धः ।

( २ ) साधनम्—तद्बोधकप्रत्ययः, क्रियां निर्वर्तयति—साध्यत्ववैशिष्ट्येन बोधयति । अतस्तत्प्रयुक्तकार्यं पूर्वमिति वृद्धाः ।

वच्छेदकरूपं(१)साध्यत्वम् । तद्रूपवत्त्वमसत्वभूतत्वम् । एतदे-वाऽऽदाय—

असत्त्वभूतो भावश्च तिङ्पदैरभिधीयते ।

इति वाक्यपदीयमिति द्रष्टव्यम् ॥

अयं च व्यापारः फूत्कारत्वाधःसन्तापनत्वयत्नत्वादितत्तद्रू-पेण वाच्यः । पचतीत्यादौ तत्तत्प्रकारकबोधस्याऽनुभवसिद्धत्वात् ।

---

दर्पणः

"जातिमन्ये क्रियामाहुरनेकव्यक्तिवर्तिनीम् ।
असाध्या व्यक्तिरूपेण सा साध्येवोपलक्ष्यते ॥"

इति वाक्यपदीयं चाऽत्र कल्पे मानमित्याहुः ।

साध्यत्वासत्त्वभूतपदयोः पर्यायतामाह-*तद्रूपवत्त्वमिति* । *एतदेवेति*॥ निरु-क्तरूपासत्त्वभूतत्वमेवेत्यर्थः । *असत्त्वभूत इति* । "भावप्रधानमाख्यातम्" ( निरुक्ते १ अ० १ ख० ) इति निरुक्तार्थप्रतिपादकमेतत् ।

'सत्त्वस्वभावमापन्ना व्यक्तिर्नामभिरुच्यते ।'

इति अस्य पूर्वार्द्धम् । *भावश्चेति* । चोऽवधारणे; उक्तभाव एवेत्यर्थः । तेन सत्त्वभूतस्य तस्य व्यवच्छेदः ॥ तिङ्पदैरिति बहुवचनस्वारस्येन तिङन्तपदैरित्यर्थः । *अभिधीयते*—बोध्यते इत्यर्थः । अभिधीयते इत्यस्य प्राधान्येनैवेति शेषः । तेन कृदन्तपदैरसत्त्वावस्थभावाऽभिधानेऽपि न क्षतिरिति भावः । तिङन्तपदैरिति भावाऽऽ-ख्याताभिप्रायेणेति कश्चित् ।

*अयं चेति* । साध्यत्वेन प्रतीयमानो व्यापारश्चेत्यर्थः । *वाच्य इति* । पच-त्यादिशक्य इत्यर्थः । *अनुभवसिद्धत्वादिति* । अत एव व्यजनादिना वह्निप्रज्वल-नदशायां फूत्कार एव गृहीतशक्तिकस्य न पचतीतिप्रयोगः । यागे, इच्छा, ज्ञानं वेति

परीक्षा

यत्तु-क्रियायाः साध्यत्वं तदेवासत्वभूतत्वमित्याह—*तद्रूपवत्त्वमिति* । अत एव वाक्यपदीये हरिणा—

सत्वस्वभावमापन्ना व्यक्तिर्नामभिरुच्यते ।
असत्वभूतो भावस्तु तिङ्पदैरभिधीयते ॥ १ ॥

इत्युक्तम् । *तिङ्पदैः-तिङन्तैः पदैः । अत एव "भावप्रधानमाख्यातम् , सत्वप्र-धानानि नामानि"इति निरुक्ते उक्तम् । व्यापारस्य धातुवाच्यत्वं न व्यापारत्वेनैव; किन्तु फूत्कारादिनिष्ठफूत्कारत्वादिना ।

अत एव पचतीत्यादिवाक्यजन्यशाब्दबोधानन्तरं तत्तद्धर्म्मप्रकारकसन्देहानुदयः सङ्गच्छत इति इत्याह-*अयञ्चेति । *अनुभवसिद्धत्वादिति* । अत एव यस्य पुरुषफूत्कारत्वावच्छिन्न एव पच्धातोः शक्तिग्रहः, स व्यजनेन वह्निप्रज्वालनद-शायां पचतीति शब्दप्रयोगं न करोति । यदि व्यापारत्वं वाच्यतावच्छेदकं भवेत्तदा

---

( १ ) रूपत्वमिति पाठः ।

**न च नानार्थताऽऽपत्तिः, तदादिन्यायेन बुद्धिविशेषादेःशक्यताऽवच्छे-**

---

दर्पणः

विप्रतिपत्तिस्तु स्वीयबोधानुसारादेवेति भावः । *न च नानेति*। नानाधर्माव-च्छिन्नशक्तिनिरूपकतावच्छेदकैकधर्मवत्त्वं नानार्थत्वम् । तच्च पच्यादावक्षतमिति भावः । फलांशमादाय तत्त्वं त्वाशङ्कितुरपीष्टमेवेति बोध्यम् । *बुद्धिविशेषादेरिति*। स्वनिरूपितविषयतावच्छेदकत्वसम्बन्धेनेति शेषः; बुद्धिविशेषविषयतावच्छेदकत्वस्येति यावत्। अयं भावः—तदादिभ्यश्चैत्रत्वादितत्तद्रूपेण बोधः सर्वानुभवसिद्धः । स च चैत्रत्वाद्यनुगमकधर्मं विनाऽनुपपन्न इति बुद्धिविशेषविषयतावच्छेदकत्वं तदनुगमक-धर्ममङ्गीकृत्य तदनुगतीकृततदवच्छिन्नेषु चैत्रादिषु तदादीनां शक्तिः । बुद्धिविशेषविष-यतावच्छेदकत्वस्योपलक्षणत्वोपगमाच्च न चैत्रत्वादीनां तेन रूपेण शाब्दबोधे भाना-पत्तिः । अनुगतनानाधर्माऽवच्छिन्नशक्तिनिरूपकताऽवच्छेदकैकधर्मवत एव नानार्थ-त्वम्, न तेषां तदपीति तदादिशक्तिनिरूपणे निर्णीतमन्यत्र, तद्वदिहाप्यवसेयमिति ।

ननु पूर्वापरीभूतक्षणनश्वरक्रमिकव्यापाराणां मेलनाऽसम्भवात्तदात्मकक्रियाया अनैक्याद् 'एका च क्रिया' इति "प्रशंसायाम्" ( पा० सू० ४।२।६६ ) इति सूत्रस्थ-

परीक्षा

फूत्कारत्वादेर्व्याप्यस्य ज्ञानकाले व्यापकव्यापारत्वावच्छिन्नज्ञानवान् भवतीति तथा व्यजनेन प्रज्वलनकालेऽपि व्यापारत्वावच्छिन्नविषयकज्ञानवान् स्यादिति प्रयोगं कुर्यात्। ] न च विशेषधर्मस्यैव शक्यतावच्छेदकत्वे पचतीत्यादिशब्दाद्विशेष-पचतीति शब्दधर्मप्रकारक एव बोधो भविष्यति; न तु सामान्यधर्मप्रकारक इति पचति चैत्र इति वाक्यजन्यशाब्दबोधस्य विक्लित्यनुकूलव्यापारवान्नवेति संशयनिवर्त्तकत्वं न स्यादिति वाच्यम् ? विशेषधर्मस्य व्याप्यतया व्याप्यज्ञानस्य व्यापकधर्मज्ञानं प्रति हेतुतया विशेषधर्मज्ञानानन्तरं व्यापारत्वप्रकारकज्ञानमपि भवतीति कल्प्यते,तेन प्रति-बन्धान्न तादृशः सन्देहः । तच्च ज्ञानमनुमितिरूपम्, मानसं वा व्यञ्जनावृत्तिस्वीकारे-शाब्दबोधरूपं वेत्यन्यदेतत् । यदि फूत्कारादिव्यापाराणां फूत्कारत्वाधःसन्तापनत्वादि विभिन्नरूपेण वाच्यता; तदा बहूनां धर्माणां वाच्यतावच्छेदकतयाऽनेकशक्यतावच्छेद-कत्वे सत्येकशक्यतावच्छेदकवत्वं नानार्थत्वम् । तच्च पच्यादेः प्राप्नोति । न चेष्टापत्तिः, नानार्थहर्य्यादिशब्दस्थले विजातीयप्रकरणादिभेदः शक्ततावच्छेदकनियामको भवति, तथाऽत्र नास्ति पचतीत्यादिशब्दप्रयोगे नानाधर्मप्रकारकप्रतीतेरनुभवत्सिद्धत्वादित्या-शङ्क्य निराचष्टे-*न चेत्यादिना*। फलांशमादाय नानार्थत्वं तु शङ्कस्याप्यनुमतमेव । न च व्यापारांशमादाय धातूनामनेकार्थत्वव्यवहारोऽपि सर्वसम्मत एव 'सेधतेर्गता-वि'ति सूत्रे गतिग्रहणादिति वाच्यम् ? फलभेदमादाय तत्तत्फलतावच्छेदकधर्म्मा-वच्छिन्नकार्य्यतानिरूपितकारणताश्रयव्यापाराणां या प्रतीतिस्तामादायानेकार्थत्व-व्यवहारो: : न तु फलतावच्छेदकधर्मस्यैकत्वे तथेत्याशयः । *तदादिन्यायेनेति* । तदादिशब्दस्थले यथा स्वीयविषयतावच्छेदकत्वसम्बन्धेन बुद्धिविशेषोपलक्षितचैत्र-त्वमैत्रत्वाद्यवच्छिन्ने तदादिशब्दानां शक्तिस्वीकारेऽपि तदादीनां न नानार्थत्वव्यव-हारस्तथा धातूनामपि स्वीयविषयतावच्छेदकत्वसम्बन्धेन वक्तृसमवेतबुद्धिविशेषो-पलक्षितफूत्कारत्वाद्यवच्छिन्ने पच्यादीनां शक्तिस्वीकारान्न नानार्थत्वम्। फूत्कारत्वा-

दकानामनुगमकस्य सत्त्वात्। आख्याते! क्रियैकत्वव्यवस्थापि ; अवच्छेदकबुद्धिविशेषैक्यमादायैव। उक्तंच वाक्यपदीये—

"गुणभूतैरवयवैः समूहः क्रमजन्मनाम्।
बुद्ध्या प्रकल्पिताऽभेदः क्रियेति व्यपदिश्यते॥"

इति। धात्वर्थं निरूप्य तिङर्थमाह—

*आश्रये त्विति*। फलाश्रये, व्यापाराश्रये चेत्यर्थः। फलाश्रयः कर्म्म, व्यापाराश्रयः कर्त्ता। तत्र फलव्यापारयोर्धातुलभ्यत्वान्न तिङस्तदंशे शक्तिः। अन्यलभ्यत्वात्। शक्यतावच्छेदकं चाश्रयत्वं;

---

दर्पणः

भाष्यासङ्गतिरत आह-*आख्यातेति*। निर्विभक्तिकः पाठः साधुः। आख्यातप्रतिपाद्यक्रियैकत्वव्यवस्थापीत्यर्थः। सविभक्तिकपाठे सप्तमी वैषयिकाधारे अध्याहृतज्ञानक्रियामादाय बोध्या। *बुद्धिविशेषैक्यमिति*। सङ्कलनरूपबुद्धिविशेषात्मकावच्छेदकैक्यमादायेत्यर्थः। तथाचावयवाऽऽश्रयं पौर्वापर्य्यं, समुदायाश्रयमेकत्वमादाय तत्सङ्गतिरिति भावः। तत्र मानमुपन्यस्यति-*उक्तञ्चेति॥ गुणेति*॥ क्रमिकैतद्व्यापारसमूहं प्रति गुणभूतैस्तत्तद्रूपेण भासमानैरवयवैरुपलक्षितः सङ्कलनात्मकैकत्वबुद्ध्या प्रकल्पितोऽभेदो यस्य तद्रूपः समूहः क्रियेति व्यवह्रियते इति कारिकार्थः। तत्र क्षणनश्वराणां व्यापाराणां वस्तुभूतसमुदायाऽभावाद्, बुद्ध्येत्युक्तम्। निरूप्येत्यस्य सङ्क्षेपेणेत्यादिः। प्रधानीभूतप्रकृत्यर्थनिरूपणानन्तरं विशेषणप्रत्ययार्थस्याऽवश्यवक्तव्यतयाऽवसरसङ्गत्या तन्निरूपणमित्यभिप्रेत्याह-*तिङर्थमिति*। *अन्यलभ्यत्वादिति*।

परीक्षा

ध्यवच्छेदकावच्छेदकस्य बुद्धिविशेषस्यैक्यादिति भावः। बुद्धिविशेषश्चोपलक्षणीभूतशक्यतावच्छेदकानुगमको न तु विशेषणीभूतेति; न बुद्धिविशेषस्य शक्यतावच्छेदकांशे विशेषणतया शाब्दबोधे भानापत्तिः। न चैतावताऽनुगमकधर्मस्वीकारेऽप्यनेकशक्यतावच्छेदकत्वमस्त्येवेति नानार्थत्वापत्तिर्न गतेति वाच्यम्? अनेकशक्यतावच्छेदककत्वं न नानार्थत्वम्, किन्त्वनेकशक्यतावच्छेदकताकत्वम्। यथा सूर्य्यत्वविष्णुत्वादिनिष्ठा हर्य्यादिशब्दशक्यतावच्छेदकताभिन्नेति तेषां नानार्थत्वम्, तथा न प्रकृते, उपलक्षणीभूतबुद्धिविशेषस्यैकत्वेनानुगतधर्म्मावच्छिन्नशक्यतावच्छेदकताया एकत्वादिति भावः। ननु "प्रशंसायाम्" इति सूत्रभाष्ये-एका क्रियेति व्यवहारो दृश्यते तस्य कथमुपपत्तिः, यावता बहूनां व्यापाराणां भवन्मते विशेषधर्मपुरस्कारेण शक्यत्वादत आह-*आख्यात इति*। *गुणभूतैरिति*। समूहं प्रतीत्यादि। *अवयवैरिति*। युक्त इति शेषः। अवयवानां गुणभूतत्वं च तत्तद्रूपेण भासमानत्वम्। *क्रमजन्मनामिति*। इदं युगपदनुपस्थापने हेतुः। *बुद्ध्या प्रकल्पिताभेदः*—सङ्कलनात्मकैकत्वबुद्ध्या प्रकल्पिताभेदः, इदं समूहस्य विशेषणम्। एतेन पूर्वापरीभूतावयवानां युगपदसन्निधानेनैका क्रियेति भाष्यीयव्यवहारासङ्गतिरिति निरस्तम्।

तिङन्तजन्यशाब्दबोधे धात्वर्थस्य प्राधान्येन भानात्तन्निरूप्य प्रत्ययार्थं वक्तुमुपक्रमते-*धात्वर्थमिति*। *अन्यलभ्यत्वात्*—धातुलभ्यत्वात्। 'अनन्यलभ्यो हि

तत्तच्छक्तिविशेषरूपमिति सुबर्थनिर्णये वक्ष्यते।

नन्वनयोराख्यातार्थत्वे किं मानम्। प्रतीतेः—लक्षणया, आक्षे-

दर्पणः

'अनन्यलभ्यो हि शब्दार्थः' इति न्यायादिति भावः। एतेन कृतिमतो, व्यापारवतो वा कर्तुः शक्यत्वेऽनेककृतिव्यापाराणां शक्यताऽवच्छेदकत्वकल्पने गौरवमिति नैयायिकाद्युक्तं दूषणमस्मन्मताऽज्ञानविजृम्भितमिति सूचितम्।

नन्वाश्रयस्य तिङर्थत्वे आश्रयत्वं शक्यतावच्छेदकं वाच्यम्। तस्य च स्वरूपाऽभिन्नतया नानासम्बन्धाऽवच्छिन्नतया च नानात्वादननुगमोऽत आह-*शक्यतावच्छेदकं चेति*। *वक्ष्यते इति*। अस्य द्वितीयार्थनिरूपणाऽवसर इति शेषः। तथा च तत्राऽखण्डोपाधिरूपस्थानुगतस्य वक्ष्यमाणत्वान्न तत्र नानात्वप्रयुक्तो दोष इति भावः

मीमांसकादिमतं प्रबलप्रमाणेन निराकरिष्यन् कर्तृकर्मणोरुक्तं तिङर्थत्वं व्यवस्थापयितुं शङ्कते-*नन्विति*। ननु 'यद् यद् बोधकं तत्तदर्थकम्' इति नियमादाख्यातजन्यकर्तृकर्मप्रतीतिरेव मानमत आह—*प्रतीतेरिति* । सम्भवादित्यनेनान्वितम्। सम्भवहेतुमाह-*लक्षणयेति*। नन्वाख्यातस्याऽऽश्रयलक्षकत्वे भावनाभानानुपपत्तिस्तदुपपत्तये तत्र तस्य शक्तिकल्पने तु नाश्रये लक्षणासम्भवो, युगपद्वृत्तिद्वयविरोधात्। भावनाश्रयत्वेन भावनाश्रये लक्षणायां तु भावनायाः प्राधान्यानुपपत्तिरत आह-*आक्षेपादिति* । आक्षेपोऽनुपपत्तिस्तत इत्यर्थः। तथाहि-अन्विताभिधानवादिमते पदानां विशेषणत्वेनैवार्थोपस्थापकतयाऽऽख्यातार्थभावनाया विशेषणत्वाऽनुपपत्त्या भवति तस्या आश्रयाऽऽक्षेपकत्वम्। यद्वा अनुमानं सः। तत्प्रयोगश्च 'आख्यातपदबोध्या भावना, किञ्चिदाश्रिता, विशेषणत्वेन गृहीतशक्तिकत्वात्। घटपदबोध्यघटत्व-

परीक्षा

शब्दार्थं' इति न्यायस्य सुप्रसिद्धत्वादिति भावः। एतेन कर्तरि कर्मणि वा आख्यातस्य शक्तिस्वीकारे बहूनां व्यापाराणां शक्यतावच्छेदकत्वे गौरवमिति यन्नैयायिकानां दूषणं तदस्मन्मताज्ञानविजृम्भितमिति ध्वनितम्। नन्वाश्रयत्वस्य शक्यतावच्छेदकत्वेऽपि तस्य निरूपकभेदेन नानासम्बन्धावच्छिन्नत्वेन च भेदाद्गौरवं दुर्वारमेवेत्यत आह—*तत्तच्छक्तीति* । *सुबर्थनिर्णये*—द्वितीयार्थनिरूपणावसरे । एवं चाश्रयत्वस्याखण्डोपाधिरूपतया न नानाधर्मस्य शक्यतावच्छेदकत्वप्रयुक्तं गौरवमिति भावः। मीमांसकोक्तं परिहरन् स्वमतं व्यवस्थापयितुं शङ्कते—*नन्विति*। *अनयोः*—कर्तृकर्मणोः। ननु यद्यदर्थबोधकं तत्तदर्थकमिति सामान्यतो व्याप्त्या कर्तृकर्मप्रतीतिरेव मानं भविष्यतीत्यत आह—*प्रतीतेरिति*। *लक्षणयेति*। ननु लक्षणाश्रये नोपपद्यते; भावनाया भवन्मते आख्यातशक्यतया तस्याः शाब्दबोधे भानसिद्धये शक्त्या तत्प्रतिपादकत्वमपि वक्तव्यमिति युगपद्वृत्तिद्वयविरोध इत्यत आह—*आक्षेपादिति*। आक्षेपोऽनुमानम्, तच्च भावना किञ्चिदाश्रिता धर्मत्वात्, घटत्ववदित्याकारकस्य प्रयोगस्य तत्र सम्भवात्सम्भवति। एवं च भावना किञ्चिदाश्रितेत्यनुमितौ किञ्चित्पदार्थवृत्तित्वभाने आधेयतानिरूपकस्यापि भानेन यस्य तन्निरूपकत्वं स एव कर्तेति लभ्यते। ननूक्तानुमानरूपाक्षेपस्य न सम्भवः। अनुमितेर्या-

पात्, प्रथमान्तपदाद्वा सम्भवादिति चेद्—

अत्रोच्यते—"लः कर्म्मणि च भावे चाऽकर्म्मकेभ्यः" (पा० सू० ३।४।६९) इति सूत्रमेव मानम्। अत्र हि चकारात्, "कर्त्तरि कृद्" इतिसूत्रोक्तं कर्त्तरीत्यनुकृष्यते। बोधकतारूपां तिबादिशक्तिं तत्स्थानित्वेन कल्पिते लकारे प्रकल्प्य, लकाराः कर्म्मणि कर्त्तरि चानेन विधी-

---

दर्पणः

वत्' इति। समानसंवित्संवेद्यत्वं तु नाऽऽक्षेपः, प्रमेयमित्याश्रयभाने भावनाया अभानाद् भावनापदजन्यभावनाबोधे आश्रयाऽभानाच्चेति।

ननु व्याप्त्यादिप्रतिसन्धानं विनाऽप्याश्रयबोधस्यानुभवसिद्धत्वान्नाक्षेपादाश्रयभानोपपत्तिः, क्काचित्कत्वात् तथाभानस्य। किञ्चोक्तरीत्या तद्भानसमर्थने आख्यातजन्यबोधे भावनायाः प्रधान्यानुपपत्तिः शक्तिग्रहे तस्या विशेषणत्वेनैवोपस्थितत्वाद् घटत्ववत्, एतत्तत्वस्य विचाराऽसहत्वाच्चेत्यत आह-*प्रथमान्तपदाद्वेति*। समभिव्याहृतप्रथमाऽन्तचैत्रादिपदादेवाश्रयप्रतीत्युपपत्तेरित्यर्थः। एवञ्च नाश्रयप्रतीत्यनुपपत्तिराश्रये आख्यातशक्तिसाधिकेति भावः।

*मानमिति*। यद्यप्याश्रयत्वेनाश्रयभानार्थं तत्राख्यातस्य शक्तिरावश्यकीत्येवोत्तरं वक्तुमुचितं, तथापि धातोः फलव्यापारयोः शक्तिराख्यातस्याश्रयत्वे शक्तिरिति मते आश्रयस्य आश्रयत्वेनापि लाभान्न सामान्यत आश्रये स्वाभिमताख्यातशक्तिः सिद्ध्यतीति तन्मतनिरासार्थमपि सूत्रमेव प्रमाणत्वेनोपन्यस्तमिति बोध्यम्। ननु कर्तृपदाघटितमिदं सूत्रं कथमाख्यातस्य कर्तृवाचकत्वे मानमित्याशङ्कां निरस्यति— *अत्र हीति*। नन्वेतत्सूत्रं लकाराणामेव कर्त्रादिशक्तिबोधकं नाख्यातस्येत्यत आह-*बोधकतारूपामिति*। बोधजनकत्वरूपामित्यर्थः। इदं चादेशिष्वेव शक्तिरादेशानामादेशिस्मृतिद्वाराऽर्थोपस्थापकत्वमिति मतनिरासायेत्युक्तम्। यथा चैतत्

परीक्षा

सिज्ञानपरामर्शजन्यतया शब्दश्रवणे व्याप्त्यादिप्रतिसन्धानाभावेऽपि शाब्दबोधस्यानुभवसिद्धत्वादत आह—*प्रथमान्तपदाद्वेति*। चैत्रः पचतीति वाक्यघटकं यत्प्रथमान्तं पदं चैत्र इत्यादि तेनाश्रयस्य प्रतीत्युपपत्तौ न तत्राख्यातस्य शक्तिः स्वीकार्य्येति भावः। *मानमिति*। अनुमापकमित्यर्थः। आख्यातम्—आश्रयशक्तम्, "लः कर्मणि" इति सूत्रगृहीतशक्तिकत्वात्। अणादितद्धितवदिति। यद्यद्धर्मावच्छिन्नगृहीतशक्तिकपाणिनीयसूत्रकं भवति तत्तद्धर्मावच्छिन्नशक्तं भवतीति सामान्यतो व्याप्तिः। ननु तत्र कर्त्तरीत्यस्याभावेन कथं तत्सूत्रगृहीतशक्तिकत्वरूपहेतुसिद्धिरत आह— *अत्र हीति*। यद्यपि परमतस्य प्रथमान्तपदेन चैत्रत्वादिना चैत्रस्य लाभेऽप्याश्रयत्वस्य न लाभ इत्याख्यातस्य तत्र शक्तिः स्वीकार्य्येत्येवमपि निराकरणं संभवति; तथाऽपि अनन्यलभ्यत्वेनाश्रयत्वावच्छिन्न एव शक्तिरूपेण; नत्वाश्रयत्वावच्छिन्न इति यन्मतम्, तदप्यपाकर्तुमनुमानप्रदर्शनमेवं कृतम्। नन्वेतावता लकारस्य शक्तिः सिध्यति न त्वाख्यातस्येत्यत आह—*बोधकतेति*। बोधजनकत्वं शक्तिः; सा च यो लौकिकशब्दसमवायी तत्र कल्प्यत इति भावः। इदं च स्थानिन्येव शक्तिः, आदेशा-

यन्ते। नकारविसर्गादिनिष्ठां कर्मकरणादिबोधकताशक्तिमादाय शसादिविधानवत्। न च सूत्रे कर्तृकर्मपदे कर्तृत्वकर्मत्वपरे। तथा च–कर्तृत्वं–कृतिः कर्मत्वञ्च फलमेवार्थोऽस्त्विति शङ्क्यम्। फलव्यापारयोर्धातुलभ्यत्वेन लकारस्य पुनस्तत्र शक्तिकल्पनाऽयोगात्।

अथ दर्शनान्तरीयरीत्या व्यापारस्य धात्वर्थत्वाभावात्तत्र ल-

---

दर्पणः

तथा वक्ष्यते। *विधीयन्ते इति*। तथा च वर्णस्फोटपक्षे श्रूयमाणवर्णानामेव वाचकताया व्यवस्थापयिष्यमाणतया "लः कर्मणि" (पा० सू० ३।४।६९) इत्यादिसूत्राणां तिबादिशक्तिग्रहे एव तात्पर्यावधारणेन सम्भवति तस्याऽऽख्यातशक्तिसाधकप्रमाणत्वमिति भावः। *नकारविसर्गादीति*। 'रामान्' 'रामैः' इत्यादावित्यर्थः। *कर्तृकर्मपदे*–इत्यस्यानुवृत्त्योपात्ते इत्यादिः। *कर्तृत्वकर्मत्वपरे इति*। आकृतिशक्तिवादमभिप्रेत्य भावप्रधाननिर्देशाद्वेति भावः। *कर्तृत्वं कृतिरिति*। कृञो यत्नवाचकत्वेन तत्प्रकृतिककर्त्रर्थकतृजन्तकर्तृशब्दस्य कृत्याश्रयवाचकतया तदुत्तरभावप्रत्ययेन प्रकृत्यर्थप्रकारीभूतकृतिरूपधर्मबोधनादिति भावः। *कर्मत्वं च फलमिति*। कर्मशब्दस्य धात्वर्थफलाश्रये पारिभाषिकत्वादिति भावः। *शङ्क्यमिति*। तथा च तत्सूत्रबलान्न कर्तृकर्मणोराख्यातशक्तिः सिद्ध्यतीति भावः।

*दर्शनान्तरीयेति*। दर्शनं शास्त्रं, न्यायादिः, अन्यदर्शनं दर्शनान्तरम्; तत्र भवा दर्शनान्तरीया। गहादित्वाच्छः। 'पचति' इत्यस्य पाकं करोतीति विवरणात् फलं पच्याद्यर्थः, तिङ् तु व्यापारवचन इति मीमांसका मन्यन्ते। तन्मते व्यापारस्यान्यल-

परीक्षा

नां तु स्थानिस्मृतिजननद्वारा शाब्दबोधजनकत्वमिति परमतनिराकरणायेत्थमभिहितम्। ननु कृतित्वस्य जातिरूपत्वेन शक्यतावच्छेदकलाघवात्कृतावेव शक्तिसिद्ध्यर्थं कर्तृपदं कर्तृत्वपरमेवास्त्विति चेद्? न। प्रवृत्तिनिवृत्तिजीवनयोनियत्नेष्वेकाकारप्रत्ययाभावेन न यत्नत्वस्य त्रितयसाधारणत्वे मानाभावात्, तथा च गौतमसूत्रम्–"समानप्रसवा जातिः" इति–समानं प्रसवो बुद्धिजननं यस्याः सेत्यर्थः। ननु कार्यत्वावच्छिन्नकार्य्यतानिरूपितकारणतावच्छेदकतया कृतित्वजातिसिद्धिरिति तदवच्छिन्ने आख्यातस्य शक्तिकल्पने लाघवमिति चेद्? न। प्रागभावप्रतियोगित्वं हि कार्य्यत्वं; तच्च ध्वंससाधारणम्। न च ध्वंसनिष्ठकार्य्यतायामपि भावत्वावच्छेदकं वाच्यम्, तच्च न सम्भवति, ध्वंसं प्रति कृतित्वेन जनकतायां मानाभावेन व्यभिचारात्। यदि च समवायसम्बन्धावच्छिन्नकार्यत्वावच्छिन्नकार्य्यतानिरूपितकारणतावच्छेदकतया कृतित्वजातिसिद्धिरित्युच्यते, तदापि संयोगादिजनकतावच्छेदकतया सिद्धा या क्रियात्वजातिः, तामादाय विनिगमनाविरहेण न नियमः। तादृशकृतित्वावच्छिन्ने शक्तिसिद्धिरित्याशयेन नैयायिकमतमपि दूषयति—*न चेत्यादिना*। न चेत्यस्य शङ्क्यमित्यत्रान्वयः। *फलमिति*। कर्मशब्दस्य फलाश्रये पारिभाषिकत्वादिति भावः। *अयोगादिति*। तथा च "लः कर्मणि" इति सूत्रं न तत्र शक्तिग्राहकमिति भावः।

*दर्शनान्तरीयरीत्येति*। अन्यद्दर्शनं दर्शनान्तरं; दर्शनं शास्त्रं तत्र भवा दर्शना-

कारविधिः स्यादिति चेत्, तर्हि कृतामपि कर्तृकर्म्मादिवाचित्वं न सिध्येत्। "कर्त्तरि कृद्" इति च, "लः कर्म्मणि" इत्यनेन तुल्ययोगक्षेमम्।

अपि च मीमांसकानां कृतामिवाऽऽख्यातानामपि कर्तृवाचित्वमस्तु, भावनाया एवाऽऽक्षेपेण कृदादिवत् प्रतीतिसम्भवे वाच्यत्वं माऽ-

---

दर्पणः

भ्यत्वाभावात्तत्र लकारविधौ न किञ्चिद् बाधकम्। यद्यप्युक्तरीत्या व्यापारे शक्तिसिद्धावपि फलशक्तिबोधकं कर्मणीत्यनुपपन्नमेव, तथाप्यभिधानाऽनभिधानव्यवस्थार्थं तदप्यावश्यकमेव, द्वेधा भानं तु कथञ्चित् परिहरणीयमिति भावः। *कृतामिति*। कृत्संज्ञकानां ण्वुल्तृजादीनामित्यर्थः। ननु "कर्त्तरि कृत्" (पा० सू० ३।४।६७) इत्येव तत्र शक्तिसाधकमत आह–*कर्तरि कृदिति चेति*। तत्सूत्रादेव च कर्तरीति अत्रानुवर्त्तते। तथा च पूर्वसूत्रस्थकर्तृपदस्य धर्मिपरत्वेऽत्राप्यनुवर्त्त्यस्य तस्य धर्मिपरत्वमेव। अत्र धर्मपरतायां तु तत्रापि धर्मपरतैव स्यात्। तदेवाह–*तुल्ययोगक्षेममिति*। अलब्धलाभो योगो, लब्धरक्षणं क्षेमम्। एवञ्च "लः कर्मणि" इत्यस्यानन्यलब्धभावनाया आख्यातार्थत्वप्रतिपादकत्वोपगमे न्यायसाम्यात्, "कर्तरि कृत्" (पा० सू० ३।४।६७) इत्यस्यापि कृतां भावनार्थत्वप्रतिपादकत्वम्। तस्या आक्षेपादेव लाभान्न कृतां तच्छक्तिप्रतिपादकं तदिति यदि, तर्त्तर्हि "लः कर्मणि" (पा० सू० ३।४।६९) इत्यपि नाऽख्यातस्य भावनाशक्तिप्रतिपादकमिति समानमित्यर्थः।

ननु पूर्वसूत्रस्थकर्तृपदस्य धर्मिपरत्वेऽप्यनुवृत्तस्य तस्य शब्दाधिकाराऽश्रयणेन धर्मपरत्वसम्भवान्नोक्तदोषः। यदि च शब्दाधिकाराऽऽश्रयणं सत्येव गमके, प्रकृते च तदाश्रयणे प्रमाणाभाव इति विभाव्यते, तदाऽपि 'शाक्तः कारकं' 'शक्तिमत्कारकम्' इति पक्षद्वयस्याप्याकरसिद्धतया तद्विकल्पस्य तिङ्कृतोर्व्यवस्थितत्वाश्रयणादर्थाधिकाराश्रयणेऽप्यभिमतार्थलाभोऽक्षत एवेत्यत आह–*अपि चे।त*। तथा च विकल्पव्यवस्थाया एवाप्रामाणिकत्वेनैकार्थपरतैव न्याय्येति भावः। नन्वाख्यातस्य व्यापारावाचकत्वे कथं ततस्तद्बोधोऽत आह–*भावनाया इति*। *कृदादिवदिति*। "तत्र तस्येव" (पा० सू० ५। १। ११६) इति वतिः। कृदादिस्थल इवेत्यर्थः। आदि-

परीक्षा

न्तरीया। फलमात्रस्य धात्वर्थत्ववादिमतमाश्रित्येयमाशङ्का। *न।सद्ध्येदिति। इष्टापत्तिरिति तु न, वक्ष्यमाणकर्त्रधिकरणसिद्धान्तभङ्गापत्तेः। "कर्त्तरि कृत्" इति सूत्रं तत्र तेषां शक्तिग्राहकमस्तीतिमतं निराकरोति—*कर्त्तरीत्यादिना*। *तुल्ययोगक्षेममिति*। कस्मादेव सूत्रात्कर्तरीति पदं "लः कर्मणि"इत्यत्रानुवर्त्तते; तच्च यदि "लः कर्मणि"इति सूत्रे कर्तृत्वपरम्; तदा पूर्वसूत्रेऽपि तथैव स्यादिति कृतां कर्तरि शक्तिसाधकं न भविष्यतीति भावः।

ननु पूर्वसूत्रस्थं कर्तृपदं कर्तृपरमेवास्तु, इह तु शब्दाधिकाराश्रयणात्कर्तृत्वपरं भविष्यतीत्यतआह–*अपि चेति*। *अस्त्वित्ति*। शब्दाधिकारस्य गुरुत्वेन यत्र विशिष्य किञ्चित्साधकमस्ति तत्रैव शब्दाधिकाराश्रयणमन्यत्र सर्वत्रार्थाधिकार एवेति भावः। नन्वेवं भावनायाः प्रतीतिर्न स्यात्फलमात्रस्य धात्वर्थत्वादत आह–*भावनाया इति*। ननु भावना आख्यातवाच्यैव; न तु कर्त्ता [illegible], तथासति भावनाया आक्षे-

स्तु। तथा सति प्राधान्यं तस्या न स्यादिति चेत्? न। घटमानयेत्यादावाक्षिप्तव्यक्तेरपि प्राधान्यवदुपपत्तेः। पचतीत्यादौ पाकं करोतीति भावनाया विवरणदर्शनाद्वाच्यत्वमिति चेद्? न। पाकानुकूलव्यापारवतः कर्त्तुरपि विवरणविषयत्वाऽविशेषात्। न च कर्त्तुर्विवरणं तात्पर्याऽर्थविवरणं, पाकं करोतीत्यशब्दार्थकर्मत्वविवरणवद्, इतरेतरयोगद्वन्द्वे समुच्चयांशविवरणवद्वा, न तदर्थनिर्णायकमिति वाच्यम्। भावनायामपि तुल्यत्वात्।

---

दर्पणः

पदात् कर्त्तृविहिततद्धित इत्यादेः परिग्रहः। तथा च यथा भवन्मते धातोर्व्यापारावाचकत्वेन कृदर्थकर्त्राक्षिप्तभावनाया बोधविषयत्वं; तथाऽऽख्यातेऽपीति भावः। *तथा सतीति*। भावनाया आख्यातावाच्यत्वे सतीत्यर्थः। *तस्याः*—भावनायाः। *प्राधान्यम्*—मुख्यविशेष्यत्वम्। *घटमानयेति*। 'जातिः पदार्थः' इति मते जात्याक्षिप्तव्यक्तेर्यथा प्राधान्यम्; तथा कर्त्राक्षिप्तभावनाया अपि प्राधान्यमुपपत्स्यत इत्यर्थः। शक्तिग्राहकेषु परिगणिताद्विवरणाद्भावनावाचकत्वमाख्यातस्याऽऽयास्यतीत्याशङ्कते—*भावनाया इति*। *विवरणेति*। तत्समानाऽर्थकपदाऽन्तरेण तदर्थकथनस्य विवरणतया, प्रकृते पचतीत्यस्य पाकभावनेत्याख्यातस्य भावनापदेन विवरणात्तस्य भावनावाचकत्वमित्यर्थः। विवरणस्य स्वस्वबोधानुसारितया, न तेनाऽर्थनिर्णय इत्याह-*पाकाऽनुकूलेति*॥ पचतीत्यस्यैककर्तृका पचिक्रियेति कर्त्तुर्विवरणस्याऽपि दर्शनेनाऽऽख्यातस्य भावनायां शक्तिरुत कर्त्तरीत्यत्र विनिगमकाऽभावादिति भावः। *इतरेतरयोगद्वन्द्व इति*॥ समाहारद्वन्द्वे, उत्तरपदलक्ष्याऽर्थसमाहारस्य चशब्देन विवरणादुक्तमितरेतरेति। धवखदिरावित्यादिद्वन्द्वघटकपदाऽशक्यसाहित्यस्य विग्रहवाक्यस्थचशब्देन विवरणवदित्यर्थः। इदं चाऽन्वयप्रयोजकरूपवत्त्वं योग्यता। एवञ्च 'घटेन जलमाहर' इत्यत्र जलाऽऽहरणप्रयोजकतया छिद्रेतरत्ववत् प्रकृते द्वित्वाऽन्वयप्रयोजकतयाऽपदार्थसाहित्यस्याऽपि भानमित्यभ्युपेत्योक्तम्। तत्र साहित्यस्य द्वित्वाऽऽद्यतिरिक्तस्याऽननुभवात्तस्य द्विवचनादिनैवोपस्थितेर्न तत्र समासघटकप्रत्येकपदवृत्तिः। तस्यैव चेन विवरणमिति मताऽन्तरन्तु वक्ष्यते—*तुल्यत्वादिति*। भाव-

परीक्षा

पस्य वाच्यतया कृदन्त इव आख्यातस्थलेऽपि तस्या अशब्दार्थत्वेन प्राधान्यं न स्यादित्याशङ्क्य समाधत्ते—*तथासतीत्यादिना*। *आक्षिप्तेति*। जातावेव तन्मते शक्तिस्वीकारात्। ननु पचतीत्यस्य पाकानुकूलाभावनेति विवरणं दृश्यते; तत्समानार्थकपदान्तरेण तदर्थकथनं हि विवरणम्, तच्चाख्यातस्य भावनार्थकत्व एवोपपद्यत इत्याशयेनाह-*पचतीत्यादाविति*। *कर्त्तुरपीति*। पचतीत्यस्यैककर्त्तृका पचिक्रियेति विवरणस्य सर्वसम्मतत्वात्। ननु कर्त्तृविवरणं न वाच्यार्थविवरणमिति दृष्टान्तेनाशङ्क्य निराचष्टे-*न चेति*। पचतीत्यस्य पाकं करोतीति विवरणमपि कैश्चित्क्रियते तन्मतेनायं दृष्टान्तः। *इतरेतरयोगद्वन्द्व इति*। धवखदिरावित्यादिद्वन्द्वघटकशब्दानां साहित्ये यद्यपि शक्तिर्नास्ति; तथाऽपि चकारेण तस्य विवरणं दृश्यते, समाहारद्वन्द्वे तूत्तरपदस्य ल-

किञ्च—'पचति देवदत्तः' इत्यत्राऽभेदान्वयदर्शनात्तदनुरोधेन कर्तुर्वाच्यत्वमावश्यकम् । पक्ता देवदत्त इतिवत् । न चाऽभेदबोधे समानविभक्तिकत्वं नियामकम् । तच्च तत्र नास्तीति वाच्यम् ।

---

दर्पणः

नापदेनाऽऽख्यातस्य विरणमप्यपदार्थविवरणमित्यस्यापि वक्तुं शक्यत्वादित्यर्थः । स्वस्वबोधाऽनुसारिविवरणस्य नाऽर्थनिर्णायकत्वमित्यप्युभयोः समानमिति भावः ।

नन्वाख्यातस्य कर्तृवाचित्वे तदाक्षिप्तभावनायाः प्राधान्याऽनुपपत्तिः । नचाऽकृतिवादे जात्याक्षिप्तव्यक्तिवत् प्राधान्यमुपपादितमेवेति वाच्यम् । दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यात्, तथा हि कर्त्रा स्वस्वरूपनिरूपकतया भावनाऽऽक्षेप्तव्या, भावनाविरहिणः कर्तृत्वासम्भवात् । ततश्च धर्मिग्राहकमानसिद्धगुणत्वेन प्राधान्याऽसम्भवः, कृतीव, जात्या तु परिच्छेद्यतयाऽवगतस्य द्रव्यस्य तथैवाऽऽक्षेपाद् भवति तस्य प्राधान्येन भानमिति प्राधान्याऽनुरोधाद्भावनाया वाच्यत्वमावश्यकमित्यतो दूषणाऽन्तरमाह-*किञ्चेति* । *अभेदाऽन्वयदर्शनादिति*। देवदत्ताऽभिन्नैककर्तृको वर्त्तमानो व्यापार इत्याकारकबोधस्याऽऽकरसम्मतत्वादित्यर्थः। *तदनुरोधेनेति*। अभेदाऽन्वयाऽनुरोधेनेत्यर्थः । *आवश्यकमिति* । अन्यथाऽनुभूयमानतादृशबोधाऽपलापाऽऽपत्तिरिति भावः । *नियामकमिति* । तद्विभक्त्यन्तनामार्थनिष्ठाऽभेदसंसर्गावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धिं प्रति तद्विभक्त्यन्तपदजन्योपस्थितिहेतुत्वस्य, नीलो घट इत्यादौ क्लृप्तत्वादित्यर्थः । *तच्चेति* । अभेदान्वयबोधकप्रयोजकसमानविभक्तिकत्वं चेत्यर्थः । *तत्र*—देवदत्तः पचतीत्यादौ । तादृशनियमे व्यतिक्षणया समाहारप्रतिपादकतेति भावः ।

परीक्षा

*भावनायामपीति*। भवन्मते भावना न धातुवाच्या, तस्याः प्रतीतिस्तु भवतीति तस्याः अपदार्थभूताया विवरणमित्यपि वक्तुं शक्यमिति भावः।

नन्वाख्यातस्य कर्तृवाचकत्वे भावनायाः प्राधान्यं न स्यात् । आक्षिप्ताया भावनाया गुणत्वात्, जात्याक्षिप्तव्यक्तेस्तु परिच्छेद्यत्वेन सम्भवति प्राधान्यमत आह—*किञ्चेति* । *दर्शनादिति । देवदत्तादिभिन्नैककर्तृको वर्तमानो विक्लित्यनुकूलो व्यापार इत्याकारकस्य शाब्दबोधस्यानुभवसिद्धत्वात् । *आवश्यकमिति* । पदप्रतिपाद्यस्यार्थस्य पदबोध्यार्थे प्रकारतया भानस्य सर्वत्र दर्शनात्कर्त्तुर्वाच्यत्वमावश्यकम् । अत एव पचतीति शब्दजन्यबोधे सति कः कीदृश इति प्रश्नो; देवदत्तो घनश्याम इत्युत्तरं च सङ्गच्छते तत्र दृष्टान्तमाह—*पक्ता देवदत्त इतिवदिति* । पाककर्त्रभिन्नो देवदत्त इत्याकारकस्य शाब्दबोधस्य ततो जननवदित्यर्थः। *अभेदबोध इति* । अभेदसम्बन्धावच्छिन्नप्रकारतान्वयबोधे इत्यर्थः । *समानविभक्तिकत्वम्*—विशेष्यवाचकस्य शब्दस्य विशेषणवाचकशब्दोत्तरविभक्तिसजातीयविभक्तिकत्वम् । *नियामकमिति* । नीलो घट इत्यस्मादिव नीलस्य घट इति शब्दादभेदान्वयबोधो न जायत इत्यतोऽभेदसम्बन्धावच्छिन्ननामार्थप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधे विशेष्यवाचकस्य विशेषणवाचकोत्तरविभक्तिसजातीयविभक्तिकत्वज्ञानं कारणमिति कार्य्यकारणभावस्यावश्यकत्वादिति भावः । तादृशकार्यकारण-

'सोमेन यजेत' 'स्तोकं पचति' 'राजपुरुष' इत्यादावव्यभेदबोधाऽनाप-

दर्पणः

रेकव्यभिचारस्थलानि दर्शयति–*सोमेनेत्यादिना* ।

नन्वत्र यागे सोमस्य करणत्वेनैवान्वयात् कथमुक्तनियमस्य व्यभिचार इति चेद्? न। सोमस्य यागभावनायां करणत्वेनाऽन्वये यागस्याऽपि तत्र करणत्वेनैवाऽन्वयात् 'सोमेन यागेनेष्टं भावयेद्' इत्युभयविधाने वाक्यभेदप्रसङ्गः। सोमस्य यागवत् फलभावनाकरणत्वेन प्राधान्यापत्तिः, यागार्थत्वानुपपत्तिः, प्रत्ययवाच्यफलभावनायाः समानपदोपात्तयागेनैव करणाकाङ्क्षानिवृत्तेर्विभिन्नपदोपात्तस्य सोमस्य करणत्वेनाऽन्वयानुपपत्तिश्च। 'सोमेन यागम्' इत्यन्वयाभ्युपगमे यद्यपि सोमस्य न यागार्थत्वानुपपत्तिः; करणत्वेनैवान्वयात्, तथापि प्रत्ययार्थभावनाकरणत्वेन उपस्थितस्य साध्यत्वेनाऽन्वयानुपपत्तिर्दुष्परिहरैवेति सोमपदस्य मत्वर्थलक्षणया 'सोमवता यागेनेष्टं भावयेत्' इति विशिष्टार्थविधानाद्वाक्यभेदप्रसङ्गो नेति मीमांसकसिद्धान्तः। तत्र चोक्तनियमे व्यभिचारो दुर्वार इति भावः। *स्तोकं पचतीति*। अत्रापि धात्वर्थव्यापारजन्यफलसम्बन्धिनि फले विभिन्नविभक्तिकस्तोकपदार्थस्याभेदान्वयादित्यर्थः। ननु समानविभक्तिकत्वं नामाऽर्थयोरेवाऽभेदाऽन्वयबोधे प्रयोजकम्। अत एव व्युत्पत्तौ द्विवचनस्यैवोल्लेखः। नामत्वं च वक्ष्यते। प्रकृते चाऽनुयोगिप्रतियोगिनोर्नामार्थत्वाभावान्नोक्तदोषोऽत आह—*राजपुरुष इति*।

परीक्षा

भावे व्यभिचारमाह—*सोमेनेत्यादिना*। सोमाभिन्नेन यागेनेष्टम्भावयेदित्याकारकस्य शाब्दबोधस्यानुभवसिद्धत्वात्। न च यागरूपायां भावनायां सोमस्य करणतया बोधोऽस्त्विति न व्यभिचार इति वाच्यम्। सोमस्य तत्र करणत्वेनान्वये यजधात्वर्थफलस्य यागस्यापि करणत्वेनान्वयात्। एककरणावरुद्धे करणान्तराकाङ्क्षाया अभावेन सोमेन यागं भावयेत्, यागेनेष्टं भावयेदित्याकारको बोधः स्यात्, तथा च वाक्यभेदस्यापत्तिरिति सोमपदार्थोऽपि याग एव वाच्यः; सोमादिपदानां ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यत्रेव नामधेयपरत्वात्। एवं प्रत्ययवाच्यभावनायाः समानपदोपात्तत्वाद्धात्वर्थफलेनैव करणतयाऽन्वयेन करणाकाङ्क्षाशान्तेर्विभिन्नपदोपात्तस्य सोमस्य तत्रान्वय एव न स्यादित्यभिप्रायात्। न च सोमस्य धात्वर्थफलेऽभेदेनान्वयस्वीकारे सोमपदात्तृतीयानुपपत्तिः; क्रियाविशेषणानां कर्मत्वादिति वाच्यम्? यत्र फलस्य कर्मतयान्वयविवक्षा तत्रैव तद्विशेषणवाचकाद् द्वितीया; यत्र तु फलस्यैव करणतया भावनां प्रति अन्वयः, तत्र तत्समानाधिकरणपदात्तृतीयाया न्याय्यत्वात्। न च फलस्य व्यापारोत्तरकालिकत्वेन कथं तत्र करणत्वमिति वाच्यम्? भावनाभाव्यनिवर्तकत्वरूपपारिभाषिककरणत्वस्य विवक्षितत्वात्। तत्र "करणे यज" इतिसूत्रमेव मानम्। स्थलान्तरेऽप्युक्तकार्य्यकारणभावे व्यभिचारोऽस्तीत्याह—*स्तोकं पचतीति*। अत्र स्तोकपदार्थस्य फले कर्मणि, अभेदेनान्वयो दृश्यते, विशेष्यवाचकस्य धातोः समानविभक्तिकपदोपस्थाप्यं तु नास्तीति व्यभिचार इति भावः। नन्वभेदसम्बन्धावच्छिन्ननामार्थनिष्ठप्रकारतानिरूपितनामार्थनिष्ठविशेष्यताशाली यत्रान्वयबोधस्तत्रैवोक्तं समानविभक्तिकत्वं नियामकमिति भ्रम इति; नोक्तस्थले व्यभिचार इत्यत आह—*राजपुरुष इति*।

त्तेः । न च लक्षणया कर्त्तुरुक्तत्वात्सामानाधिकरण्यम् । पिङ्गाक्ष्यादियौगिकानामपि द्रव्यवाचित्वाऽनापत्तेः । एवं वैश्वदेवीत्यादितद्धि-

---

दर्पणः

यद्यपि "सोमेन यजेत" इत्यत्रेव "देवदत्तः पचति" इत्यत्रापि समानविभक्तिकत्वस्याऽतन्त्रतयाऽभिमतबोधान्वयानुरोधात् कर्तृवाचित्वं सिद्धमेव, तथाऽपि व्युत्पत्तेर्नामार्थद्वयविषयकत्वेऽपि व्यभिचारो दुरुद्धर एवेत्याशयेन नामार्थद्वयस्थलमुपात्तम् । नैयायिकमतेन चेदम् । तैः कर्मधारये षष्ठीतत्पुरुषे च पूर्वपदशक्यलक्ष्यान्यतरस्योत्तरपदार्थेऽभेदान्वयोपगमात् । स्वमते तु जहत्स्वाऽर्थवृत्त्यभ्युपगमेन पूर्वोत्तरपदार्थयोरन्वयस्यैवाऽभावेनोक्तव्युत्पत्तेरप्रसरादिति बोध्यम् । इदमुपलक्षणं षष्ठ्यर्थबहुव्रीहेरपि॥

अपरे तु—उक्तव्युत्पत्तौ नामांशेऽसमस्तत्वस्यापि विशेषणान्नोक्तस्थले व्यभिचार इत्याहुः अधिकमग्रे वक्ष्यते । *सामानाधिकरण्यमिति* । पदयोरेकार्थाऽभिधायित्वमित्यर्थः । *यौगिकानामिति* । योगोऽवयववृत्तिस्तन्मात्रपुरस्कारेण प्रवृत्तानामित्यर्थः । *द्रव्यवाचित्वाऽनापत्तेरिति* । धर्मिशक्तत्वाऽनापत्तेरित्यर्थः । *एवमिति* । लक्षणयैव सामानाधिकरण्योपपादने इत्यर्थः । इत्थमेवेति वार्थः । *वैश्वदेवीत्यादीति* । द्रव्यवाचित्त्वाऽनापत्तेरित्यनुषज्यते । तथा च बलाबलाऽधिकरणोच्छेदाऽपत्तिरिति भावः ।

तथाहि—"तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्" इति श्रूयते । अत्रायं संशयः–किमनया श्रुत्याऽऽमिक्षावाजिनोभयगुणकमेकं कर्म विधीयते ? अथवा तत्तद्गुणदेवताभिन्नं कर्मद्वयम् ? इति । वाजेनान्नेनाऽऽमिक्षारूपेण सम्बन्धाद्वाजिनो विश्वे देवाः,ताननूद्य वाजिनगुणो विधीयते । तेनोभयगुणकं वैश्वदेवमेकं कर्मेति । पूर्वपक्षे, 'वैश्वदेव्यामिक्षा' इत्यत्र तद्धितस्य देवतासम्बन्धार्थकतया श्रौतः सम्बन्धो, 'वाजिभ्यो वाजिनम्' इत्यत्र तु वाक्येन सः । सत्यामपि पदान्तरापेक्षायां

परीक्षा

नैयायिकसम्मतशाब्दबोधे न व्यभिचारोऽत्र दर्शितस्तेषां मते हि तत्पुरुषसमासे पूर्वपदस्य विग्रहवाक्ये श्रूयमाणा या पूर्वपदाद्विभक्तिस्तदर्थविशिष्टलक्षणायाः सत्वात् । एवं च प्रकृते राजपदलक्ष्यार्थस्य राजसम्बधिनोऽभेदेन पुरुषेऽन्वयदर्शनेन व्यभिचारो द्रष्टव्यः, विभक्तेः साजात्यं च–विभक्तिविभाजकधर्मेण प्रथमान्तत्वादिना बोध्यम् । *लक्षणया*—आख्यातस्य लक्षणया । युगपद्वृत्तिद्वयविरोधश्चाप्रामाणिक इति भावः । स्वमतरीत्या समासादिवृत्तावेकार्थीभावस्य स्वीकारात्, लक्षणाया अभावान्न राजपुरुष इत्यत्र व्यभिचारः, राजसम्बन्धिपुरुषे राजपुरुषेति समुदायस्य शक्तिस्वीकारात्, किन्तु स्तोकं पाक इत्यादौ व्यभिचारः, यदि च 'नामार्थयोः' इति व्युत्पत्तौ नामार्थत्वं नामजन्यप्रतिपत्तिविशेष्यत्वमुच्यतेः तदा प्रकृते प्रकृतिप्रतिपाद्यक्रियायामन्वयात्, घञर्थस्य सिद्धावस्थापन्नार्थस्य विशेष्यत्वात्तत्र स्तोकपदार्थानन्वयान्न व्यभिचार इति विभाव्यते, तदा स्तोकं पक्त्वा व्रजतीत्यत्र व्यभिचारो द्रष्टव्यः । *लक्षणयेत्यादि* । भावनया शक्तस्याख्यातस्य भावनाश्रये लक्षणया द्वयोः सामानाधिकरणमित्यर्थः । *यौगिकानाम्* । योगोऽवयवशक्तिस्तन्मात्रपुरस्कारेण वृत्तानाम् । *अनापत्तेरिति* । तथा च सिद्धान्ते भवदीये अल्पवाक्यवाक्ये द्रव्येऽरुणादिपदप्रतिपाद्यस्या-

त्वमिति सुबर्थनिर्णये वक्ष्यते। न ह्ययं घटः केनचिद् दृष्टो ग्रामोऽयं केनचिद् गत इति शक्यं कर्म्मदर्शनेनाऽवगन्तुम्। घटं करोतीति निर्वर्त्त्ये सोमं सुनोतीति विकार्य्यें च तज्ज्ञातुं शक्यमिति न तत् प्राप्यम्। तथा च घटादेर्दृश्यादौ प्राप्यकर्म्मत्वान्नोक्तातिप्रसङ्ग इति भावः।

---

दर्पणः

विधमित्येवं वक्तुं युक्तम्। तथाहि-हरिणा—

"तयोरेभ्यस्त्रिधा मतम्। तच्चेप्सिततमम्"—

इत्यादिना पार्थक्येन विभजनात् तदनुसृत्याऽत्रापि तथैवोक्तमिति ध्येयम्॥ *प्राप्यत्वञ्चेति*॥ आद्ययोर्लक्षणे तु सुबर्थनिर्णये वक्ष्यते॥ *वक्ष्यत इति*॥ क्रियाकृतविशेषाणामिति कारिकयेत्यर्थः। कर्मगतविशेषाधायकक्रियार्थकत्वं कर्मस्थक्रियकत्वं कर्मवद्भावप्रयोजकमिति दर्शयितुं तदन्वयव्यतिरेकौ दर्शयति-* न हीत्यादि*॥ *सोमं सुनोतीति विकार्य्य इति*॥ नन्वाद्ययोः कर्मस्थक्रियकत्वेन कर्मवद्भावविषयत्वेऽपि तत्र कथं सोमं सुनोतीत्यस्य विकार्य्यलक्षणाक्रान्तत्वम्। प्रकृतेः सोमस्य परिणामित्वाऽनवगमात्। तदुक्तम्—'प्रकृतेस्तु विवक्षायां विकार्य्यम्' इति। विवक्षायामित्यस्य परिणामित्वेनेत्यादिरिति चेदित्थं चूर्णीकरणरूपाऽभिषवैकदेशचूर्णं प्रति प्रकृतिसोमस्य परिणामित्वविवक्षया तदुपपत्तिः।

अन्ये तु-क्रिया यद्धर्मनाशकं फलं जनयति तद्विकार्य्यमिति लक्षणाऽभिप्रायेण सोमे विकार्य्यनिर्देशः। तथाहि—आरम्भकसंयोगनाशकविभागानुकूला क्रिया सुनोतेरर्थः। सोमपदं च प्रकृते तदवयवे लाक्षणिकम्। तथाच होमावयवरूपसोमपदाऽर्थवृत्त्यारम्भकसंयोगस्य धात्वर्थक्रियाजन्यविभागेन नाशाद्विकार्य्यत्वोपपत्तिरित्याहुः।

*ज्ञातुं शक्यमिति*॥ एतेन क्रियाकृतविशेषधर्मप्रकारकप्रतीतियोग्यत्वं कर्मवद्भावप्रयोजकमित्युक्तं भवति। प्राचीननैयायिकमते तु प्रकृते कृञ उत्पत्तिरूपफलावच्छिन्ने यत्ने लक्षणया कर्मवद्भावोपपत्तिः॥ *नोक्तातिप्रसङ्ग इति* ॥ न कर्मवद्भावापत्तिरित्यर्थः।

प्राचीननैयायिकमते तु ज्ञानं करोतीत्याद्यप्रयोगात् साध्यत्वे फले यत्ने च कृञः शक्तिरेव। तथाच घटादौ साध्यत्वरूपविशेषधर्मप्रकारकप्रतीतेः सार्वजनीनत्वात्,

परीक्षा

स्थिता यादृशी सत्ता कर्मणस्तदपेक्षया व्यापारोत्पत्त्यनन्तरं कर्मस्वरूपावस्थायास्तादृशत्वमेव यत्र, तत्र न कर्मवद्भाव इति फलितोऽर्थः। ईप्सितस्यैव त्रैविध्यप्रदर्शनम्, हरिणा ईप्सितकर्मापेक्षयाऽनीप्सितयोर्द्वेष्योदासीनयोः पार्थक्यं वर्णितम्; तदभिप्रायेण। वस्तुतस्तु तयोरपि उक्तेष्वन्तर्भावः सम्भवति; निर्वर्त्यादीनां स्वरूपनिर्णयोऽग्रे भविष्यति। तथाच कर्मगतो यो विशेषो व्यवहारयोग्यस्तत्प्रयोजकव्यापारार्थको यो धातुस्तत्कर्मणः कर्तृत्वविवक्षायां कर्मवद्भाव इति सिद्धम्; तदेतत्स्पष्टतया बोधयितुमन्वयव्यतिरेकावाह-*न ह्ययमित्यादिना*। अत्रेदमवधेयम्—करोतेर्य्यत्नमात्रार्थकत्वे या कर्मवद्भावानुपपत्तिर्वर्णिता; सा शक्यार्थमादायैव, यदि तूत्पत्त्यनुकूलव्यापारे लक्षणा प्राचीननैयायिकानुसारिभिरभ्युपेयते; तदा तेषामपि मते नानुपपत्तिः। किञ्च फलव्यापारोभयोर्वाच्यतायां [illegible] स्वीकारा

दर्पणः

तादृशप्रतीतियोग्यतायास्तत्राऽनपायादनायासेनैव कर्मवद्भावोपपत्तिः । यदि च कर्तृगतविशेषाऽऽधायकक्रियार्थकत्वं तत्स्थक्रियकत्वमिति लक्षणे पच्यादिकर्त्तरि श्रमरूपविशेषदर्शनाज्ज्ञानात्यादिकर्त्तरि तददर्शनाचाऽतिव्याप्त्यादिदोषादुक्तभाष्येण—

विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता ।
क्रियाव्यवस्था त्वन्येषां शब्दैरेव प्रकल्पिता

इति हरिकारिकोत्तरार्द्धेन च पूर्वोक्तलक्षणयोरेव निर्भरः प्रतीयते इत्युच्यते; तदाऽपि न क्षतिः । कर्मस्थक्रियकलक्षणे जानात्यादिभिन्नत्वस्य षोपदेशलक्षणे ष्वष्काद्यन्यतमत्वस्येव कर्तृस्थक्रियकलक्षणे जानात्याद्यन्यतमत्वस्यापि निवेशेन करोतौ कर्मस्थक्रियकत्वस्य जानात्यादौ कर्तृस्थक्रियकत्वस्य चोपपत्तेः । अत एव हरिणाऽपि-'शब्दैरेव प्रकल्पिता' इत्यत्र शब्दपदमुपात्तम् । शब्दप्रतिपाद्याऽर्थगतविशेषैः शब्दैश्चे-

परीक्षा

त्करोतेरपि साध्यत्वाख्यविषयताविशेषानुकूलव्यापारवाचकतया तस्याः कर्मनिष्ठत्वान्नानुपपत्तिः । प्रकृते नैयायिकमतखण्डनपरो ग्रन्थस्तु केवलयत्नमात्रप्रतिपादकत्वपक्षे प्राप्यत्वस्य क्रियाकृतविशेषानुपलभ्यमानत्वस्वरूपत्वस्य कथनेन दूषणमपि तथैव । न च यत्र कर्मणि क्रियाकृतो विशेष उपलभ्यते; तत्र क्रिया कर्मस्था इति यथोच्यते, तथा यत्र कर्त्तरि क्रियाकृतो विशेष उपलभ्यते; तत्र क्रियाकर्तृस्था इत्यपि स्यात् । एवञ्च पच्यादिकर्तरि क्रियाकृतस्य श्रमस्योपलम्भात्, तस्य कर्तृस्थक्रियकत्वव्यवहारोऽपि स्यादिति वाच्यम् ? एकीयमतत्वेन तथा वर्णनात् । अत एव हरिणा—

विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता ॥

इति प्रदर्श्य सिद्धान्त उक्तः ।

क्रियाव्यवस्थात्वन्येषां शब्दैरेव प्रकल्पिता ।

इत्यनेन । अन्येषां भाष्यानुसारिणां शब्दैः लक्षणविशेषप्रतिपादकशब्दैर्यत्रोक्तान्यतरावच्छेदकसम्बन्धेन कर्तृकर्मोभयसाधारणं धातुवाच्यं फलं भवति; तत्र क्रियायाः कर्तृत्वमिति । यत्र तु न तथा, तत्र क्रियायाः कर्म्मस्थत्वमिति । एवं च पच्धातुप्रतिपाद्यस्य विक्लित्तिरूपफलस्योक्तान्यतरावच्छेदकसम्बन्धेन नोभयसाधारण्यमिति । पच्-धातुकर्मस्थक्रियक एव, न च पूर्वकालस्थितरूपादिध्वंसपूर्वकरूपान्तराद्युत्पत्तिरूपफलस्य या व्यापारजन्यता तदवच्छेदकसम्बन्धः स्वरूपसम्बन्ध एव वाच्यः । उत्पत्तेराद्यलक्षणसम्बन्धरूपत्वात् । एवं च कार्य्यतावच्छेदकसम्बन्धेन फलाधिकरणे तण्डुलादौ क्रियारूपस्य व्यापारस्यावृत्तित्वेन कथं तयोः कार्य्यकारणभावः । यदि स्वजन्यरूपादिध्वंसवत्वमेव कारणातावच्छेदकसम्बन्ध इत्युच्यते, तदा फलसमानाधिकरणव्यापारवाचकतया ऽकर्म्मकत्वापत्तिरिति वाच्यम् ? व्यापारनिष्ठायाः फलकारणतावच्छेदकसम्बन्धः स एव फलव्यधिकरणव्यापारवाचकत्वमित्यत्र व्यापारे फलवैयाधिकरण्यं तु फलतावच्छेदकसम्बन्धेन यत् फलानधिकरणं तन्निरूपितव्यापारतावच्छेदकसम्बन्धावच्छिन्नाधेयत्वरूपम् । व्यापारतावच्छेदकसम्बन्धस्तु न फलकारणतावच्छेदकसम्बन्धः; किन्तु समवायादिरूपो विलक्षण एवेति । तेन सम्बन्धेन फलवैयधिकरण्यस्याक्षतत्वात् । उक्तं हि भाष्ये-*अन्येषां मतम्* । न च कर्तृस्थभावकानां

धातूनां फलावाचकत्वे त्यजिगम्योः पर्य्यायतापत्तिः । क्रियावाचकत्वाविशेषात् । फलस्योपलक्षणत्वेऽप्येकक्रियाया एव पूर्वदेशविभागोत्तरदेशसंयोगजनकत्वादुक्तदोषतादवस्थ्यमित्यपि वदन्ति ।

---

दर्पणः

ति । दर्शनान्तरीयां युक्तिमुपन्यस्यति—*धातूनामिति* ॥ त्यजिगम्योरित्युपलक्षणं तादृशधातुमात्रस्य ॥ *पर्यायतापत्तिरिति* ॥ तच्छक्यताऽवच्छेदकाऽवच्छिन्नशक्तत्वस्यैव पर्य्यायतापदार्थत्वादिति भावः ।

ननु त्यजिगम्योः क्रमेण विभागसंयोगोपलक्षितव्यापाराऽर्थकत्वम्, एवञ्च पर्य्यायलक्षणे तदुपलक्षणेतरानुपलक्षितत्वस्याऽपि विशेषणान्नोक्ताऽऽपत्तिरत आह—*उपलक्षणत्वेऽपीति* । उपलक्षणत्वं च तत्पदजन्यबोधविषयत्वेन शक्त्यविषयत्वे सति शक्तिविषयत्वम् । *जनकत्वादिति* ॥ तथाच संयोगविभागयोः स्वार्थव्यापारजन्यत्वाऽविशेषाद् गम्यर्थव्यापारे संयोग एवोपलक्षणं, नो विभाग इत्यत्र विनिगमकाऽभावादुभयस्यैवोपलक्षणत्वे उक्तापत्तिर्दुर्वारेति फलेऽपि शक्तिरावश्यकीति भावः । अत्र 'ग्रामं

परीक्षा

कर्म्मणि क्रियायाः प्रवृत्तिरस्तीति । कर्मणि—कर्ममात्रे; स्वसिद्धान्तरीत्या फलव्यापारोभयवाचकत्वं धातूनां सकर्मकत्वाकर्मकत्वं कर्म्मस्थक्रियकत्वं च यथायथमूहनीयम् ।

अथ नैयायिकैर्नवीनैर्यथाफलस्य धातुवाच्यत्वं व्यवस्थापितं तद्रीत्या स्वयमप्याह—*धातूनामित्यादिना* । *त्यजिगम्योरिति* । इदमुपलक्षणं धातुमात्रस्य । *पर्य्यायत्वापत्तिः*—पर्य्यायवाचकत्वापत्तिः । इयमापत्तिर्व्यापारत्वस्य शक्यतावच्छेदकत्वमतेन । यदि तु फूत्कारत्वादेः पचादिवाच्यतावच्छेदकस्य न गम्धातुवाच्यतावच्छेदकत्वमितिरीत्या न सर्वेषां पर्य्यायत्वापत्तिरित्युच्यते; तथापि त्यजिगम्योः पर्य्यायत्वापत्तिरस्त्येव । अत्रैकधर्मावच्छिन्नस्य व्यापारस्य द्विविधफलजनकत्वात् । ननु त्यज्धातोर्विभागोपलक्षिते गम्–धातोः संयोगोपलक्षिते व्यापारे शक्तिरिति न पर्य्यायत्वापत्तिरत आह—*फलस्येति* । अशक्यत्वे सति शक्यव्यावर्त्तकत्वमुपलक्षणत्वम् । तद्यपि विभागादेः स्वीक्रियते, तथापि शक्यतावच्छेदकधर्म्मैक्यात्पर्य्यायत्वापत्तिरस्त्येव । स्वार्थव्यापारजन्यतायाः संयोगविभागयोः सत्वात्—गम्धात्वर्थव्यापारस्य संयोग एवोपलक्षको न विभाग इत्यस्य विनिगमनाविरहेण वक्तुमशक्यत्वात् । नचास्मिन्मते फलस्य शाब्दबोधविषयत्वोपपत्तये द्वितीयादिकर्मप्रत्ययवाच्यत्वं तस्य स्वीकार्य्यम् । एवञ्च त्यजिगम्योः पर्यायत्वे सति त्यजतीति यत्र प्रयोगस्तत्र गच्छतीति प्रयोगापत्तिरिति हि दोषो वक्तव्यः; स नास्ति द्वितीयार्थसंयोगनिष्ठजनकतासम्बन्धावच्छिन्नप्रकारतानिरूपितव्यापारनिष्ठविशेष्यताशालिशाब्दबोधे गम्धातुसमभिव्याहारस्य तादृशसम्बन्धावच्छिन्नविभागप्रकारताकशाब्दबोधे त्यज्धातुसमभिव्याहारस्य यज्ज्ञानं तस्य कारणत्वं स्वीकार्य्यमिति न दोष इति वाच्यम्? एवमपि गमनं त्याग इत्यनयोः पर्य्यायेण प्रयोगापत्तेर्दुर्वारत्वात् । नचात्रापि भावार्थकल्युडादेः संयोगविभागयोर्लक्षणास्वीकारेण तत्तत्फलप्रकारकशाब्दबोधे तत्तद्धातुसमभिव्याहारज्ञानस्य कारणत्वकल्पनया न दोष इति वाच्यम्? "प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थः प्रधानम्" इति नियमस्य कृदन्ते क्लृप्तस्य भङ्गापत्तेः । किञ्च सर्वत्र

तस्मादावश्यकं सकर्म्मकाणां फलवाचकत्वम् । अकर्म्मकाणां तु तन्निर्विवादमेव । "भू सत्तायाम्" ( भ्वा० ग० ) इत्याद्यनुशासनाच्च । अत एव–"द्व्यर्थः पचिः" इति भाष्यं सङ्गच्छते इति दिक् ॥ ७ ॥

एवं सिद्ध्यतु फलव्यापारयोर्वाच्यत्वम्; किन्तु आख्यातवाच्यैव सा

---

दर्पणः

गच्छतीत्यादौ द्वितीयाऽर्थसंयोगादिरूपफलाऽन्वयित्वस्यैव विनिगमकत्वाद् गमनक्रियायां संयोगस्यैवोपलक्षणत्वमित्यस्य सुवचतयाऽन्यत्र लक्षणयोपपत्तेश्च नोक्तरीतिः साध्वीत्यस्वरसोऽपि वदन्तीभ्यां सूचितः । उपसंहरति—*तस्मादिति* ॥ उक्तयुक्तिसङ्गतेरित्यर्थः ।

*निर्विवादमेवेति* ॥ स्वार्थफलसमानाऽधिकरणव्यापारवाचकत्वरूपाऽकर्मकत्वस्य धातोः फलवाचकत्वं विनाऽनुपपन्नत्वादिति भावः । ननु सकर्मकत्वं पूर्वोक्तमेव; तद्भिन्नधातुत्वं चाऽकर्मकत्वमिति नोक्ताऽनुपपत्तिरत आह–*भू सत्तायामिति* ॥ गणेषु फलस्यैव निर्देशादिति भावः ॥ *अत एवेति* ॥ धातुमात्रस्य फलवाचकत्वादेवेत्यर्थः ॥ *द्व्यर्थ इति* ॥ द्व्यर्थपदं फलव्यापारोभयार्थकमित्याशयः । ननु 'द्व्यर्थः पचिः' इति भाष्यं पचेरुपादानात्सकर्मकाणां फलार्थकत्वे साधकमस्तु, न त्वकर्मकाणामत आह–*दिगिति* ॥ तथा सति सत्ताद्यर्थनिर्देशवैयर्थ्याऽऽपत्तेः । धातुसामान्यशक्त्या पच्यादेरिव भवत्यादेरपि व्यापारबोधसम्भवादिति दिगर्थोऽवसेयः ॥ ७ ॥

ननु 'व्यापारो भावना सैव' इत्युक्तविवरणेन न व्यापारस्य धात्वर्थतानिर्णयः । पचति पाकं करोतीति विवरणेन आख्यातार्थताया अपि वक्तुं शक्यत्वादिति मीमांसकाशङ्कासमाधानपरतया मूलमवतारयति-*एवमित्यादिना* ॥ *वाच्यत्वमिति* ॥

परीक्षा

लाक्षणिकार्थविषयकशाब्दबोधजनकसामग्रीकल्पना तत्तद्धातूत्तरत्वस्य तत्तत्प्रत्यये विशेष्यत्वस्य तत्तत्फले विशेषणत्वस्य च कल्पना तत्तद्धातुसमभिव्याहारज्ञानस्य कारणत्वस्य कल्पना च कार्य्येति महागौरवमिति फलव्यापारयोर्धातुशक्यत्वकल्पनमेवोचितमित्युपसंहरति—*तस्मादिति* । पूर्वोक्तयुक्तिकदम्बादित्यर्थः । *अकर्मकाणामिति* । एषां फलवाचकतां विना स्वार्थफलसमानाधिकरणव्यापारवाचकत्वरूपाकर्मकत्वस्य निर्वक्तुमशक्यत्वादिति भावः । न च सकर्मकभिन्नत्वमकर्मकत्वम् । सकर्मकत्वं च–द्वितीयाद्यर्थफलव्यधिकरणव्यापारवाचकत्वमित्येवास्त्विति वाच्यम् ? एकस्यैवार्थभेदेन सकर्मकत्वाकर्मकत्वस्वीकारस्योच्छेदापत्तेः । किञ्चाधुनिकैः सर्वत्रार्थकथनावसरे फलस्यव निर्देशःस्वीक्रियते; तदसङ्गतिः स्यात्तदाह—*भू सत्तायामिति* । *अनुशासनात्*–अभियुक्तोक्तेः । *अत एव*–फलव्यापारोभयवाचकत्वादेव । *पचिरिति* । इदं धातुसामान्योपलक्षणम् । *दिगिति*। दिगर्थस्तूक्तो भाष्ये पचिरित्युपादानात्सकर्मकाणामेवोभयार्थत्वमिति शङ्कायास्तु नावसरः । सत्तायामित्यादिफलनिर्देशस्य तेष्वसङ्गत्यापत्तेः । किञ्च तेषामपि धातुत्वावच्छिन्नस्य व्यापारत्वावच्छिन्नशक्यत्वमिति सामान्यतः क्लृप्तो यो निश्चयस्तद्विषयत्वमावश्यकमिति ॥ ७ ॥

अथ व्यापारो भावनेत्युक्तरीत्या न व्यापारस्य धातुवाच्यत्वसिद्धिः; पचतीत्यस्य पाकं करोतीति विवरणदर्शनेन भावनायाः प्रत्ययार्थत्वमेवास्तामिति कस्य-

**भावना, न धातोः। प्राधान्येन प्रतीयमानस्य व्यापारस्य धात्वर्थतायाः प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्य प्राधान्यमिति न्यायविरुद्धत्वात्। "तदागमे हि दृश्यते" इति न्यायविरुद्धत्वाच्च। एवञ्च 'स्वयुक्ताख्या-**

---

दर्पणः

तिङन्तजन्यबोधविषयत्वमित्यर्थः। तथाच—पाकाऽनुकूला भावनेत्यादिविवरणेनाऽपि पचतीत्यस्य पाकाऽनुकूलभावनाबोधकत्वमस्त्वित्यर्थः। यथाश्रुते विवरणेन धातोर्भावनावाचकत्वनिर्णये, किं त्वाख्यातवाच्यैव सा इत्युत्तरग्रन्थाऽसङ्गतेः।

'प्रकृतिप्रत्ययौ'इति न्यायस्य संख्यादौ व्यभिचारमाशङ्क्याह-*तदागमे हीति* ॥ इदं च यः प्रधानं स प्रत्ययार्थ इति न्यायाऽऽकार इत्यभिप्रेत्य तन्मूलसूत्रालोचने तु यः प्रत्ययार्थः स प्रधानमिति न्यायाकारो लभ्यते। तथाहि—'पशुना यजेत' इति श्रूयते। तत्रैकवचनोपात्तमेकत्वं यागे विशेषणमुत प्रकृत्यर्थे इति संशये, पशुपदार्थस्य यागं प्रति गुणत्वात् सम्भावितयावत्पशुकरणेन प्रधानावृत्तौ प्रधानभङ्गापत्त्या यावद्गुणप्रधानाऽऽवृत्तेरयोगादेकत्वविशिष्टपशोर्विधाने त्वेकत्वस्य पशुविशेषणतया यागाङ्गत्वाऽभावात्तदविवक्षितमेव स्यादित्यर्थकेन, "तत्रैकत्वमयज्ञाङ्गमर्थस्य गुणभूतत्वात्" इति सूत्रेण पूर्वपक्षिते, "शब्दवत्तूपलभ्यते तदागमे हि दृश्यते तस्य ज्ञानं यथाऽन्येषाम्" ( जै० अ० ४ पा० १ सू १९ ) इति सिद्धान्तसूत्रम्। शब्दवत्—शब्दवाच्यं, यथा भवति तथोपलभ्यते। एकत्वं हि यतस्तदागमे एकवचनसमवधाने दृश्यते। अतस्तस्य प्राधान्येन प्रतीतिर्यथान्येषामरुणादीनामित्यर्थः। यद्वा 'तदागमे' तत्—एकत्वम्। आगमे—एकवचनविधायकागमे "द्व्येकयोः"इत्यत्र। दृश्यते—एकवचनरूपप्रत्ययार्थत्वेन प्रतीयते, अन्येषां करणादीनामिवेत्यर्थः।

एवञ्च समानप्रत्ययोपात्तत्वप्रत्यासत्त्या विभक्त्यर्थकरणाऽन्वितस्याऽरुणाधिकरणन्यायेन प्रथमं क्रियायामन्वयः पश्चात् प्रकृत्यर्थे। तथाच पश्वेकत्वोभयकरणको याग इति बोधेनैकत्वस्य यागाङ्गत्वाऽवगमान्नानेकपशुभिर्याग इति तद्भावः। प्राधान्यं च प्रकृत्यर्थाऽविशेषणत्वमेव, प्रत्ययार्थमादाय न्यायावताराद्यः प्रत्ययार्थ इति भागस्य न्यायघटकत्वम्। प्रकृते आख्याताऽसमवधाने भावनाऽबोधात् तस्याप्राधान्येन भानमिति तत्सङ्गतिरिति बोध्यम्।

ननु सकर्मकत्वाऽनुगतकर्त्तृत्वयोर्दुर्वचत्वमेवैतन्मते दूषणमत आह-*एवञ्चेति*।

परीक्षा

चिच्छङ्कासम्भवादिति तत्समाधानपरतया मूलमवतारयति—*एवमित्यादिना*। *एवम्*-उक्तहेतोः। *वाच्यत्वम्*-तिङन्तजन्यशाब्दबोधविषयत्वम्। *विरुद्धत्वादिति*। यदि भावना प्रकृतिवाच्या स्यात्, तदा तस्याः प्राधान्यं न स्यादिति भावः। *इति न्यायेति*। तदागमे हि यद् दृश्यते तत्तस्य वाच्यमिति न्यायेत्यर्थः। आगमनमागमः, प्रयोग इति यावत्; तस्मिन् सति दृश्यते ज्ञायते इति तदर्थः। पूर्वोक्तसकर्मकत्वाकर्मकत्वविभागस्याप्युपपत्तिः कर्त्तुं शक्येत्याह—*एवमिति*। स्वं धातुः पचनादिक्रियायाः प्रारम्भेऽपि फलानुत्पादकाले पाको जातो नवेति संशयो दृश्यते; इत्यतः फलस्य [illegible], सेव च सकर्मकत्वाकर्मकत्वविभाग उक्त-

तार्थव्यापारव्यधिकरणफलवाचकत्वं सकर्म्मकत्वम्। आख्यातार्थव्यापाराश्रयत्वञ्च कर्तृत्वं वाच्यम्' इत्यादि वदन्तं मीमांसकम्मन्यं प्रत्याह—

**तस्मात् करोतिर्धातोः स्याद् व्याख्यानं, न त्वसौ तिङाम्।**
**पक्ववान् कृतवान् पाकं किं कृतं पक्वमित्यपि ॥ ८ ॥**

तस्मात्—अभिप्रायस्थहेतोः। सचेत्थम्—फलमात्रस्य धात्वर्थत्वे ग्रामो गमनवानिति प्रतीत्यापत्तिः। संयोगाश्रयत्वात्। फलानुत्पाददशायां व्यापारसत्त्वे पाको भवतीत्यनापत्तिः। व्यापारविगमे फलसत्त्वे पाको विद्यत इत्यापत्तिश्च।

यत्तु-भावप्रत्ययस्य घञादेरनुकूलव्यापारवाचकत्वान्नानुपपत्ति-

---

दर्पणः

भावनाया आख्यातवाच्यत्वे चेत्यर्थः। तथाचाऽऽरब्धे पाके फलाऽनुत्पत्तिदशायां, पाको जातो न वेति प्रश्ने, भविष्यतीत्युत्तराऽनुरोधात् फलमात्रं धातुवाच्यमिति मीमांसकाशयः। हेतोः पूर्वमनुपादानादाह-*अभिप्रायस्थेति*। त्यदादीनां बुद्धिस्थपरामर्शकत्वादिति भावः।

*प्रतीत्यापत्तिरिति*। भावल्युडन्तगमनपदार्थसंयोगात्मकफलस्य ग्रामे सत्त्वाद् ग्रामः संयोगवानितिवद् ग्रामो गमनवानिति प्रयोगस्य प्रामाण्यापत्तेरित्यर्थः। एवमग्रेऽप्यूह्यम्। *फलाऽनुत्पादेति*। फलानुत्पादे तादृशप्रयोगस्य सर्वाऽननुमतत्वादुक्तम्—*व्यापारसत्त्व इति*। *भवतीत्यनापत्तिरिति*। पाकपदार्थस्य विक्लित्तेरवर्त्तमानत्वादित्यर्थः। फलोत्पाददशायामर्थाऽबाधात्तादृशप्रयोगस्येष्टत्वादाह—*विद्यत इत्यापत्तिश्चेति*। व्यापारांशपरित्यागेन फलमात्रस्य धात्वर्थत्वाऽभिप्रायेण तु भविष्यतीत्युत्तरं पाकमुत्पादयतीति विवरणञ्चेति भावः।

*अनुकूलेति*। अनुकूलत्वोत्कीर्त्तनं त्वन्विताऽभिधानवादिनां मतमेतदिति सूचयितुम्। *नानुपपत्तिरिति*। भावविहितल्युड्घञाद्यर्थव्यापारस्य ग्रामादौ बाधान्न पूर्वोक्तप्रयोगापत्तिरित्यर्थः। विक्लित्त्यनुकूलघञाद्यर्थव्यापारस्य कर्त्तृतया भावनादावन्वयान्न पूर्वोक्तप्रयोगाऽनुपपत्त्यापत्तिरिति भावः।

परीक्षा

दिशा कार्य्यं इति तेषां भावः। *मीमांसक*-विचारशीलो धातुप्रकृतिकारकाख्यातमागमोक्तरीत्या यथाकथञ्चित् तथोक्तावपि तत्प्रकृतिककृत्प्रत्ययसमभिव्याहारेऽपि सकर्मकत्वादिव्यवहारो दृश्यते; तस्य तेनानुपपादनान्मन्यतः प्रयोगः। *अभिप्रायस्थेति*—सर्वनाम्नां बुद्धिविशेषविषयतावच्छेदकत्वोपलक्षितधर्म्मावच्छिन्ने शक्तेः स्वीकारादिति भावः। *संयोगेति*। तद्रीत्या गमनशब्दस्य संयोगपर्य्यायत्वात्। *अनापत्तिरिति*—तन्मते फलस्यैव पाकपदार्थत्वात्। *इत्यापत्तिरिति*-तदा तादृशप्रयोगस्य सर्वानुमततयेष्टापत्तिर्न्न सम्भवतीति भावः। *अनुकूलेति*। कस्यचिन्मतेऽन्वि-

रिति ; तन्न । कर्त्राख्यातवत् "कर्त्तरि कृद्" इत्यत एव तद्विधानलाभे, भावे विधायकाऽनुशासनवैयर्थ्यापत्तेः, तद्विरोधापत्तेश्च ।

अथ व्यापारोऽपि धात्वर्थ इत्यभ्युपेयमिति चेद् ? तर्हि धातुत एव सकलव्यापारलाभसम्भवेनाख्यातस्य पृथक्शक्तिकल्पने गौरवमिति । पचतीत्यस्य पाकं करोतीति विवरणात्मा करोतिर्धातोरेव व्याख्यानं–विवरणम् । अतस्तदपि नाख्यातार्थत्वसाधकमिति भावः ।

---

दर्पणः

ननु "कर्त्तरि कृद्" इति विहितस्य कृतः पक्ता पाचक इत्यादौ कर्त्रर्थत्वदर्शनात्तद्विहितघञादीनां व्यापारार्थत्वदौर्लभ्यात्तदर्थत्वबोधनाय भाव इत्यनुशासनं चारितार्थ्यमित्याशङ्कामपाकरिष्यँस्तदनुगुणं दृष्टान्तमाह–*कर्त्राख्यातवदिति* । तथाच–"लः कर्मणि" इति विहितकर्त्राख्यातस्य त्वन्मते व्यापाराऽर्थकत्ववत् "कर्त्तरि कृत्" इति विहितघञादीनामपि व्यापाराऽर्थकत्वसम्भवादित्यर्थः ।

*विरोधाऽऽपत्तेश्चेति* । चो हेतौ ; यतो वैयर्थ्यमतस्तद्विरोधापत्तिरित्यर्थः । उक्तिवैचित्र्यमेतत् । यद्वा भावविहितप्रत्ययानां धात्वर्थानुवादकत्वात् प्रयोगसाधुतामात्रार्थकत्वमिति त्वदीयसिद्धान्तविरोधापत्तेरित्यर्थः । व्याख्यानमित्यस्य विवरणम्—*विवरणमिति* ।

*अतस्तदपीति* । पचतीत्यस्य पाकं करोतीति विवरणमपीत्यर्थः । अपिना दूषयिष्यमाण"प्रकृतिप्रत्ययौ" इति न्यायसमुच्चयः । धातोः पृथग्विवरणं तु तवाऽऽख्यातार्थसंख्याकालव्यापाराणां मध्ये व्यापारस्य कृञा संख्यादेस्तदुत्तरतिङा विवरणवद्धात्वर्थव्यापारस्याऽप्युपपन्नमिति न तदाख्यातार्थत्वसाधकम् । अत एव "कथं ज्ञायते क्रियावचनाः पच्यादयः; यदेषां करोतिना सामानाधिकरण्यं, किं करोति पचति" इति भूवादिसूत्रभाष्ये उक्तम् । तेन विवरणमपि धातोरेवेति स्पष्टमेव बोध्यते इति भावः ।

परीक्षा

तस्य वाच्यत्वमिति मतेन । वस्तुतो व्यापारमात्रस्य तद्वाच्यत्वशङ्का बोध्या । *लाभ इति*—तत्सूत्रस्थकर्तृपदस्य कर्त्तृत्वपरत्वात् । नचैवं 'पक्ता देवदत्तः इत्यादौ सामानाधिकरण्यानुपपत्तिरिति वाच्यम् । तत्र 'कर्त्तरि' इति यत् तस्यावृत्तिं कृत्वा कर्त्तपदस्यैकत्र कर्त्तृत्वपरत्वसम्भवादिति भावः । *तद्विरोधापत्तेश्चेति* । चो हेतौ यतो भावे विधायकानुशासने वैयर्थ्यमतः कर्त्तृपदस्य कर्तृत्वपरत्ववर्णनेन कर्तृत्वे विधानानुपपत्तिरित्यर्थः ।

यत्तु तद्विरोधेति तद्भाष्यविरोधेति–तद्भाष्यविरोधापत्तेरित्यर्थ इति ; तन्न । भाष्यस्याप्रक्रान्तत्वात् । व्यापारस्य धातुवाच्यत्वानुग्राहकं "भावे" इति सूत्रमित्याशयः, करोतिनाख्यातस्य योऽर्थस्तस्य कथनाद्भावनाख्यातवाच्येति तदुक्तिं खण्डयति—*पचतीत्यस्येति* । *तदपि*–पचतीत्यस्य पाकं करोतीतिविवरणमपि । अपिना–"प्रकृतिप्रत्ययौ" इति वक्ष्यमाणन्यायसमुच्चयः । न च पृथक् विवरणादित्थं कल्प्यते इति वाच्यम् ? त्वन्मते संख्याकालभावनानामाख्यातवाच्यत्वेऽपि कृञा तदर्थभावनायास्तदुत्तरतिङा संख्याकालयोरिवास्मन्मतेऽपि [illegible] । करोतिना धात्वर्थ-

मीमांसकोक्तं बाधकमुद्धरँस्तन्मतं दूषयति—न त्वित्यादिना। नाऽसौ तिङां व्याख्यानम्। पक्ववानित्यादावनन्वयापत्तेः।

अयं भावः—"प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थस्य प्राधान्यम्" इत्यत्र हि विशेष्यतया प्रकृत्यर्थप्रकारकबोधं प्रति तदुत्तरप्रत्ययजन्योपस्थितिर्हेतुरिति कार्य्यकारणभावः फलितः। तथाच पक्ववानित्यत्र पाकः कर्म्मकारकं, क्तवतुप्रत्ययार्थः कर्तृकारकम्। तयोश्चारुणाधिकरणोक्तरीत्या वक्ष्यमाणाऽस्मद्रीत्या चान्वयासम्भव इति प्रकृतिप्रत्ययार्थयोरन्वयनियमस्यैवाऽभावे क्व प्राधान्यबोधक उक्तकार्य्यकारणभावः। न च—

---

दर्पणः

पक्ववानिति मूलमपि करोतेराख्यातविवरणत्वाऽभावसाध्यतया व्याचष्टे—*पक्ववानित्यादाविति*। अनन्वयमेव विशदयति–*अयम्भाव इत्यादि*।

*सहार्थमिति*। सम्बद्धार्थमित्यर्थः। ब्रूतः—बोधयतः। तयोः प्रकृतिप्रत्ययाऽर्थयोर्मध्ये प्रत्ययाऽर्थः प्रत्ययवृत्तिग्रहविशेष्यः प्रधानमिति प्रकृत्यर्थप्रकारातानिरूपितविशेष्यताशालीत्यर्थः। तादृशव्युत्पत्तिसिद्धिकार्य्यकारणभावमभिनयेन दर्शयति—*विशेष्यतयेति*। प्रत्ययस्य प्रकृत्यर्थप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधं प्रतीत्यर्थः। हेतुरित्यस्य विशेष्यतासम्बन्धेनेति शेषः।

*अरुणाधिकरणोक्तरीत्येति*। अरुणयेति पदोपात्ताऽऽरुण्यस्य प्रथमं करणत्वेनेतरक्रियायामन्वयो; नामार्थाऽन्वयस्तु पार्ष्ठिक इति तत्रोक्तम्। *वक्ष्यमाणेति*। कारकत्वस्य क्रियाजनकत्वरूपत्वेन क्रियाजनकमिति ज्ञाते, का सा क्रियेत्याकाङ्क्षोदयेन क्रि-

परीक्षा

स्यैव विवरणमित्यत्र भूवादिसूत्रस्थं भाष्यमपि साधकम्। तत्र हि धातोः—क्रियावचनत्वोक्त्यनन्तरम् "कथं ज्ञायते क्रियावचनाः, पचादयः ?" इति प्रश्नानन्तरम्, यदेषां करोतिना सामानाधिकरण्यं "किं करोति, पचतीत्युक्तम्"। *बाधकमिति*। भावनायाः प्रत्ययार्थत्वाभावे तस्याः प्राधान्यं न स्यात्, वक्ष्यमाणन्यायादिति बाधकमित्यर्थः। *पक्ववानिति*। मूलमपि करोतेराख्यातार्थविवरणाभावसाधकमित्याशयेन तद्व्याचष्टे–*पक्ववानित्यादिना*। अनन्वयापत्तिं विशदयति–*अयम्भाव इत्यादिना*। *प्रधानमिति*। प्रकृत्यर्थनिष्ठप्रकारतानिरूपितविशेष्यताश्रयः। एतादृशव्युत्पत्तिसिद्धकार्य्यकारणभावमाह–*विशेष्यतया इत्यादिना*। पक्ववानित्यस्य पाकं कृतवानिति विवरणदर्शनादाह—*तथाचेति*। *कर्त्तृकारकमिति*। "कर्त्तरि कृत्" इत्यनुशासनादिति शेषः। *रीत्येति*। तत्र हि 'अरुणया'इति पदोपस्थितारुण्यस्य प्रथममन्यवत् क्रियायामेवान्वयो; नामार्थान्वयस्तु पार्ष्ठिक इत्येवमुक्तरीत्येत्यर्थः। *वक्ष्यमाणेति*। कारकत्वस्य क्रियाजनकत्वरूपत्वेन तज्ज्ञानोत्तरं का सा क्रियेत्याकाङ्क्षया क्रियायाः साध्यत्वेन बोधोत्तरं जनकाकांक्षया च कारकक्रिययोरेव परस्परमन्वय इति रीत्येत्यर्थः। *अन्वयासम्भव इति*। कारकयोः परस्परमन्वयासम्भव इत्यर्थः। वाजपेयाधिकरणोक्तरीत्याऽन्वयमाशङ्क्य निराचष्टे–*न चेत्यादिना*। तत्र हि 'वाजपेयेन यजेत'इति वि-

सम्बन्धमात्रमुक्तञ्च श्रुत्या धात्वर्थभावयोः ।
तदेकांशनिवेशे तु व्यापारोऽस्या न विद्यते ॥

इति भट्टपादोक्तरीत्याऽसम्बन्धसामान्येन कारकाणामन्वयः शङ्क्यः। योग्यताविरहाद् अन्वयप्रयोजकरूपवत्त्वस्य तथात्वात् । क्रियान्वयि-

---

दर्पणः

याया अपि साध्यरूपायाः साधकाकाङ्क्षया च परस्पराऽन्वयौचित्यमित्याशयेन क्रियात्वमेव हि कारकाऽन्वयिताऽवच्छेदकमिति सुबर्थनिर्णये वक्ष्यमाणरीत्येत्यर्थः । *सम्बन्धमात्रमिति* । "ज्योतिष्टोमेन यजेत" इत्यत्र यजेतेति श्रुत्या धात्वाख्यातार्थयागभावनयोः सम्बन्धसामान्यं प्रतिपाद्यते । तयोः क्रियाकारकभावरूपसम्बन्धविशेषबोधने तु नाऽस्याः श्रुतेः कश्चिदभिधादिरूपो व्यापारस्तद्वाचकपदाऽभावादिति तदर्थः । तथा च यजेतेत्यत्र यागसम्बन्धिभावनेति बोधो, न यागकरणकभावनेति, तद्वत्प्रकृते पाकसम्बन्धी कर्त्तेति बोधः । कर्मत्वादिना तत्संसर्गकबोध एव क्रियाया अपेक्षणादित्याशङ्कितुराशयः । फलस्य कारकत्वेनाऽयोग्यत्वात्तादृशाऽन्वयबोधोऽप्यसम्भवदुक्तिक इत्याह-*योग्यताविरहादिति ।

ननु तत्पदार्थे तत्पदार्थवत्वं योग्यता, अस्ति च सा प्रकृते, पाकप्रयोजकत्ववत्पाकसम्बन्धित्वरूपाऽकर्तुरत आह-*अन्वयप्रयोजकरूपवत्त्वस्येति* ॥ तथाच तत्पदार्थे तत्पदार्थताऽवच्छेदकावच्छिन्नत्वस्यैव योग्यत्वे जलाहरणे घटकरणत्वस्य सत्त्वात्तस्मिन् सुषिरघटस्यापि करणत्वेनाऽन्वयापत्तिः । अस्मन्मते तु सच्छिद्रेतरघटस्य जलाऽऽहरणाऽन्वयप्रयोजकत्वेन तादृशघटे तादृशाहरणान्वयप्रयोजकत्वमिति न तदन्वयापत्तिरिति भावः।

ननु 'घटेन जलमाहर' इत्यत्र घटे छिद्रेतरघटत्ववत् प्रकृते किं कारकान्वयितावच्छेदकं यदभावादनन्वयापत्तिरुद्भाव्यतेऽत आह—*क्रियान्वयित्वमेव हीति* ।

परीक्षा

पयवाक्ये यद्वाजपेयपदं तद्यागसाधनद्रव्यपरमुत कर्मनामधेयमिति संशये द्रव्यपदमिति पूर्वपक्षे वाक्यभेदरूपो दोषः कथितः । वाजपेयेन यागं भावयेद्; यागेन च स्वर्गं भावयेदिति बोधात्—यागभाव्यकभावनायां वाजपेयस्य करणत्वात्स्वर्गभाव्यकभावनायां च यागस्य करणत्वान्नामधेयपरत्वे तु वाजपेयाभिन्नयागकरणिका स्वर्गभाव्यिका प्रयाजादीति कर्त्तव्यताका भावनेति बोधान्न स दोषः, यागे करणत्वं तु भावनाभाव्यनिर्वर्त्तकत्वरूपं पारिभाषिकम्। तत्र पूर्वपक्षे वाक्यभेदापत्तिपरिहारायेयमुक्तिः । श्रुत्या 'वाजपेयेन यजेत' इति श्रुत्या, शब्देन सम्बन्धमात्रमुक्तम्, तस्य सम्बन्धस्यैकांशनिवेशे सम्बन्धविशेषनिवेशेऽस्याः श्रुतेर्व्यापारोऽभिधारूपो व्यापारो नास्तीत्यर्थः । एवं च वाजपेयकरणिका यागसम्बन्धिनी भावनेति बोधान्न वाक्यभेद इति तात्पर्यम् । उत्तरपक्षे तु यागभाव्यकत्वस्वर्गभाव्यकत्वादिना भावनाभेदाद्यस्यां यागकरणकत्वम्; तस्यां न वाजपेयसम्बन्ध इति नेत्थं सम्बन्धसम्भव इति दूषणमुक्तम् । तथा प्रकृतेऽपि पाकसम्बन्धिकर्त्तेति बोधस्य सम्भवाभिप्रायेण शङ्केयम् । कर्म्मत्वसंसर्गकबोधे क्रियापेक्षेति तात्पर्य्यम् । फलस्य कारकत्वेन क्रियायामेव योग्यतया ऽन्वयबोधो; न तु कारकान्तर इत्याशयेन दूषयति—*योग्यतेति* । तामेवोपपादयति—*अन्वयप्रयोजकेति* । अयम्भावः—अन्वयप्रयोजकरूपवत्वमेव योग्यता; न तु तत्प-

त्वमेव हि कारकान्वयितावच्छेदकमिति वक्ष्यते । तदेतदाविष्कर्त्तुं विवरणेन धात्वर्थक्तवत्वर्थयोः कर्मत्वकर्तृत्वे दर्शयति-*कृतवान् पाकमिति*॥

वस्तुतस्तु प्रत्ययार्थः प्रधानमित्यस्य य प्रधानं स प्रत्ययार्थ एवेति वा; यः प्रत्ययार्थः स प्रधानमेवेति वा; नार्थः । अजा, अश्वा, छागी इत्यत्र स्त्रीप्रत्ययार्थे स्त्रीत्वस्यैव प्रधान्यापत्तेश्छाग्यादेरनापत्तेश्च । किन्तूत्सर्गोऽयम् । विशेष्यत्वादिना बोधस्तु तथा व्युत्पत्त्यनुरोधात् ।

---

दर्पणः

ननु कृदर्थकर्त्राक्षिप्तभावनायां पाकादीनां कर्मत्वेनान्वयसौलभ्यान्नोक्तदूषणमत आह-*वस्तुतस्त्विति* ॥ प्रधानप्रत्ययार्थवचनमिति सूत्रस्वरसो यः प्रधानं स प्रत्ययार्थः । 'तदागमे हि' इति न्यायश्च, यः प्रत्ययाऽर्थ इत्यर्थे मूलमिति ध्येयम् । अजेत्यादौ विशेष्याजादिपदार्थस्य प्रत्ययार्थत्वाऽभावेन व्यभिचारस्य स्फुटत्वात् तदुपेक्ष्य द्वितीयकल्प एव व्यभिचारं दर्शयति—*अजेति* ॥

इष्टापत्तावाह-*छाग्यादेरिति* ॥ स्त्रीत्वविशेषणछाग्यादेश्छागनिष्ठस्त्रीत्वादेरिति वाऽर्थः । एकत्र विशेषणतयाऽन्वितस्यापरत्र विशेषणतयाऽन्वये नैराकाङ्क्ष्येण छागीमानयेत्यादौ कर्मत्वादिकारके छागी गच्छतीत्यादौ छागनिष्ठस्त्रीत्वस्य छागीपदार्थस्यायोग्यतयाऽऽख्यातार्थकर्तरि वाऽनन्वयापत्तेश्चेति भावः । छाग्यादेरनापत्तेश्चेति पाठे प्राधान्यानापत्तेरित्यर्थः ।

ननु सा व्युत्पत्तिरपार्थैव स्यादत आह—*किन्त्विति* । तथाच तादृशव्युत्पत्तेः कृत्तद्धितमात्रविषयकत्वं न प्रत्ययमात्रविषयकत्वमिति न तद्बलाद् व्यापारस्याख्यातार्थत्वमिति भावः । ननु कथं तर्हि व्यापारविशेष्यको बोधोऽत आह—*विशेष्यत्वादिनेति* । तथाच व्युत्पत्त्यनुसारी बोधो, न तु बोधानुसारिणी व्युत्पत्तिः । एवञ्च तादृशव्युत्पत्त्यङ्गीकर्त्तॄणां तथैव बोधोऽन्यादृग् व्युत्पत्तिमतां त्वन्यथापीति भावः ।

परीक्षा

दार्थं तत्पदार्थतावच्छेदकधर्मावच्छिन्नसंसर्गवत्वम् । 'घटेन जलमाहर'इति वाक्यात् जलाहरणे घटत्वावच्छिन्नसंसर्गः प्रतिपाद्यः; स तु यस्य कस्यचिद् घटस्य कारणतारूपोऽपि सम्भवतीति सुषिरेतरत्वस्य लाभो न स्यात् । यदि चान्वयप्रयोजकरूपवत्त्वं योग्यता; तदा—सुषिरस्य करणत्वासम्भवादन्वयप्रयोजकस्य सुषिरेतरत्वस्य लाभ इति शङ्कोक्तरीत्याऽन्वयासम्भवमुपपादयति—*क्रियान्वयित्वमेवेति* ।

ननु कृत्प्रत्ययार्थो यः कर्त्ता तेन भावनाया आक्षेपे सति तस्यां कारकान्वयो भविष्यतीति, भवदुक्तदूषणानवसर इत्यत आह-*वस्तुत इति* । 'तदागमे हि'इति । तदुक्तन्यायेन यः प्रधानं स प्रत्ययार्थ इति लभ्यते; अस्य च नियमस्याऽजेत्यादौ व्यभिचारः स्फुट एव; तथाऽपि सम्भवाभिप्रायेण यः प्रत्ययार्थः स प्रधानमेवेत्यपि तदर्थ इत्युक्तं तत्र व्यभिचारमाह—*अजेत्यादाविति* । *अयम्*—"प्रकृतिप्रत्ययौ सहार्थं ब्रूत" इति न्यायः । *उत्सर्गः* । इत्यनेन तस्य सार्वत्रिकत्वं न; किन्तु कृत्तद्धितप्रत्ययमात्रविषयकत्वम् । स्त्रीप्रत्ययानान्तु द्योतकतया तद्द्योत्यस्य स्त्रीत्वस्य विषणत्वमेव;

अत एव नैयायिकानां प्रथमान्तविशेष्यक एव बोधः। लक्षणाया-मालङ्कारिकाणां शक्यतावच्छेदकप्रकारक एव बोधो, न नैयायिकादीनाम्। घटः कर्म्मत्वमानयनं कृतिरित्यादौ विपर्य्ययेणापि व्युत्पन्नानां नैयायिकनव्यादीनां बोधो, न तु तद्व्युत्पत्तिरहितानाम्।

---

दर्पणः

तदेव विशदयति—*अत एवेति*। *शक्यताऽवच्छेदकप्रकारक इति*॥

'लक्षणाऽऽरोपिता क्रिया' इति काव्यप्रकाशीयसूत्रपर्य्यालोचनया शक्यतावच्छेदकारोपविषयनिष्ठसंसर्गस्यैव लक्षणात्वलाभाद्, 'गङ्गायां घोष' इत्यत्र गङ्गात्वेनैव लक्ष्यार्थप्रतीतिरत एव ततो वैयञ्जनिकी शैत्यपावनत्वादिप्रतीतिः। 'जाता लता हि शैले' इत्यादौ च कनकलतात्वेनैव रूपेण बोधस्य चमत्काराऽऽधायकत्वादिति तदाशयः॥

*नैयायिकादीनामिति*। सम्बन्धितावच्छेदकरूपेणैव लक्ष्यार्थस्य भानम्। अत एव 'कचतस्त्रस्यति वदनम्' इत्यादौ सम्बन्धितावच्छेदकराहुत्वादिनैव बोधस्य त्रासाऽऽधायकस्योपपत्तिः। कचत्वादिशक्यतावच्छेदकरूपेण लक्ष्याऽर्थबोधाङ्गीकारे तदनुपपत्तिः स्पष्टैव। किञ्च शक्यतावच्छेदकं, न लक्ष्यतावच्छेदकम्। "शक्यादन्येन रूपेण ज्ञाते भवति लक्षणा" इत्यभियुक्तोक्तिविरोधादिति तद्भावः॥

परीक्षा

तथा तिङर्थस्यापि सुबर्थसंख्याया विशेषणत्वमेवान्येषां प्रकृत्यर्थनिरूपितं विशेषणत्वमिति सिद्धान्तस्तदनुसारिणी व्युत्पत्तिः कार्य्यकारणभावमूला कल्पनीया। व्युत्पत्त्यनुसारी बोध एव प्रमाणम्। यस्त्वतादृशो बोधः सोऽप्रमाणमेव। न हि कस्यचिद्भाष्यकारादिसम्मतमार्गविपरीतक्रमेण बोधस्य प्रामाण्यमाश्रित्य तदनुसारेण व्युत्पत्त्यन्तरकल्पनं न्याय्यमिति भावः।

भाष्याद्यनुसारिणी व्युत्पत्तिर्येषां नास्ति; तेषां त्वन्यादृशोऽपि बोधो भवतीत्येतद्विशदयति-*अत एवेति*। अत एव विपरीतव्युत्पत्तिसत्वादेव। *प्रथमान्तविशेष्यक एवेति*। तिङन्तप्रथमान्तसमभिव्याहारे प्रथमान्तविशेष्यक एव चैत्रः पचतीत्यादितः पाकानुकूलकृतिमांश्चैत्र इत्यन्वयबोधस्य तेषामुद्भवात्। *आलङ्कारिकाणामिति*। अत एव काव्यप्रकाशकृता मुख्यार्थबाधे तद्योगे रूढितोऽर्थप्रयोजनात्, अन्योऽर्थो लक्ष्यते यत्सा लक्षणाऽरोपिता क्रियेति प्रतिपादितम्। शक्यतावच्छेदकारोपविषयविशिष्टो यः क्रियारूपो व्यापारः सैव लक्षणाः स च व्यापार आरोपरूप एव। अत एव—

> जाता लता हि शैले जातु लतायां न जायते शैलः।
> सम्प्रति तद्विपरीतं कनकलतायां गिरिद्वयं जातम्" ॥ ४१ ॥
> कचतस्त्रस्यति वदनं वदनात् कुचमण्डलं त्रसति।
> मध्याद्बिभेति नयनं नयनादधरः समुद्विजतीति" ॥ ४२ ॥

समुद्विजतीत्यादौ शक्यतावच्छेदकप्रकारबोध एव चमत्कारः। 'गङ्गायां घोष'इत्यतो गङ्गावृत्तिर्घोष इति बोध एव शैत्यपावनत्वादिप्रतीतिः। *नैयायिकानामिति*। तेषां मते हि यद्धर्मावच्छिन्ने शक्यार्थसम्बन्धग्रहस्तद्धर्मप्रकारक एव बोधः। कचतस्त्रस्यतीत्यादौ तेषां मते राहुत्वादिना बोधः। अत एव शक्यादन्येन रूपेण ज्ञाते भवति लक्षणेति तेषामुक्तिः सङ्गच्छते। *नैयायिकनव्यादीनाम्*—यस्य पदस्य यत्पदव्युत्पत्ति-

अन्येषां तन्निराकाङ्क्षमेवेत्यादिकं सङ्गच्छते ।

अत एव "प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वाद्" (पा०सू० १।२। ५४) इत्याह भगवान् पाणिनिः । प्रधानं प्रत्ययार्थ इति वचनं न इत्यनुवर्त्य न कार्य्यम्, अर्थस्य—अर्थावबोधस्यान्यप्रमाणत्वाद्-व्युत्पत्त्यनुसारित्वादिति हि तदर्थः । एवं सत्यपि नियामकापेक्षणे च "भावप्रधानमाख्यातम्" इति वचनमेव गृह्यतामिति सुधीभिरूह्यम् ।

'तदागमे हि' इति न्यायो विवरणञ्चाऽतिव्याप्तमित्याह-*किं

---

दर्पणः

*घटः कर्मत्वमिति* ॥ नव्यमते एकपदेऽपरपदव्यतिरेकप्रयुक्तान्वयाननुभावकत्वस्याकाङ्क्षात्वोपगमेन घटपदे कर्मत्वपदव्यतिरेकप्रयुक्तान्वयाननुभावकत्वज्ञानदशायां तादृशवाक्यात्तैः शाब्दबोधाऽभ्युपगमादित्यभिप्रेत्य नव्यानामित्युक्तम् । निराकाङ्क्षमित्यस्याऽऽधेयतासंसर्गेण बोध इति शेषः । *अत एवेति* । बोधस्य व्युत्पत्त्यनुसारित्वादेवेत्यर्थः । *व्युत्पत्त्यनुसारित्वादिति* । कार्यकारणभावग्रहाधीनत्वादित्यर्थः । बोधानुसारिणो हि व्युत्पत्तिर्न हि बोधो व्युत्पत्त्यनुसारी । अत एवारोपे सति निमित्ताऽनुसरणं, न तु निमित्तमस्तीत्यारोप इति प्रामाणिकाः ।

अर्थस्य विशेष्यत्वादिना प्रतीयमानस्य अन्यप्रमाणत्वात् स्वविशेषणीभूतप्रतीत्यनुरोधकव्युत्पत्तिकत्वादित्यर्थः । 'प्रधानं प्रत्ययार्थ' इति नियमस्य पाणिनिनाऽनादृतत्वेऽपि, 'यो: यः प्रत्ययार्थः स प्रधानम्'इत्यर्थस्य, 'तदागमे हि' इति सूत्रयता जैमिनिनाऽऽदृतस्याऽदुष्टत्वादाख्यातार्थतयव व्यापारस्य प्राधान्यम् । टाबादीनां द्योतकत्वेन संख्यावाचकत्वेऽपि प्रत्ययजन्योपस्थितौ संख्याद्यवृत्तित्वस्य विशेषणाच्चोक्तकार्यकारणभावस्य निर्दुष्टत्वादित्यन्ये प्रतीयमानाऽर्थस्य प्राधान्यमिति 'तदागमे हि' इति न्यायाकार इत्याशयेनाह-*तदागमे हीतीति* ।

*अतिव्याप्तमिति* । "नपुंसकमनपुंसकेन" इति क्लीबशेषतैकवचनान्ततायां च

परीक्षा

रेकप्रयुक्तमन्वयाननुभावकत्वं तयोः समभिव्याहाररूपाकाङ्क्षायाः घटकर्मत्वमित्यत्रापि सत्वभ्रमवताम् । *तद्व्युत्पत्तिरहितानाम्*—तादृशभ्रमशून्यानाम् । *अन्येषाम्*—सिद्धान्तिनाम् ।

*अत एव*—शाब्दबोधस्य स्वस्वव्युत्पत्त्यनुसारित्वादेव । ननु प्रत्ययार्थस्य क्वचित् प्राधान्यं क्वचिद्विशेषणत्वमित्यत्र यदि न किञ्चिन्नियामकम्, तदा भवन्मते आख्यातसमभिव्याहारेऽपि धात्वर्थस्य प्रकारतया भानं कुतो नेत्यत आह—*एवं सत्यपीति* ।

यदवष्टम्भेन भावनाया आख्यातार्थत्वं मीमांसकमन्यैरुक्तम्; तदेव व्यभिचरितमित्याह—*तदागमे हीति* । *विवरणम्*—कृञा विवरणम् । *व्यभिचरितमिति* । व्यभिचरितश्च—व्यभिचरितं च व्यभिचरितम्, "नपुंसकमनपुंसकेनैकवच्चास्यान्यतर-

कृतम्, पक्कमिति* ॥ कृत्वा विवरणं प्रतीतिश्च पक्कमित्यत्रापि, इति तत्रापि भावना वाच्या स्यादिति भावः । नन्वस्तु तिङ इव कृतामपि भावना वाच्येत्यत आह—*अपीति* ॥ तथाचोभयसाधारण्येन तत्प्रतीतेरुभयसाधारणो धातुरेव वाचक इति भावः । भवद्रीत्या प्रत्ययार्थत्वात् प्रधान्यापत्तिश्चेति द्रष्टव्यम् ॥ ८ ॥

---

### दर्पणः

व्यभिचरितमित्यर्थः । तदेव विशदयति-*कृत्वेति* । पक्कमित्यत्रापिनाऽनुपदोक्तपक्वानित्यस्याऽपि संग्रहः । तत्र भावनाया आक्षेपात् प्रतीयमानत्वेऽपि प्रत्ययार्थत्वाऽभावेन व्यभिचारसम्भवात् । किं कृतमित्यतो व्यापारविषयस्य जिज्ञास्यत्वाऽवगमात् पक्कमित्यतस्तदनवबोधेनाऽस्योत्तरत्वाऽनुपपत्त्या व्यापारबोधकत्वध्रौव्ये तस्य प्रत्ययार्थत्वाऽभावादव्यभिचार इत्यर्थः ॥

*विवरणमिति* । विवरणं चाऽत्र प्रश्नोत्तररूपमेव । तद्बोधनार्थमेव किमनुल्लेखः । अन्यथा केवलकृतशब्दस्य पक्कपदविवरणतया लोकाऽप्रसिद्धेर्विवरणं चाऽतिव्याप्तमित्यस्याऽसङ्गतेः । *वाच्या स्यादिति* । प्रत्ययवाच्या स्यादित्यर्थः । अपिशब्दः पूर्वोक्ताऽर्थस्यैव न समुच्चायकः, किन्त्वर्थान्तरस्यापीति वक्तुमाशङ्कते-*नन्विति* । तथाचोक्तापत्तिरिष्टैवेति भावः ।

अपिसमुच्चितार्थं प्रकटयति—*तथाचेति* । *उभयेति* । आख्यातकृदन्तोभयेत्यर्थः । *साधारण्येनेति* । साधारण्यमत्र समभिव्याहारविशेषः । *प्रतीतेरिति* । भावनाप्रतीतेरित्यर्थः ॥ *उभयसाधारण इति* ॥ घटकतया प्रयोगद्वयाऽनुस्यूत इत्यर्थः । तथाच प्रयोगद्वये नियतवृत्तित्वेन धातोरव भावनावाचकत्वसिद्धिः । धातुत्वस्य शक्यतावच्छेदकत्वेन लाघवान्न तु तिङ्कृतोस्तिङ्त्वस्य चाननुगतस्य शक्ततातक्छेदकत्वे गौरवात् । परस्परव्यभिचाराच्चेत्युक्तापत्तेर्नेष्टत्वसम्भावनेति भावः ।

ननु धातुत्वस्य शक्तताबच्छेदकतायाः प्रागेव निराकृत्वान्नोक्तदूषणस्याऽपिशब्दसमुच्चयत्वमत आह-*भवद्रीत्येति* । स्वमते भावनायाः प्रकृत्यर्थत्वादुक्तं भवदिति प्रत्ययार्थत्वादित्यनेन पूर्वोक्तमतद्वयमध्ये त्वस्यैव मीमांसकसम्मतत्वमिति सूच्यते ।

### परीक्षा

स्याम्" इत्येकशेषः । व्यभिचरितत्वमुपपादयति—*कृत्वा विवरणमिति* । अपिना पक्वानित्यस्य पूर्वोक्तस्य समुच्चयस्तन्मते पक्कमित्यत्र धातुना फलस्य प्रत्ययेन कर्मणः प्रतिपादनेऽपि भावनायाः प्रतीतिविषयत्वसिद्धये तस्याक्षेपो वाच्यः । तथा सति प्रतीतिविषयत्वसिद्धावपि तस्याः प्रत्यार्थवत्वाभावेन व्यभिचारः किं कृतमित्यतो व्यापारस्य जिज्ञास्यत्वावगमे तस्या जिज्ञासायाः पक्कमित्यतो निवृत्तिरवश्यं वाच्या । अन्यथा तथोत्तरं न स्यात् । भवन्मते तस्य व्यापाराबोधकत्वाद् । यदि च तस्य व्यापारबोधकताप्युच्यतेः; तदा तस्य प्रत्ययार्थत्वाभावेन व्यभिचार इति भावः ।

अत्र विवरणपदं प्रश्नोत्तरभावपरम् । *वाच्या स्यादिति* । प्रत्ययवाच्या स्यादित्यर्थः । *उभयेति* । कृदाख्यातोभयेत्यर्थः । साधारण्यं समभिव्याहारः । एवं धातावप्युभयसाधारण्यं बोध्यम् । *वाचकः*—भावनावाचकः । किंवाऽऽख्यातकृदुभयसा-

व्यपारस्य धात्वर्थत्वे साधकान्तरमाह—

**किं कार्य्यं पचनीयं चेत्यादि दृष्टं हि कृत्स्वपि ।**
**किञ्च क्रियावाचकतां विना धातुत्वमेव न ॥ ९ ॥**

कार्य्यमित्यत्र "ऋहलोर्ण्यत्" (पा०सू०३।१।१८४) इति कर्मणि ण्यत्। पचनीयमित्यादौ चानीयर्। आदिना ज्योतिष्टोमयाजी इत्यादौ करणे उपपदे कर्त्तरि णिनिः। एते च क्रियायोगमन्तरेणासन्तस्तद्वाच्यतां बोधयन्ति। विना क्रियां कारकत्वासम्भवेन तद्वाचकप्रत्ययस्याप्यऽसम्भवात्। न च 'गम्यमानक्रियामादाय कारकयोगः' इति भाट्टरीतिर्युक्ता। आख्यातेऽपि तथात्वापत्तौ तत्रापि भावनाया वाच्यत्वासिद्ध्यापत्तेः।

अथ लिङ्गसङ्ख्यान्वयानुरोधात्कर्त्तुर्वाच्यत्वमावश्यकमिति, तेना-

---

दर्पणः

व्याख्यातं च तथैव। अवतरणे तन्न्यायविरोधोपदर्शनं तु प्रत्ययाऽर्थत्वप्राधान्ययोः प्रायशः समनैयत्येन, प्रधानस्य प्रत्ययार्थत्वसाधकत्वस्याऽपि ततो लाभेन प्रकृतिवाच्यत्वे तदनुपपन्नमित्याशयेनेति बोध्यम् ॥ ८ ॥

साधकान्तरमित्यस्य धातोर्व्यापारवाचकत्वे इत्यादिः। किं कार्यमित्यत्र प्रश्नोत्तरभावरूपविवरणेनैव व्यापारस्य धात्वर्थत्वसिद्धिरित्यत्र न तात्पर्यम्, किन्तु प्रश्नोत्तरभावरूपविवरणस्य प्रक्रान्तत्वात् किमनुल्लेख इति सूचयन्नाह—*कार्यमित्यत्रेति*। *णिनिरिति*। "भूते" इत्यधिकृत्य, "करणे यजः" ( पा०सू० ३।२।९ ) इति सूत्रेणेति शेषः ॥ एते ण्यदादय इत्यर्थः ॥

*क्रियायोगमन्तरेणेति*। क्रियान्वयिनामेव कारकतया धातोर्व्यापाराऽवाचकत्वे कार्य्यो घट इत्यादौ कर्मादिसंज्ञानां "कारके" इत्यधिकृत्य विहितानां घटादावसम्भवेन तत्र विधीयमानण्यदाद्यनुपपत्तिर्धातोस्तदाक्षिपति-देवदत्तस्य पीनत्वानुपपत्तिरिव रात्रिभोजनमिति भावः। तदेवाह—*विना क्रियामिति*। *गम्यमानेति*। अस्य तदुपस्थापकपदाभावेऽपीत्यादिः। *तथात्वापत्ताविति*। गम्यमानक्रियामादायैव कर्त्तृकर्माऽर्थकप्रत्ययोपपत्तावित्यर्थः। *तत्राऽपि*। तिङ्संज्ञकाऽऽख्याते ॥

*लिङ्गसंख्यान्वयाऽनुरोधादिति*। अस्य पाचक इत्यादावित्यादिः ॥ आवश्य-

परीक्षा

धारणधर्मस्य वाचकतोच्छेदकत्वापेक्षया धातुत्वस्यैकस्य वाचकतावच्छेदकत्वे लाघवमिति बोध्यम्। एते—ण्यदादिप्रत्ययाः; क्रियान्वयिनामेव कारकत्वादिति भावः ॥ ८ ॥

*गम्यमानेति*। तद्बोधकपदानुच्चारणेऽपीत्यादिः। *तथात्वापत्तौ*। गम्यमानक्रियामादाय कर्तृत्वकर्मत्वार्थकप्रत्ययस्योपपत्तावित्यर्थः। *तत्रापि*—तिङ्सत्वस्थलेऽपि।

*आवश्यकमिति*। कृतीति शेषः। एवं च पाचक इत्यादौ कृद्वाच्यकर्त्रा स्वनि-

क्षेपाद् भावनाप्रत्ययः स्यादिति मतम् । तर्हि सङ्ख्यान्वयोपपत्तये आख्यातेऽपि कर्त्ता वाच्यः स्यात् । पक्ववानित्यादौ कालकारकान्वयानुरोधाद् भावनाया अपि तस्याऽऽवश्यकत्वाच्चेति भावः ।

अपिना हेत्वन्तरसमुच्चयः । तथा हि—नखैर्भिन्नो नखभिन्नः, हरिणा त्रातो हरित्रात इत्यादौ "कर्तृकरणे कृता बहुलम्" (पा०सू०२।१।३२) इति समासो न स्यात् । पुरुषो राज्ञो भार्य्या देवदत्तस्य इतिवद् असामर्थ्यात् । नचाध्याहृतक्रियाद्वारा सामर्थ्यं वाच्यम्, दध्योदनो गुडधाना इत्यादिवत् । अन्यथा—अत्रापि "अन्नेन व्यञ्जनम्" (पा०सू० २।१।३४) "भक्ष्येण मिश्रीकरणम्" (पा०सू०२।१।३५) इति समासो न स्यादिति वाच्यम् । तत्र विध्यानर्थक्यादगत्या तथा स्वाकारेऽपि

---

दर्पणः

कमित्यस्य कृतीति शेषः । कृन्निरूपितवाच्यत्वं कर्त्तुरवश्यमङ्गीकरणीयमित्यर्थः । तेन कर्त्रा आक्षेपादित्यस्य स्वरूपनिरूपकतयेत्यादिः । *प्रत्यय इति* । बोध इत्यर्थः ॥ *तस्य* । वाच्यत्वस्येत्यर्थः ॥

*असामर्थ्यादिति* । विशिष्टार्थोपस्थित्यजनकत्वादित्यर्थः । निराकाङ्क्षत्वादिति यावत् । त्रातभिन्नपदान्तर्गतधात्वर्थक्रिययोः कर्त्तृकरणकारकसाकाङ्क्षत्वेन, हरिणेत्यादिपदोपस्थितकर्त्तृकरणयोश्च कारकत्वेन क्रियासाकाङ्क्षत्वेन परस्परसाकाङ्क्षत्वरूपसामर्थ्यं सुघटं व्यापारस्य धात्वर्थतावादिमते । भवन्मते तु पुरुषो राज्ञो भार्या देवदत्तस्येत्यादिवन्निराकाङ्क्षत्वात् समासाऽनुपपत्तिरिति भावः । इदमुपलक्षणं कारकविभिक्तेरपि ॥

*अध्याहृतक्रियामादायेति* । करोत्यर्थव्यापारमादायेत्यर्थः । *सामर्थ्यमिति*। तथाच नखैः कृत्वा भिन्न इति बोधाभ्युपगमेनाऽध्याहृतार्थमादाय सामर्थ्योपपत्तिरित्यर्थः । अध्याहृतक्रियामादाय सामर्थ्याऽभ्युपगमे दृष्टान्तमाह—*दध्योदनेत्यादि* ॥ *विध्यानर्थक्यादिति* ॥ 'अन्नेन व्यञ्जनम्' इत्यादेरपि पदविधित्वेन सम-

परीक्षा

रूपकतया भावनाया आक्षेपो भविष्यतीति भावनायाः प्रत्ययः-प्रतीतिर्भविष्यतीति तदनुरोधेन धातुवाच्यत्वं तस्या न स्वीकार्य्यमिति भावः ।

आख्यातेऽपीति वाच्यः कर्ता—निरूपकतासम्बन्धेन तिष्ठेत् । तस्य वाच्यत्वस्य न स्यादिति उभयत्राक्षिप्तभावनायां तृतीयान्तार्थस्यान्वयो; न तु कृदर्थ इत्यसामर्थ्यमिति भावः । *इतिवदिति* । तत्र राज्ञो भार्य्येति समुदायस्य विशिष्टोपस्थित्यजनकतया यथाऽसामर्थ्यं तद्वत् निराकाङ्क्षत्वादिति शेषः । तत्राभिन्नपदान्तर्गतो यः कर्तृकर्मवाचकः कृत्प्रत्ययः, तस्य तादृशसमुदायघटकधातुप्रतिपाद्यफलेनाक्षिप्ता या भावना तस्यामन्वयी योऽर्थः; तद्वाचकतया तस्यामेव हरिणेत्यादिपदोपस्थितकारकस्याऽन्वयेन परस्परसाकाङ्क्षत्वरूपसाथर्थ्यस्य सत्वात्तत्र समासो भविष्यतीत्याशङ्कां निरस्यति—*नचेत्यादिना* । *अन्यथा*-आक्षिप्तभावनायामन्वयेऽपि असामर्थ्याङ्गीकारे । अर्थाध्याहारवादिनामस्माकमध्याहृतान्वये न सामर्थ्यमस्तीति शेषः । *तत्र*-दध्योदन इत्यादौ । *विध्यानर्थक्यात्* = "अन्नेन व्यञ्जनम्" इत्यादिसूत्रस्य

'हरिकृतम्' इत्यादौ साक्षाद्धात्वर्थान्वयेनोपपद्यमानस्य "कर्तृक-रणे" इत्यस्याक्षेपेण परम्परासम्बन्धे प्रवृत्त्ययोगात् ।

नचैकस्यां क्रियायामन्वयित्वमेव सामर्थ्यमिति शङ्क्यम् । असूर्य्यम्पश्या इत्यादेरसमर्थसमासत्वानापत्तेः । इष्टापत्तौ कृतः सर्व्वा मृत्तिकयेत्यत्र कृतसर्व्वमृत्तिक इत्यापत्तेः । नचाऽत्र समासविधाय-

---

दर्पणः

र्थपरिभाषाविषयतया सूत्रतोऽसमर्थदध्यादिपदानां समासविधानवैयर्थ्यापत्त्योपसेच-नादिक्रियाध्याहाराऽभ्युपगमेऽपीत्यर्थः ॥

*हरिकृतमिति* ॥ कृधातोर्व्यापारार्थकत्वस्वीकारात्तन्निरूपितकर्तृत्वस्य हरौ साक्षात्सत्वादध्याहारं विनैव शास्त्रवारितार्थे 'हरित्रात' इत्यादावध्याहृतक्रियाद्वारक-सामर्थ्यमादाय तत्प्रवृत्तौ मानाभावादित्यर्थः । कृञो व्यापारार्थकत्वानभ्युपगमे त्व-ध्याहृतार्थस्यापि सामर्थ्यानुपपादकत्वाच्छास्त्रवैयर्थ्यमेव स्यादिति सूचनाय कृतामि-त्युक्तम् । आदिना, शरकृतमित्यादिकरणतृतीयातत्पुरुषपरिग्रहः ।

केचित्तु-कृदर्थकर्त्रैव तृतीयार्थकर्त्राक्षिप्तभावनामादाय हरित्रात इत्यादौ, नखैर्भिन्न इत्यादौ तु करणसामर्थ्येनाध्याहृतां तामादाय सामर्थ्योपपत्तौ न तदनुपपत्तिर्धातोर्भा-वनावाचकत्वसाधिका । एवञ्च कृञः फलार्थकत्वेऽपि न समासानुपपत्तिरित्याहुः । तच्चि-न्त्यम् ॥

*एकक्रियान्वयित्वमेवेति* ॥ धवखदिरावित्यादौ तस्य दृष्टत्वेनान्यत्रापि सा-क्षात्परम्परया वा तस्यैव समासप्रयोजकत्वमिति भावः ॥ *असूर्यम्पश्या इति* । नञर्थप्रसज्ज्यप्रतिषेधस्य क्रियान्वयित्वस्य वक्ष्यमाणतया सूर्य्य-स्यापि कर्मकारकतया तदन्वयित्वेन भवदुक्तसामर्थ्यस्य तत्र सत्त्वादिति भावः ॥ *कृतसर्वमृत्तिक इति* ॥ मृत्तिकायाः करणतया, सर्वपदार्थस्य कर्मतया कृधात्व-

परीक्षा

नर्थक्यात् । *तथास्वीकारेऽपीति* । अध्याहृतक्रियाऽवयित्वेन सामर्थस्य स्वीकारे-ऽपीत्यर्थः । *हरिकृतमित्यादाविति* । आदिना हिरण्यकृतमित्यस्य संग्रहः । परम्प-रासम्बन्धे नखभिन्न इत्यादौ नखैः कृत्वा भिन्न इति बोधस्याङ्गीकारेण स्वान्वय्यन्व-यित्वरूपपरम्परासम्बन्धेनान्वय इत्यर्थः । *न स्यादिति* । कृधातोर्भावनावाचकतया तत्प्रयोगे साक्षाच्छब्दवाच्य एवार्थेऽन्वयेन सूत्रस्य सार्थक्यादिति भावः ।

एकक्रियाऽन्वयित्वमेव सामर्थ्यप्रयोजकं यथा—'धवखदिरौ छिन्धि' इत्यादौ धवखदिरपदार्थयोः साक्षादन्वयाभावेऽपि छेदनरूपेऽर्थे द्वयोरप्यन्वयेन सामर्थ्यं तद्वदि-त्यर्थाभिमानेनाशङ्काया निरासङ्करोति—*नचेति* । *अनापत्तेरिति* । तत्र प्रसज्य-प्रतिषेधार्थकस्य नञः क्रियायामेवान्वयेन सूर्यपदार्थस्यापि तस्यां कर्मतयाऽन्वेन पर-म्परासम्बन्धेनान्वयित्वरूपं भवदुक्तं सामर्थ्यमस्तीति भावः । *इष्टापत्ताविति* । एतादृशसामर्थ्यस्य समाससञ्ज्ञाप्रयोजकत्वे इत्यादिः । *इत्यापत्तेरिति* । अत्रापि कृञर्थभावनायां मृत्तिकापदार्थस्य करणतयाऽन्वयः सर्वपदार्थस्य तत्र कर्मतयाऽन्वयेन परम्परान्वयित्वं भवदुक्तं वक्तुं शक्यमिति भावः । *विधायकाभावः*—"कर्तृकरणे" इति सूत्रस्य हिरण्यकृतमित्यत्र साक्षात्सम्बन्धे चरितार्थत्वेनैतादृशसामर्थ्येऽप्रवृत्त्या

काभावः । "सह सुपा" (पा०सू०२।१।४) इत्यस्य सत्त्वात् । अन्यथा असमर्थसमासोऽपि विधायकाभावान्न स्यादिति ।

किञ्च भावनायास्तिङर्थत्वे 'भावयति घटम्' इतिवद् 'भवति घटम्' इत्यपि स्यात्; धात्वर्थफलाश्रयत्वरूपकर्मत्वसत्त्वात् । नचाख्यातार्थव्यापाराश्रयत्वेन कर्तृत्वात्तत्संज्ञया कर्मसंज्ञया बाधान्न द्वितीयेति वाच्यम् । आख्यातार्थव्यापाराश्रयस्य कर्तृत्वे 'पाचयति देवदत्तो विष्णुमित्रेण' इत्यत्र विष्णुमित्रस्याकर्तृत्वापत्तौ तृतीयानापत्तेः । 'ग्रामं गमयति देवदत्तो विष्णुमित्रम्' इत्यत्र विष्णुमित्रस्याकर्तृत्वापत्तौ ग्रामस्य गमिकर्मत्वानापत्तेश्च । तथाच 'ग्रामाय गमयति देवदत्तो विष्णुमित्रम्' इत्यपि न स्यात् । "गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि" (पा० सू०२।३।१२) इति गत्यर्थकर्मण्येव चतुर्थीवि-

---

दर्पणः

र्थाऽन्वयित्वादितिभावः । योगविभागस्यानिष्टानापादकत्वादाह—*किञ्चेति*॥

*अकर्तृत्वापत्ताविति* ॥ आख्यातार्थव्यापारानाश्रयत्वादिति शेषः । अस्मन्मते तु णिचप्रकृत्यर्थव्यापाराश्रयत्वेन कर्त्तृत्वान्न तदनुपपत्तिरिति भावः । ननु विष्णुमित्रस्याऽकर्तृत्वेऽपि करणत्वविवक्षयैव तत्र तृतीया सुलभेत्यत आह-*ग्रामं गमयतीति* ॥ "कर्त्तुरीप्सितमम्" इत्यनेन प्रकृतिकर्तृनिष्ठव्यापारजन्यफलसम्बन्धिन एव कर्मसंज्ञाविधानेन त्वन्मते विष्णुमित्रस्याकर्तृतया तद्व्यापारजन्यफलाश्रयस्यापि ग्रामस्याकर्मत्वेन तद्वाचकपदोत्तरं द्वितीयानापत्तिः । विष्णुमित्रस्य करणत्वे णिचोऽसम्भवश्च । धात्वर्थव्यापारजन्यफलाश्रयस्यैव कर्मत्वाङ्गीकारे तु णिजन्तकर्मतैव स्यान्न गमिकर्मतेति भावः । इष्टापत्तावाह-*तथाचेति* ।

परीक्षा

विधायकाभावः । *अन्यथा*- "सुप्सुपा" इत्यस्यापि साक्षात्सम्बन्ध एव प्रवृत्त्यङ्गीकारे । *असमर्थसमासोऽपीति* 'असूर्य्यम्पश्या' इत्यादावित्यादिः ।

उक्तरीत्या भावनाया धातुवाच्यत्वं प्रसाध्य 'द्विर्बद्धं सुबद्धं भवति' इति न्यायेन पुनस्तस्या धातुवाच्यत्वं साधयति-*किञ्चेति* । *सत्वादिति* । फलमात्रस्य धात्वर्थत्वे धात्वर्थफलाश्रयत्वस्यैव कर्मत्वादितिशेषः । कर्तृसंज्ञया कर्मसञ्ज्ञाबाधमाशङ्क्य निराचष्टे—*नचेति* । *विष्णुमित्रस्येति* । तस्याख्यातार्थानाश्रयत्वादिति शेषः । ननु विष्णुमित्रस्याकर्तृत्वेऽपि करणतयाऽन्वयेन ततस्तृतीया भविष्यतीत्यत आह—*ग्राममिति* । *गमिकर्मत्वानापत्तेश्च* । "कर्त्तुरीप्सिततमम्" इति सूत्रेण प्रकृतधात्वर्थप्रधानीभूतव्यापाराश्रयरूपकर्त्तृनिष्ठव्यापारप्रयोज्यफलाश्रयस्य कर्मसञ्ज्ञा विधीयत इत्यभिप्रायेणाऽभिहिता । तन्मते विष्णुमित्रस्याकर्त्तृत्वेन तस्य सूत्रस्याप्राप्तेः । एवं विष्णुमित्रस्याकर्त्तृत्वे णिजनुपपत्तिरपि बोध्या, कर्त्तृप्रयोजकस्यैव हेतुसञ्ज्ञाविधानात् । यदि तु यत् किञ्चिद्धात्वर्थव्यापारप्रयोज्यफलाश्रयस्य कर्मत्वम्; तदा णिजन्तधात्वर्थव्यापारप्रयोज्यफलाश्रयत्वेन णिजन्तकर्मत्वमेव स्यात् । अत्रेष्टापत्तावाह—*तथा-

धानात्। एतेन णिजन्ते आख्यातार्थ उभयं, तदाश्रयत्वाद्देवदत्तयज्ञदत्तयोः कर्तृतेत्यपास्तम्।

किञ्च तस्मिन् प्रयोगे य आख्यातार्थ इत्यस्यावश्यकत्वेनाख्यातशून्ये 'देवदत्तः पक्ता' इत्यादौ देवदत्तस्याऽकर्तृतापत्तेरिति दिक्॥

---

दर्पणः

*एतेनेति*। आख्यातार्थव्यापाराश्रयस्य कर्तृत्वनिरासेनेत्यर्थः। *णिजन्ते*—पाचयत्यादौ। *उभयमिति*। प्रयोज्यप्रयोजकव्यापारद्वयमित्यर्थः। *तदाश्रयत्वादिति*। आख्यातार्थव्यापारद्वयान्यतरत्वादित्यर्थः॥

*अपास्तमिति*। अयम्भावः—आख्यातस्य व्यापारद्वयाऽभिधायकत्वेन विष्णुमित्रस्य कर्तृत्वोपपादनेऽपि तत्। कर्तृत्वस्याख्याताभिधानाद्देवदत्तपदोत्तरमिव विष्णुमित्रपदोत्तरं तृतीयादौर्लभ्यमेवमाख्यातार्थव्यापाराश्रयत्वस्योभयोरप्यविशिष्टत्वात् प्रधानव्यवहारोच्छेदापत्त्या "हेतुमति च" (पा० सू० ३। १। २६) इत्यनुशासनविरोधश्चेति।

ननु णिजाख्यातार्थान्यतरार्थव्यापाराश्रयत्वं कर्तृत्वम्। अस्मन्मते फलमात्रस्य गणपठितधात्वर्थत्वेन तदनुकूलणिजर्थव्यापाराश्रयत्वेन विष्णुमित्रस्याऽपि कर्तृत्वाद्दौर्लभ्येन नोक्ताऽनुपपत्तिरत आह—*किञ्चेति*। आख्यातार्थव्याराश्रयत्वस्य केवलान्वयितया अव्यावर्त्तकत्वेनाऽऽख्यातं तद्वाक्यस्थत्वेनाऽवश्यं विशेषणीयम्। एवञ्च-'चैत्रः पक्ता' इत्यादावाख्यातशून्ये वाच्ये कृदर्थकर्त्तर्यव्याप्तिर्दुवारेत्यर्थः।

नन्वस्तिर्भवन्तीपर इति भाष्येणाख्यातप्रयोगस्य तत्राऽवश्यम्भावान्नोक्तापत्तिः। किञ्च धातुविहितप्रत्ययवाच्यतदाक्षिप्ताऽन्यतरव्यापाराश्रयत्वं कर्तृत्वम्। धातुविहितेति प्रत्ययविशेषणाच्च न करणतृतीयार्थव्यापाराश्रयेऽतिव्याप्तिः। उक्तस्थले कृद्वाच्यकर्त्राक्षिप्तव्यापाराश्रयत्वान्नोक्तदोषोऽत आह-*दिगिति*। तदर्थस्त्वितरनिवृत्तितात्पर्यकताद‍ृशवाक्येऽस्त्यध्याहारस्यानावश्यकत्वादुक्तप्रकारस्य न साधीयस्त्वम्। किञ्चैवं रीत्या कर्तृत्वनिर्वचनाऽपेक्षया धातोर्व्यापारार्थकत्वमभ्युपगम्य तदाश्रयत्वमेव कर्तृत्वं निर्वक्तुमुचितम्, लाघवादित्यादिः॥

परीक्षा

च ग्रामायेति*। *एतेन*-आख्यातार्थव्यापाराश्रयस्य कर्तृत्वनिराकरणेन। *उभयम्*-प्रयोज्यप्रयोजकव्यापारद्वयम्। *अपास्तमिति*। यद्युभयोर्व्यापारयोराख्यातार्थत्वम्, तदा विष्णुमित्रस्य कर्तृत्वोपपादनेऽपि तत् कर्तृत्वमाख्यातेनापिहितमिति। 'पाचयति देवदत्तो विष्णुमित्रेण' इत्यत्र विष्णुमित्रपदात्तृतीयाऽनापत्तिः। एवं प्रयोज्यप्रयोजकयोराख्यातस्य व्यापाराश्रयतया प्रधानाप्रधानव्यवहारानुपपत्तिरपीति भावः।

ननु णिजाऽऽख्यातान्यतरार्थव्यापाराश्रयत्वं कर्तृत्वमित्यस्तु। एवं च विष्णुमित्रस्य णिजर्थव्यापाराश्रयत्वेन कर्तृत्वं सुलभमेवेत्यत आह—*किञ्चेति*। *इत्यस्यावश्यकत्वेन*—तन्निवेशस्यावश्यकत्वेन। अन्यथा पदार्थमात्रस्य यत्किञ्चिदाख्यातार्थव्यापाराश्रयत्वेन तन्निवेशस्याव्यावर्त्तकत्वापत्तिरिति भावः। नन्वस्तिर्भवन्तीपरोऽप्रयुज्यमानोऽप्यस्तीति न्यायेनाख्यातस्यास्तीत्यस्य 'देवदत्तः पक्ता' इत्येत-

सूत्रानुपपत्तिमपि मानत्वेन प्रदर्शयन्नुक्तार्थस्य स्वोत्प्रेक्षितत्वं निरस्यति-*किञ्चेति* ॥ धातुसंज्ञाविधायकम्–"भूवादयो धातवः" (पा० सू० १।३।१) इति सूत्रम्। तत्र भूश्च वाश्चेति द्वन्द्वः। आदि-शब्दयोर्व्यवस्थाप्रकारकवाचिनोरेकशेषः। आदिश्च आदिश्च आदी, ततो भूवौ आदी येषां ते भूवादयः। तथाच भूप्रभृतयो वासदृशा धातवः इत्यर्थः। तच्च क्रियावाचकत्वेन। तथाच क्रियावाचकत्वे सति भ्वादिगणपठितत्वं धातुत्वं पर्य्यवसन्नम्। अत्र हि क्रियावाचि-त्वमात्रोक्तौ वर्ज्जनादिरूपक्रियावाचके 'हिरुक्; नाना' इत्यादावति-व्याप्तिरिति भ्वादिगणपठितत्वमुक्तम् ॥ ९ ॥

तावन्मात्रोक्तौ चाह—

**सर्व्वनामाव्ययादीनां यावादीनां प्रसङ्गतः ॥**
**न हि तत्पाठमात्रेण युक्तमित्याकरे स्फुटम् ॥१०॥**

गणपठितत्वमात्रोक्तौ सर्व्वनामा यो 'याः' तस्यापि धातुत्वं स्यात्। तथाच—याः पश्यसीत्यादौ "आतो धातोः" (पा० सू० ६।४।१४०) इत्याकारलोपापत्तिः। ननु लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव

---

दर्पणः

*स्वोत्प्रेक्षितत्वमिति*। निर्मूलस्वकल्पनाविषयत्वमित्यर्थः। *हिरुगिति*। यथाश्रुतमनुरुध्य चेदम्। तदर्थस्य कालानन्वितत्वेन क्रियात्वासम्भवात्। किन्तु ताव-न्मात्रोक्तावाणवयतीत्यादावतिव्याप्तिर्बोध्या। तेषां धातुत्वे च शास्त्रविषयतया साधु-त्वापत्तेरिति बोध्यम् ॥ ९ ॥

तावन्मात्रोक्तावित्यत्र मात्रपदेन क्रियावाचकत्वदलव्यवच्छेदः। इष्टापत्तिमाश-ङ्क्याह-*तथाचेति*। या इत्यस्य द्वितीयान्तत्वं सूचयितुमाह-*पश्यसीति*।

*लक्षणप्रतीति*। लक्ष्यतेऽन्वाख्यायते साधुशब्दोऽनेनेति लक्षणं सूत्रम्। तदनु-

परीक्षा

तद्वाक्यशेषत्वमपि सम्भाव्यत इत्यत आह—*दिगिति*। यद्वाक्यमितरनिवृत्ति-मात्रतात्पर्य्यकं तस्य तच्छेषित्वासम्भव इति। किञ्च एवं क्लेशेन कर्त्तृत्वस्योक्तस्थले उपपादनापेक्षया लाघवाद्धातोः फलव्यापारोभयवाचकत्वमेवोचितमिति।

*सूत्रेति*। "भूवादय" इति सूत्रेत्यर्थः। *स्वोत्प्रेक्षितत्वम्*। स्वीयकल्पना-विषयत्वम्। *हिरुगिति*। इदं यथाश्रुते। यदि तु तदर्थस्य कालान्वयित्वेनाक्रिया-त्वमिति ब्रूषे-आणवयति वट्यतीत्यादौ तद्घटकस्य धातुत्वापत्तौ साधुत्वापत्तिर्दोषो बोध्यः ॥ ९ ॥

*तथाचेति*। यवादीनां धातुत्वापत्तौ च। *लक्षणेति*। साधुत्वान्वाख्यानक-रणत्वेन लक्ष्यतेऽनेनेति व्युत्पत्या लक्षणशब्दस्य सूत्रापरत्वेऽपि लक्षणया परिभाषाघ-

ग्रहणान्न सर्व्वनाम्नो ग्रहणम् , तस्य लाक्षणिकत्वादित्यत आह—*वेत्यादि* ॥ अव्यये--'वा' इत्यादावतिप्रसङ्गः । तादृशस्यैव गणेऽपि पाठेन निर्णयासम्भवात् । तथाच विकल्पार्थको वातीति प्रयोगः स्यादिति भावः । न च गतिगन्धनाद्यर्थनिर्द्देशो नियामकः; तस्य "अर्थानादेशनाद्" इतिभाष्यपर्य्यालोचनया आधुनिकत्वलाभात् ॥१०॥

---

दर्पणः

सन्धानसापेक्षत्वोपचारेण लाक्षणिकमपि लक्षणशब्देनोच्यते । यथा–पै—इत्यस्य, पा इति रूपं विलम्बोपस्थितिकम् । लक्षणाऽनुसन्धानसापेक्षत्वात् । प्रतिपदोक्तं तु तद्भिभक्तिविशेषानुवादेन पठितं शीघ्रोपस्थितिकम् । लक्षणानुसन्धानानपेक्षणात् इति । यथा पिबतेः पा इति रूपं तथा च शीघ्रोपस्थितिकत्वं प्रतिपदोक्तग्रहणे वीजं, तच्च या इति गणपठिते एव सर्वनाम्नि लक्षणानुसन्धानसापेक्षेति भावः । अव्यये, वा—इत्यादावित्यादिना, सु—इत्युपसर्गस्य, मामाङिति स्वराद्योश्च संग्रहः । षत्वप्रकरणपाठादुपसर्गव्याव्रुत्तिर्न शङ्क्या । साधादिसंग्रहाय परिभाषितषोपदेशत्वस्य तत्राऽपि सत्त्वात्॥

*प्रयोगः स्यादिति* । उपलक्षणं चैतत्सुवति, माति, मिमीते, इत्यादिप्रयोगाणाम् । षुप्रसवे, मा, माङ्माने इत्यादिधातूनां सत्त्वेन तन्निर्णयासम्भवात् । सत्यन्तोक्तौ तु न दोषः । वाद्यर्थस्य विकल्पादेर्भूतादिकालासम्बन्धेन क्रियात्वाभावादिति भावः । *नियामक इति* । गणे पठितानामेव धातुत्वस्याभिप्रेतत्वेऽर्थनिर्देशवैयर्थ्यापत्त्या निर्दिष्टार्थानामेव धातुत्वं ज्ञाप्यते इत्यर्थः । *तस्य*—अर्थनिर्द्देशस्य । *अर्थानादेशनादिति* । अर्थस्य सत्तादेः, अनादेशनादनाम्नानादित्यर्थः ।

*आधुनिकत्वलाभादिति* । भीमसेनादिप्रणीतत्वावगतेरित्यर्थः । तथा च भूवादिसूत्रे—परिमाणग्रहणं कर्त्तव्यम् । कुतो ह्येतत् । भूशब्दो धातुसंज्ञको भवति, न पुनर्भ्वेधशब्द इति । यद्यप्यर्थनिर्देशस्य सूत्रकृत्प्रणीतत्वमपि । तथाच "चुटू" (पा०सू० १।३।७) इति सूत्रे 'यदयमिरितः काँश्चिन्नुमनुपक्तान् पठति, उबुन्दिर् निशामने, स्कन्दिर्गतिशोषणयोः इति तेन नेरितामिदिद्विधि रिति' भाष्ये उक्तम् । तथापि भाष्यद्वयप्रामाण्यात्सर्वधात्वर्थनिर्देशस्याऽपाणिनीयत्वेन न तन्निर्देशस्य नियामकतेति भावः । चुलुम्पादीनां स्तम्भ्वादीनां च कास्यनेकाचामितिवचनादुदित्करणाच्च धातुतेति दिक् ॥ १० ॥

परीक्षा

टको लक्षणशब्दो लाक्षणिकपरः । वादीत्यादीना सोरुपसर्गस्य माङो निषेधार्थस्य च ग्रहणम् । *तस्य*—अर्थनिर्द्देशस्य । *अर्थानादेशनात्* । अर्थस्य सत्तादेरनादेशनात्, अकथनात् । तथाच—भूवादिसूत्रे भाष्यम्–"परिमाणग्रहणं कर्त्तव्यम् , कुतोऽन्वेतत् भूशब्दो धातुसंज्ञो ; न पुनर्भ्वेधशब्द इति। आधुनिको भीमसेनः, यद्यपि "चुटू–" इति सूत्रे भाष्यकृता–"इर् इत्संज्ञा वक्तव्या" इत्यस्य प्रत्याख्यानसमये–इकाररेफयोः पृथगित्संज्ञया निवृत्तिपक्षे–नुमागमाशङ्कायां "यदयमिरितः, कांश्चिन् नुमनुषक्तान्पठति—उबुन्दिर् निशामने, स्कन्दिर् गतिशोषणयोरिति । तेन नेरितामिदिदिधिरिति प्रतिपादितम् । तथाप्यर्थादेशनस्योक्तभाष्यात्सर्वत्र पाणिनीयत्वं नेति बोध्यम् । सत्यन्तोपपादने तु यद्यर्थस्य कालान्वयित्वेनाक्रियात्वान्न तद्वाचकानां धातुत्वम् ॥ १० ॥

नन्वस्तु क्रियावाचकत्वे सति गणपठितत्वं धातुत्वम्, क्रिया च धात्वर्थ एव, न व्यापार इत्याशङ्कां समाधत्ते—

धात्वर्थत्वं क्रियात्वञ्चेद्धातुत्वं च क्रियार्थता ।
अन्योऽन्यसंश्रयः स्पष्टस्तस्मादस्तु यथाकरम् ॥ ११ ॥

यदि क्रियात्वं धात्वर्थत्वमेव; तर्हि धातुत्वग्रहे तदर्थत्वरूपक्रियात्वग्रहः, क्रियात्वग्रहे च तदवच्छिन्नवाचकत्वघटितधातुत्वग्रह इत्यन्योन्याश्रय इति ग्रहपदं पूरयित्वा व्याख्येयम् । यथाश्रुते चान्योन्याश्रयस्योत्पत्तौ ज्ञप्तौ वा प्रतिबन्धकत्वाभ्युपगमेनासङ्गत्यापत्तेः । नचान्यतमत्वं धातुत्वम्—"भूवादय" इत्यस्य वैयर्थ्यापत्तेरित्यभिप्रेत्याह—*अस्त्विति* ॥

---

दर्पणः

*धात्त्वर्थं एवेति* । फलमेवेत्यर्थः । तथाच नैतत्सूत्रानुपपत्तिर्धातोर्व्यापारार्थत्वसाधिकेति भावः । *उत्पत्ताविति* । यथा बीजाऽङ्कुराद्युत्पत्तौ अनादित्वेन तत्परिहार इत्यन्यत् । यथा वा चैत्रपुत्रश्चैत्र इत्यादौ । तत्राप्येकोत्पत्तिं विनाऽपरानुपपत्तेः । *ज्ञप्ताविति । "हलन्त्यम्" इत्यादौ प्रसिद्धः । *असङ्गत्यापत्तेरिति । यथा पृथिवीजलयोराधाराधेयभाव इत्यादावुभयोः परस्पराधाराधेयभावेन स्थितेः सर्वैरेवाभ्युपगमात् । प्रकृते वस्तुतो धात्वर्थस्य क्रियात्वे क्रियात्वस्य धात्वर्थत्वे बाधकाभावेन तत्र दूषणदानस्यानुचितत्वापत्तेरित्यर्थः। *अन्यतमत्वमिति*। भ्वादिभिन्नभिन्नत्वमित्यर्थः॥ *वैयर्थ्यापत्तेरिति*। तावतैवातिप्रसङ्गभङ्गे गुरुधर्मावच्छिन्नशक्तिप्रतिपादकस्य तस्यानतिप्रयोजनकत्वापत्तेरित्यर्थः । दृष्टफलाभावादिति भावः । केचित्तु भ्वादिषु धातुरित्यनुगतव्यवहारात् क्रियात्वमपि जातिरेव शक्यतावच्छेदकतयेव शक्ततावच्छेदकतयाप्यसति बाधके जातिसिद्धेर्निष्प्रत्यूहत्वात् । भूवादिसूत्रं त्वनभिज्ञप्रतीतिपरं, तादृशजातिपरिचायकप्रदर्शकमित्याहुः ।

नन्वस्मन्मते पूर्वापरीभूतावयवसमुदायरूपक्रियाया धात्वर्थत्वेन तद्गृहीतपौर्वापर्य्यारोपेण फलस्य क्रियात्वोपपत्तिः । भवन्मते तु क्रियाया धात्वर्थत्वानुपगमेन कथं

परीक्षा

एवं मीमांसकमते निरस्ते सिद्धान्त्येकदेशिनो मीमांसकानुसारिणीं शङ्कां निरसितुमाशङ्कते—*नन्वित्यादिना* । *धात्त्वर्थ एव*—फलमेव । तथाच कथं भूवादिसूत्रस्य धातोर्व्यापारवाचकत्वसाधकता इति भावः । *यथाश्रुते*-ग्रहपदस्यापूर्णे । *उत्पत्ताविति* । यथा मैत्रपुत्रो मैत्र इत्युक्ते ।*ज्ञप्ताविति* । "हलन्त्यम्" इत्यत्र यथा उत्पत्तौ यत्र आनादित्वं तत्रान्योन्याश्रयस्तु न क्षतिकरो; बीजाङ्कुरवत् । यत्र च नोत्पत्तौ न वा ग्रहेऽपेक्षा, किन्तु स्थितौ तत्र नान्योन्याश्रयो दोषाधायकः, यथा भूमिजलयोः । *अन्यतमत्वमिति*—भ्वादिभिन्नत्वमित्यर्थः । *आपत्तेरिति* । दृष्टफलासाधकत्वापत्तेः । यत्तु धातुर्धातुरित्यनुगतप्रतीत्या धातुत्वं जातिरिति; तन्न । विभुर्विभुरित्यनुगतप्रतीत्या विभुत्वजातिसिद्ध्यापत्तेः । स एव पुनः शङ्कते—

व्यापारसन्तानः क्रिया, तद्वाचकत्वे सति गणपठितत्वमित्यर्थः। ननु सत्तादीन् फलांशानन्यतमत्वेनादाय तद्वाचकत्वे सति गणपठितत्वं लक्षणमुच्यताम् । धात्वर्थत्वात् तेषां क्रियाशब्देन व्यवहारो भाष्यादौ कृतोऽप्युपपत्स्यत इति चेद् ? न। अन्यतममध्ये विकल्पस्यापि विकल्पयतीति प्रयोगानुसारात् प्रवेशावश्यकत्वेन तदर्थके वेत्यव्यये उक्तरीत्या गणपठितत्वसत्त्वेनाऽतिव्याप्तेरिति ॥ ११ ॥

नन्वस्यैव धातुत्वे अस्तीत्यादौ क्रियाप्रतीत्यभावादस्त्यादीनां तदवाचकानामधातुत्वप्रसङ्ग इत्यत आह—

**अस्त्यादावपि धर्म्यंशे भाव्येऽस्त्येव हि भावना ॥**
**अन्यत्राशेषभावात्तु सा तथा न प्रकाशते ॥१२॥**

अस्त्यादौ, अस् भुवि इत्यादौ । धर्म्यंशे–धर्म्मिभागे । भाव्ये–भा-

---

दर्पणः

तत्र तद्व्यवहारोऽत आह-*धात्वर्थत्वादिति* । तथाच—तत्र फलत्वव्यवहार इव क्रियात्वव्यवहारोऽपि धात्वर्थत्वप्रयोजकत्वाऽभ्युपगमेन तदुत्पत्तेरिति भावः । *भाष्यादौ कृत इति* । "कर्मवत्कर्मणा" इति सूत्रे भूवादिसूत्रे च भाष्यादावित्यर्थः । आदिपदाद् वृत्त्यादिपरिग्रहः ॥ ११ ॥

*अस्यैवेति* । क्रियावाचकस्यैवेत्यर्थः । एवकारेण फलमात्रवाचकत्वव्यवच्छेदः । एतदवाचकत्वे हेतुः—*क्रियाप्रतीत्यभावादिति* । *तदवाचकानाम्*—व्यापारावाचकानामित्यर्थः । *अधातुत्वप्रसङ्ग इति* । आपत्तेरिष्टत्वं तु न, ततो लकाराद्यनुत्पत्तिप्रसङ्गादिति भावः ॥

धर्म्यंशे, फलरूपे इत्यर्थः । अंशपदोपादानात् धर्मिणो धर्मघटितमूर्त्तिकत्वादकर्मकस्थले कर्तृवृत्तित्वाच्च फलस्यापि तदंशत्वात् । तस्य भाव्यतायामेव विवादादाह—

परीक्षा

*नन्विति* । ननु फले पूर्वापरीभूतावयवकत्वाभावेन क्रियात्वव्यवहारः कथमित्यत आह—*धात्वर्थत्वादिति* । धातुवाच्यत्वमेव ( फलत्वमेव ) फलत्वव्यवहारे यथा प्रयोजकम् , तथा क्रियात्वव्यवहारोऽपि भविष्यतीति भावः । नचैवं व्याख्याने-शङ्कमतेऽन्योन्याश्रयपरिहारः कथमिति वाच्यम् ? धात्वर्थः क्रियेत्येतत् प्रविष्टं धातुत्वं त्वन्यदेवेत्याशयात् । *आवश्यकत्वनेति* । अन्यथा कूपशब्दस्य सञ्ज्ञा न स्यादिति भावः ॥ ११ ॥

*अस्यैव*—व्यापारवाचकस्यैव । *क्रिया*—व्यापारः । *अभावादिति* । पौर्वापर्यप्रतीतेरिति भावः । *तदवाचकानाम्*—क्रियाया अवाचकानाम् । *धर्म्यंशे*—फले, धर्मी कर्त्ता, तदंशः फलम् , अकर्मकधातुस्थले फलाश्रयस्य कर्त्तृत्वात् । धर्मिणो धर्मघटितमूर्त्तिकतयांशव्यवहारो नासमञ्जसः; तस्य भाव्यतायां विवादादु-

व्यत्वेन विवक्षिते। अस्त्येव–प्रतीयत एव। अयमर्थः 'स ततो गतो न वा' इति प्रश्ने, महता यत्नेन तिष्ठतीति प्रयोगे सत्तारूपफलानुकूला भावना प्रतीयत एव। उत्पत्त्यादिबोधने तु सुतराम्।

रोहितो लोहितादासीद् धुन्धुस्तस्य सुतोऽभवद्। (रामायणम्)

इत्यादिदर्शनात्।

---

दर्पणः

*भाव्यत्वेनेति*। भावनानिष्पाद्यत्वेनेत्यर्थः। फलसाध्यव्यापारस्य जिज्ञासितत्वे इति यावत्। अत एव वक्ष्यति, 'आसन्नविनाशम्' इति। विवक्षास्थलमेव प्रश्नोत्तरभावेन दर्शयति–* स ततो गतो न वेति*। "गत्यर्थाऽकर्मक" इति कर्त्तरि क्तः। प्रश्न इत्यनेन भाव्यत्वस्य जिज्ञास्यत्वं ध्वन्यते। तथाच—गतो न वा किमिति प्रश्नाऽऽकारः।

*प्रयोग इति*। प्रश्ननिवर्त्तके वाक्य इत्यर्थः। प्रतीयते एवेत्यस्यास्धातुनेति शेषः। ननु स ततो गतो न वेति वाक्याद् गेहाद्यवधिकविभागानुकूलव्यापाराश्रयत्वतदभावाऽन्यतरस्य जिज्ञास्यत्वमवगम्यते। महता यत्नेनाऽस्तीति, वाक्यात्त्वस्तेर्व्यापारार्थकत्वाभ्युपगमेऽऽपि चैत्रादिकर्तृकसत्ताऽनुकूलव्यापार एवेति कथमेतयोः प्रश्नोत्तरत्वम्। तथाहि—यद्धर्मावच्छिन्ने जिज्ञासितयद्धर्माऽवच्छिन्नस्य सम्बन्धो यत्प्रश्नवाक्यात् प्रतीयते तद्धर्मावच्छिन्ने जिज्ञासिततद्धर्मावच्छिन्नसम्बन्धबोधकवाक्यस्योत्तरता। यदाहुः—

जिज्ञासितपदार्थस्य संसर्गो येन गम्यते।
तदुत्तरमिति प्रोक्तमन्यदाऽऽभासशब्दितम्॥ इति।

यथा घटत्वावच्छिन्नजिज्ञासितधर्मावच्छिन्नसम्बन्धबोधकस्य, कस्माद् घट इति प्रश्नवाक्यस्य घटत्वाऽवच्छिन्ने जिज्ञासितदण्डत्वाऽवच्छिन्नस्य हेतुहेतुमद्भावबोधकं दण्डाद् घट इति वाक्यमुत्तरम्। प्रकृते तु, गत, इति, नेति, वेत्युत्तरं युज्यते।

किञ्चोक्तप्रश्नेन सत्तासाधकव्यापारस्य जिज्ञास्यत्वानवगमात् कथमेतस्योत्तरत्वम्। तथाऽत्वेऽपि पूर्वोत्तरवाक्ये यत्नेनेत्युपादानाद्यत्नपदोपस्थाप्ययत्नानिष्पाद्यत्वबोधेनैवोत्तरत्वसिध्या, न ततो धातोर्व्यापारार्थकत्वसिद्धिरत आह—*उत्पत्त्यादीति*। सुतरामित्यस्य व्यापारार्थकत्वमिति शेषः। अत्राश्रयताबोधस्योभयमतसिद्धत्वेन सैव साध्यत्वेनाभिधीयमानत्वाद् व्यापारः, पौर्वापर्य्यं च परमते सत्तायामिव कालगतं तत्रारोपितमेवेति भावः।

परीक्षा

क्तम्—*विवक्षित इति*। *अस्तीति*। तिष्ठतीत्यर्थः। उत्पत्त्यादीत्यादिनाऽस्तीति परिग्रहः। उत्पत्त्याद्यर्थकत्वे मानन्तु "धान्यानां भवने" "तत्र जात" "तत्र भव" इति भिन्ननिर्द्देशः। 'गत इति प्रश्न' इत्यनेन भाव्यत्वजिज्ञासा ध्वनिता; सा भाव्यत्वबोधेनैव निर्वर्तते। यदि भाव्यत्वबोध उत्तरवाक्यान्न स्यात्तदा तस्या निवृत्तिर्न्न स्यादिति भावः। यद्यप्युत्पद्यते—इत्यत्र व्यापार-आश्रयता, तथापि 'साध्यत्वेन प्रतीयते'-इत्यतस्तस्याः क्रियात्वव्यवहारविषयता।

नन्वाश्रयतारूपव्यापारप्रतीतिरपि स विवाद एवेत्याशङ्कां साधकान्तरोपन्यासेन

किञ्च अत्र भावनाविरहे लडादिव्यवस्था न स्यात् । तस्या एव वर्त्तमानत्वादिविवक्षायां तद्विधानात् ।

"क्रियाभेदाय कालस्तु संख्या सर्वस्य भेदिका"

इति वाक्यपदीयादिति ।

नन्वेवमस्तीत्यत्र स्पष्टं कुतो न बुद्ध्यत इत्यत आह-*अन्यत्रेति*॥ *अशेषभावाद्*—भावनायाः फलसमानाधिकरणत्वात्। तथाच भावनायाः फलसामानाधिकरण्यं तत्स्पष्टत्वे दोष इति भावः। नन्वेवं किं करोतीति प्रश्ने, पचतीत्युत्तरस्येवास्तीत्युत्तरमपि स्यादिति चेत् ? इष्टापत्तेः । आसन्नविनाशं कञ्चिदुद्दिश्य किं करोतीति प्रश्ने, अस्तीत्युत्तरस्य सर्व्वसम्मतत्वात् ।

---

दर्पणः

ननु तत्राप्याश्रयताया धात्वर्थत्वकल्पनमप्याग्रहमूलकमेव। तत्रोत्पत्तिमात्रार्थकत्वेऽपि रोहिताश्रयिका भूतानद्यतनोत्पत्तिरित्यभिमतार्थबोधलाभादत आह—*किञ्चेति* । *तस्या एवेति* । भावनाया एवेत्यर्थः । एवकारेण फलव्यवच्छेदः । यथा चैतत्तथोक्तं सार एव । *तद्विधानात्*—लडादिविधानात् । तत्र हरिसम्मतिमप्याह-*क्रियाभेदायेति* । "तुमर्थात्"इति चतुर्थी, वार्त्तिकेन तादर्थ्ये वा । क्रियां भेत्तुं-विशेषयितुं कालो-लडादिबोध्यः। अस्तीति शेषः । लडाद्यर्थकालः क्रियामात्रभेदकः इति यावत्; विभक्त्यर्थरूपासंख्या तु सर्वस्याख्यातप्रतिपादकार्थस्य भेदिकेति तदर्थः। मतान्तरेषु धातुप्रतिपादकार्थस्येति बोध्यम् । *एवम्*-धातोर्व्यापारवाचकत्वे ।

मूले—*अशेषभावादिति* । शेषः—फलव्याप्त्यतिरिक्तो, भवत्यस्मिन्निति

परीक्षा

निरस्यति—*किञ्चेति* । *भावनाविरहे*—अकर्मकधातुस्थले भावनाप्रतीत्यस्वीकारे । *कालस्त्विति*। अङ्गीक्रियत इति शेषः । *सर्वस्य—*क्रियायास्तद्भिन्नस्य ।

*एवम्*—धातुमात्रस्य क्रियावाचकत्वे । अन्यत्रेत्यस्य सकर्मकभिन्नस्थल इत्यर्थः। नन्वशेषभावादित्यस्मात् फलसमानाधिकरणत्वादित्यर्थप्रतीतिः कथमिति चेदित्थम्-भावशब्दोऽधिकरणघञन्तोऽधिकरणवाची तस्य शेषशब्देन बहुव्रीहिसमासः । शेषफलव्याप्त्यतिरिक्तः—फलानधिकरणम् । एतेन फलानधिकरणवृत्तितो लाभे ततो नञ्समासे फलसामानाधिकरण्यस्य लाभ इति । न च फलसामानाधिकरण्यं सकर्मकगम्यादिधात्वर्थस्थलेऽपीति; तत्राऽपि भावनाप्रतीतिर्न स्यादिति वाच्यम् ? एकमात्राधिकरणकभावनायां सामानाधिकरण्यस्य प्रतिबन्धकत्वात् । तथाच विषयतासम्बन्धेन भावनाप्रतीतिः, स्वरूपसम्बन्धेन फलानधिकरणावृत्तिप्रतिबन्धकत्वात् भावनानिष्ठं फलसामानाधिकरण्यं स्वरूपतः प्रतिबन्धकम्, न तु तद्ग्रहापेक्षया ।

सा च प्रतिबन्धकता मणिमन्त्रन्यायेनेत्याशयेनाह—*दोष इति* । *एवम्*—अस्त्यादीनामकर्मकाणामपि भावनावाचकत्वे । न च दिगस्त्यात्मास्तीत्यादौ दिगादिसत्ताया नित्यत्वात्कथं भावनाप्रतीतिरिति वाच्यम् ? स्वरूपधारणानुकूलव्यापार-

इतरत्र तु सुस्थतया निश्चिते किं करोतीति प्रश्नः' पच्यादिविशेषगोचर एवेत्यवधारणादस्तीति नोत्तरमिति ॥ १२ ॥

नन्वेवं भावनायाः फलनियतत्वात् फलाश्रयस्य च कर्म्मत्वात् सर्व्वेषां क्रियावाचकत्वे सकर्म्मकतापत्तिरित्यत आह—

**फलव्यापारयोरेकनिष्ठतायामकर्म्मकः ॥**
**धातुस्तयोर्धर्म्मिभेदे सकर्म्मक उदाहृतः ॥ १३ ॥**

एकनिष्ठतायाम्–एकमात्रनिष्ठतायाम् , भिन्नाधिकरणावृत्तितायामिति यावत् । तेन गम्यादौ फलस्य कर्त्तृनिष्ठत्वेऽपि नातिव्याप्तिः ।

---

दर्पणः

भावोऽधिकरणं यस्येति बहुव्रीहिणा शेषभावशब्दः फलव्यधिकरणार्थकः भावप्रधाननिर्देशः। तस्मान्नञ्समस्तात्पञ्चम्येकवचने फलव्यधिकरणत्वाभावादित्यर्थावगतिः॥१२॥

फलितमाह—सारे *भावनायाः फलेति* । एकमात्राऽधिकरणकफलसामानाधिकरण्यस्य स्वरूपतो भावनास्पष्टभानप्रतिबन्धकत्वाऽभ्युपगमान्न स्पष्टं तत्प्रतीतिः । स्पष्टत्वं च–फलप्रतीत्यनभिभूतत्वमिति भावः । एवम्—अस्त्याद्यकर्मकाणां व्यापाराऽर्थकत्वे । *फलनियतत्वादिति* । फलव्याप्यत्वादित्यर्थः । भावनावाचकत्वस्य फलवाचकत्वव्याप्यत्वादिति यावत् । *सकर्मकतापत्तिरिति* । फलव्यापारोभयवाचकस्य पच्यादेः सकर्मकत्वदर्शनादिति भावः ।

ननु फलव्यापारयोरेकनिष्ठत्वस्याकर्मकतायां तन्त्रत्वे गम्यादीनामप्यकर्मकतापत्तिस्तदर्थफलव्यापारयोरेककर्त्तृवृत्तित्वादतो व्याचष्टे—*एकमात्रनिष्ठतायामिति* । एकमात्रनिष्ठत्वमेकेतरावृत्तित्वे सत्येकवृत्तित्वम् । तत्र प्रयोजनाभावाद्विशेष्यांशमपहाय फलितार्थमाह–*भिन्नाधिकरणेति* । भिन्नत्वं च व्यापाराधिकरणापेक्षया बोध्यम् ।
तथाच स्वार्थव्यापारानधिकरणावृत्तिफलवाचकत्वं पर्य्यवसितं लक्षणं लक्ष्ये ग्राहयति–

परीक्षा

स्यैतादृशस्थलेऽस्त्यर्थत्वात् । एवं च यथा 'पच्यते तण्डुलः स्वयमेव' इत्यत्राश्रयतारूपव्यापारस्य प्रतीतिस्तथाऽत्रापि—आश्रयतारूपस्य व्यापारस्य साध्यत्वेन भानं दिगादिकर्त्तृकं स्वरूपधारणमिति बोधः ॥ १२ ॥

*फलनियतत्वात्*—फलव्यापकत्वात् । एवं च यत्र फलवाचकता; तत्र भावनावाचकत्वमपि वर्त्तत इत्युभयसद्भावेन सकर्मकता पच्यादिवत् स्यात् । *फलव्यापारयोरिति* । एकनिष्ठतायां धातुरकर्मक इति सम्बन्धः ।

ननु गम्यादिधात्वर्थसंयोगादिफलस्य तदनुकूलव्यापारस्य च पुरुषनिष्ठत्वात्तेषामप्यकर्मकत्वापत्तिरत आह—*एकाधिकरणमात्रेति* । ननु मात्रपदनिवेशे तदर्थस्य एकेतरावृत्तित्वे सत्येकवृत्तित्वस्य विवक्षणे—एकेतराप्रसिद्ध्याऽप्रसिद्धिरत आह—*भिन्नेति* । नचैवमपि भेदस्य केवलान्वयित्वादसम्भव इति वाच्यम् । भेदस्य सप्रतियोगिकत्वेन प्रतियोग्याकाङ्क्षायां व्यापाराश्रयस्यैव तथात्वात् । लक्षणं ग्राहयति–

अकर्म्मको यथा—भ्वादिः । तयोः—फलव्यापारयोः, आश्रयभेदे सकर्म्मक इत्यर्थः ।

उक्तञ्च वाक्यपदीये—

आत्मानमात्मना बिभ्रदस्तीति व्यपदिश्यते ।
अन्तर्भावाच्च तेनासौ कर्मणा न सकर्मकः ॥ इति ।

*बिभ्रदिति* । तेन स्वधारणानुकूलो व्यापारोऽत्रापि गम्यत इति भावः । तेन—कर्म्मणा, सकर्म्मकत्वन्तु न, अन्तर्भावात्—फलांशेन

---

दर्पणः

*भ्वादिरिति* । तत्र सत्ताऽऽत्मकव्यापारस्यैकमात्रनिष्ठत्वस्याऽविकलत्वादितिभावः ।

ननु मूले-'तयोर्धर्मिभेदे' इत्यनेन स्वार्थफलव्यधिकरणव्यापारवाचकत्वं स्वार्थव्यापारव्यधिकरणफलवाचकत्वं वा सकर्मकत्वमुक्तम् । तत्र वैयधिकरण्यम्—तदधिकरणाऽवृत्तित्वम् । तथाच गमादावव्याप्तिः । तदर्थफलव्यापारयोः परस्पराऽधिकरणवृत्तिभिन्नत्वाऽभावादतो व्याचष्टे भूषणसारे—*आश्रयभेद इति* । तथाच प्रथमलक्षणे कर्त्तृभिन्नतदधिकरणाऽवृत्तित्वरूपस्य द्वितीये तदनधिकरणावृत्तित्वरूपस्य निवेशान्नाऽनुपपत्तिरिति भावः ।

अस्तेः फलव्यापारोभयार्थकत्वे हरिसम्मतिमप्याह—*उक्तञ्चेति* । *व्यपदिश्यते*—व्यवह्रियते । *अन्तर्भावादिति* । धात्वर्थतावच्छेदककोटिप्रविष्टत्वादित्यर्थः ।

पृथगुपस्थितयोरेवान्वयनियमात् कर्मसंज्ञकाऽर्थान्वय्यर्थकरूपसकर्मकत्वस्य तत्राऽनवकाशादिति भावः । स्वोक्तलक्षणाऽनुसारेण सारकृद् व्याचष्टे—*फलांशेनेति* । स्वकर्मकधारणरूपफलेन सह तदनुकूलव्यापारस्यैकाधिकरण्यादित्यर्थः । आत्मरूपकर्मणा सकर्मकत्वं कुतो नेत्याकाङ्क्षायाम् एतत्समाधानस्योदक्षरत्वदोषदुष्टस्य योग्यत्वमीदृशव्याख्याने सुधीभिर्विभावनीयम् ।

परीक्षा

*तेनेति* । *यथा भ्वादिरिति* । सत्वरूपफलस्य तदाश्रयत्वस्य चैकनिष्ठत्वात् । मूले—*तयोर्द्धर्मिभेद इति* । फलव्यापारयोर्द्धर्मिभेद इत्यर्थः । तथाच यत्र फलव्यापारयोराश्रयभेदः; स धातुः सकर्मकः । नचैवमपि गमित्यजिधात्वर्थफलसंयोगविभागयोर्व्यापारस्य चैकनिष्ठत्वादव्याप्तिरिति वाच्यम् ? व्यापाराश्रयातिरिक्तनिरूपितफलतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वस्य विवक्षितत्वात् ।

अत्रार्थे हरिसम्मतिमाह—*उक्तञ्चेति* । *आत्मानम्*—स्वस्वरूपम् । *बिभ्रत्*—धारयत् । एतेन स्वस्वरूपधारणानुकूलो व्यापारो धात्वर्थ इति लब्धम् । *व्यपदिश्यते*—व्यवह्रियते । नन्वेवमात्मानं धत्ते इति वदात्मानमस्तीत्यपि प्रयोगोऽविशेषात्स्यादत आह—*अन्तर्भावादिति* । अन्तर्भावादित्यस्य धात्वर्थतावच्छेदकशरीरे कर्मणः प्रवेशादित्यर्थः । तथाच सकर्मकपदस्य कर्मणा सह वर्तते कर्म्मान्वय्यर्थप्रतिपादक इत्यर्थः । अन्वयश्च पृथगबद्धसंसर्गः । प्रकृते तु—कर्मणः स्वस्वरूपस्य पृथग् बुद्ध्यभावात् न तेन कर्मणा सकर्मकत्वव्यवहार इति भावः । एवमेव सर्वत्र धात्वर्थसङ्गृहीतकर्मस्थले बोध्यम् । स्वरीत्यानुसारकृदाह—*फलांशेनेति* । स्वस्वरूपधृत्यात्मकफलेन व्यापारस्यैकाधिकरण्यादिति यावत् ।

सामानाधिकरण्यसत्त्वादित्यर्थः। आत्मानं जानाति इच्छतीत्यादौ च द्वावात्मनौ–शरीरात्मान्तरात्मा च। तत्रान्तरात्मा तत्कर्म्म करोति येन शरीरात्मा सुखदुःखे अनुभवतीति "कर्मवत्कर्मणा" (पा०सू०३।१.८७) इति सूत्रीयभाष्योक्तरीत्या भिन्नाधिकरणनिष्ठतामादाय सकर्म्मकत्वमित्यवधेयम्॥ १३॥

नन्वसत्त्वभूतक्रियाया धात्वर्थत्वे पाक इत्यत्रापि तत्प्रत्ययापत्तिः। नचेष्टापत्तिः। "कृदभिहितो भावो द्रव्यवत् प्रकाशते" इति भाष्यविरोधादित्यत आह—

**आख्यातशब्दे भागाभ्यां साध्यसाधनवर्तिता॥**
**प्रकल्पिता यथा शास्त्रे स घञादिष्वपि क्रमः॥१४॥**

---

दर्पणः

नन्वात्मानं जानातीत्यादावनुपदोक्तसकर्मकलक्षणस्याऽव्याप्तिः। तत्र ज्ञानरूपफले तदर्थव्यापारस्य वैयधिकरण्याऽभावादतिव्याप्तिश्च फलसमानाधिकरणेत्याद्यकर्मकलक्षणस्येत्याशङ्क्य समाधत्ते–*आत्मानं जानातीत्यादिना*। *अन्तरात्मेति*। अन्तःकरणावच्छिन्नात्मा शरीरात्मा तदवच्छिन्नः सः। तथाचाऽऽत्मन एकत्वेऽपि ततः शरीररूपोपाधिभेदपरिकल्पितं भेदमादाय वैयधिकरण्यस्य सूपपादत्वादुक्तलक्षणयोर्नाव्याप्त्यतिव्याप्तीत्याह—*भिन्नाधिकरणेति* ॥ १३ ॥

*असत्त्वभूताया इति*। क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकधर्माक्रान्ताया इत्यर्थः। *तदिति*। तेन रूपेण प्रतीत्यापत्तिरित्यर्थः। *कृदभिहित इति*। कृदर्थ इत्यर्थः। *द्रव्यवदिति*। द्रव्येण नामार्थेन तुल्यं प्रकाशते–भासते इत्यर्थः। द्रव्यधर्माणि—लिङ्गसंख्याकारकत्वानि गृह्णातीति यावत्। यद्वा द्रव्यं क्रियाकाङ्क्षोत्थापकतावच्छेदकरूपसिद्धत्ववत्, तेन तुल्यं प्रकाशते इत्यर्थः। सिद्धत्वेन भासत इति यावत्। तथा च तादृशभाष्येणापाद्यव्यतिरेकनिर्णये तद्धेतुभूते प्रामाण्योपगमादिष्टापत्तेरसुकरत्वादिति भावः।

परीक्षा

अत्रेदम्बोध्यम्––आत्मस्वरूपकर्मणा कुतो न सकर्मकत्वमिति शङ्कायामेवं व्याख्यानमनुचितम्, कर्मणोऽन्तर्भावस्यैवाक्षरमर्य्यादया लाभात्। नन्वेवमात्मानं जानातीत्यादौ ज्ञानरूपफलस्य तदनुकूलव्यापारस्य चैकत्र सत्वादकर्मकत्वापत्तिरत आह—*आत्मानमित्यादि*। एवं च शरीरात्मनः कर्मत्वमन्तरात्मनः कर्त्तृत्वमिति पृथक् बुद्धिसंसर्गोऽस्त्येवेत्याह—वस्तुत आत्मन एकत्वेऽपि–अवच्छेदकभेदाद् भेदकल्पनया फलव्यापारयोर्वैय्यधिकरण्यम्॥ १३॥

असत्वभूता या भावना तस्या धातुवाच्यत्वमिति सिद्धान्ते शङ्कते—*नन्वसत्वेति*। क्रियान्तराकांक्षानुत्थापकतावच्छेदकधर्मविशिष्टेत्यर्थः। *द्रव्यवदिति*। द्रव्येण नामार्थेन लिङ्गसंख्यान्वयिना तुल्यं प्रकाशते इत्यर्थः। *आख्यातशब्दे*—इत्यस्य आख्यातयोः शब्द इत्यर्थः। घटितत्वं षष्ठ्यर्थः। 'पश्य मृगो धावति' इति समुदायः

आख्यातशब्दे–पश्य मृगो धावतीत्यादौ। भागाभ्यां–तिङन्ताभ्याम्। प्रकृतिप्रत्ययभागाभ्यामिति। विवरणकारोक्तमपव्याख्यानं पचतीत्यत्राऽपि भागद्वयसत्त्वात्। साध्यसाधनरूपता यथाक्रमं ग्राह्या। साध्यत्वम्–क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकरूपवत्त्वम्। साधनत्वं कारकत्वेनान्वयित्वम्। स घञादिष्वपीति। प्रकृत्या साध्यावस्था, प्रत्ययेन साधनावस्था। इयान् परं विशेषः। घञाद्युपस्थाप्या लिङ्गसंख्यान्वयिनी कारकान्वयिनी च आख्यातान्तोपात्ता तु नैवम्। तथापि कारकत्वेनान्वयित्वमात्रेण दृष्टान्तदार्ष्टान्तिकतेत्यवधेयम्।

---

दर्पणः

आख्याते शब्दौ यस्मिन्निति बहुव्रीहिणा वाक्यमन्यपदार्थ इत्याशयेनाह–*पश्येत्यादि*। *तिङन्ताभ्याम्*–पश्यधावतिभ्याम्॥ धावतेः साधनत्वेनः पश्यतेः साध्यत्वेन क्रियाबोधकत्वाद् दृष्टान्ततोपपत्तिरत एव 'वक्ष्यति इयान् परं विशेष' इति। *प्रकृत्यादीति*। व्याख्यानं विवरणस्थम्। आख्यातशब्द इति कर्मधारय इति तद्भावः। अपव्याख्याने हेतुमाह—*पचतीत्यत्रेति*। तथाच तिङन्तत्वेन केवलाख्यातपदेनैव पचत्यादितिङन्तरूपार्थलाभे शब्दपदवैयर्थ्यम्। मन्मते तु तस्य बहुव्रीहिलाभसम्पादकतयाऽऽख्यातशब्दपदस्य तिङन्तद्वयघटितवाक्यपरतोपपत्तिः, पचत्यादेर्भागद्वयस्य साध्यसाधनवर्त्तित्वेऽपि क्रियायास्ततः साधनत्वेनाऽबोधाद् दृष्टान्तत्वासम्भवश्चेति भावः। तदेव विशदयति–*साधनरूपतेति*। प्रकृत्येत्यादौ पाक इत्यादाविति शेषः।

नन्वनयोर्लिङ्गसंख्यान्वयित्वानन्वयित्वेन वैषम्यात् कथं दृष्टान्तदार्ष्टान्तिकभावोऽत आह–*इयान् परमिति*। तथाच यत्किञ्चिद्धर्मवत्त्वेन सादृश्यविवक्षणान्नोक्तदोष इति भावः।

ननु धावत्यर्थस्य कारकत्वेनाऽनन्वयित्वे कारकानन्वयित्वरूपमसत्त्वं तस्या भज्येतेति चेत्? तत्र क्रियानाधारत्वविशेषणेन कर्तुर्व्यापाराधारत्वेन कर्मणः फलाधारत्वेन कर्तृत्वेन कर्मत्वेनान्वयेऽप्युक्तरूपस्यासत्त्वस्याऽक्षतत्वात्। उक्तञ्च—

क्रिया न युज्यते लिङ्गं क्रिया नाऽऽधारकारकैः।
असत्त्वरूपता तस्या द्वयमेवाऽवधार्यताम्॥ इति।

क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकधर्मवत्त्वमसत्वभूतत्वमिति मते त्वत्र दोषः प्रागुक्त एव। साधनाकाङ्क्षोत्थापकतावच्छेदकधर्मवत्त्वरूपतया परिष्कृते तु न क्वापि

परीक्षा

समासार्थस्तज्जन्यबोधे धावतेः साधनत्वेन पश्यतेः साध्यत्वेन क्रियाबोधकत्वाद् दृष्टान्तता। तथा विधाने साध्यत्वेन क्रियाबोधकत्वे मानत्वादिति साध्यावस्थापन्नक्रियान्वयित्वे कारकविभक्तेः साधुत्वात्। यदि–साधुता तथाभिधानान्न स्यात्, तदा कारकत्वाभावात्तदधिकारीया विभक्तिर्न्न स्यात्।

अकारकत्वात्षष्ठ्यभावापत्तौ परेणोक्तायां यथाकथञ्चित्कारकत्वे तथोपपादिते षष्ठी

नच घञन्ते धातुना तथाभिधाने मानाभावः। ओदनस्य पाक इति कर्मणि षष्ठ्या मानत्वात्। नच भवतीत्यध्याहृततिङन्तक्रियान्वयात् षष्ठी। "कर्तृकर्म्मणोः कृति" (पा० सू० २। ३। ६५) इति कृदन्तेन योग एव तद्विधानात्। "न लोकाव्ययनिष्ठाखलर्थतृनाम्" (पा० सू० २। ३। ६९) इति लादेशयोगे षष्ठीनिषेधाच्च। एवंरी-

---

दर्पणः

दोषः इति। *तथाभिधाने इति*। उक्तसाध्यत्वेन रूपेण प्रतीतावित्यर्थः।

*ओदनस्येति*। अत्रौदनपदं तण्डुलादिपरम्। अन्यथा विक्लिन्नस्यैवौदनपदार्थतया तस्य पाकासम्भवेन बाधितार्थकताऽऽपत्तेः। *कर्मषष्ठ्या इति*। कर्मत्वेन कर्मशक्तायाः षष्ठ्या एवेत्यर्थः। *मानत्वादिति*। अनुपपत्तिरूपप्रमाणत्वादित्यर्थः। घञन्तेन सिद्धभावस्यैवाऽभिधाने कारकाणां साध्यस्वभावक्रियाऽन्वयित्वनियमेनौदनस्याऽकारकतयाऽकर्मत्वेन तत्र षष्ठ्यनुपपत्तेरेव तस्य साध्यस्वभावक्रियार्थकत्वे मानत्वादिति भावः। *क्रियान्वयादिति*। साध्यस्वभावाऽध्याहृतभवत्यर्थस्य परम्परयाऽन्वयादित्यर्थः।

नन्वोदनस्य कृदन्तार्थफलाश्रयत्वरूपकृदन्तयोगस्यापि सत्त्वेन कथं तदनुपपत्तिरत आह—*न लोकेति*। इदं च समाधिसौकर्यादुक्तम्। प्रत्यासत्त्या यद्धात्वर्थफलाश्रयत्वं तद्धात्वर्थकारकस्यैव कर्मतालाभेन पाकपदार्थस्य क्रियात्वेन भवत्यर्थस्य क्रियात्वेऽपि तदर्थफलाश्रयत्वाभावेनौदने कर्मत्वस्यव दुरुपपादत्वात्। ननु तत्र मा भूत् कृद्योगषष्ठी शेषषष्ठ्यैव तथा प्रयोगोपपत्तेरिति चेद्? न। सर्वत्र सम्बन्धषष्ठ्यैव प्रयोगोपपत्त्या "कर्तृकर्मणोः" इत्यादिविधिवैयर्थ्यापत्तेः। यदि च जगतः कर्त्तेत्यादौ कर्म्मत्वेन कर्मत्वप्रकारकसर्वसिद्धबोधोपपत्त्यर्थं समासस्थले "गतिकारकोपपदात्कृत्" (पा० सू० ६।२।१३९) इत्यादिविहितस्वरनिर्वाहार्थं च तस्यावश्यकतेति विभाव्यते, तदा प्रकृते किं तत्प्रयोजनं पाणिपिहितमिति भावः। नन्वसत्त्वभूतक्रियाया भावप्रत्ययप्रकृत्यर्थत्वे काष्ठानां तन्निरूपितकरणत्वस्यापि सम्भवाद्भवत्यर्थाऽनध्याहारेऽपि, काष्ठैः पाक इत्याद्यपि प्रसज्ज्येतेत्याशङ्क्येष्टापत्त्या परिहरति—*एवं रीत्येति*॥

अन्ये तु भावप्रत्ययस्थले सम्बन्धिभेदेनैकस्यैव पितृत्वभ्रातृत्ववद्भावत्यर्थस्य मृगदर्शनसम्बन्धिभेदात् साधनवच्चैकस्या एव क्रियाया वाचकप्रत्ययरूपसम्बन्धिभेदात् साध्यत्वसाधनत्वाभ्यामुपस्थितिर्न ताभ्यां भिन्नभिन्नक्रियोपस्थितिरित्याहुः।

परीक्षा

भविष्यतीत्यभिमानिनः शङ्कां वारयति—*नचेति*। यथा—'कटे शेते' इत्यादौ कर्त्तृद्वारकपरम्परतया क्रियायोगमाश्रित्य सप्तम्याः कारकविभक्तेः साधुत्वं भवति, तथा परम्परया भवति। क्रियान्वयात्कारकत्वं भविष्यतीत्यभिमानः। *तद्विधानादिति*। प्रत्यासत्या कृदन्तार्थक्रियानिरूपितकर्तृत्वस्येव कारकत्वस्यापि तन्निरूपितस्यैवाश्रयणादिति भावः। प्रत्युत बाधकमप्यस्तीत्याह—*न लोकेति*। ननु यदि कृदन्ते प्रकृत्या साध्यावस्थापन्नक्रिया प्रतिपाद्यते; तदा तादृशक्रियानिरूपितकरणत्वस्य काष्ठेषु सत्वेन 'काष्ठैः पाक' इत्यपि स्यादिति मीमांसकमन्यशङ्कामिष्टापत्या वार-

त्या 'काष्ठैः पाक' इत्याद्यपीष्टमेव। एवं फलांशोऽपि धातुना असत्त्वावस्थापन्न एवोच्यते । अत एव स्तोकं पचतीतिवत् स्तोकं पाक इत्युपपद्यते इति ॥ १४ ॥

एतदेव स्पष्टयति—

**साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना ॥**
**सिद्धभावस्तु यस्तस्याः स घञादिनिबन्धनः ॥१५॥**

नच घञादिभिः सिद्धत्वेनाभिधाने मानाभावः; पाक इत्युक्ते, भवति, जायते, नष्टो वेत्याद्याकाङ्क्षोत्थापनस्यैव मानत्वात्। धातूप-

---

दर्पणः

*एवमिति*। यथौदनस्य पाक इत्यादावोदनस्य कर्मत्वाऽनुपपत्त्याऽसत्त्वभूतव्यापारो धातुवाच्यस्तथेत्यर्थः । तादृशफलस्यावाच्यत्वेऽनुपपत्तिं दर्शयति-*अत एवेति*। अन्यथा तादृशप्रयोगानुपपत्तिस्तादृशफलस्य वाच्यत्वे तु तस्य व्यपदेशिवद्भावेन स्वसम्बन्धितया कर्मत्वात्, तत्समानाधिकरणस्तोकादिशब्देभ्यो द्वितीयोपपत्तिः । तत्र स्तोकादिभ्यः "कर्तृकर्मणोः"इति षष्ठी तु न । कर्तृसाहचर्य्येण भेदान्वयिन एव कर्मणस्तत्र ग्रहणात् । अत एव "पूजनात्पूजितम्" इति सूत्रे भाष्ये दारुणं यथा भवति तथाऽऽध्यापक इत्यर्थे दारुणाध्यापकसिद्ध्यर्थं मलोपवचनमारब्धं भाष्ये। अन्यथा "कर्तृकर्मणोः" इति विहितषष्ठ्यन्तेन समासे तद्वैयर्थ्यं स्फुटमेवेत्यन्यत्र विस्तरः ।

अन्ये तु "ओजः सहोऽम्भसा वर्त्तते" इत्यधिकारे "तत्प्रत्यनुपूर्वमीपलोमकूलम्" ( पा० सू० ४।४।२८ ) इति सूत्रे द्वितीयान्ततच्छब्दग्रहणं ज्ञापकम्। क्रियाविशेषणाद् द्वितीयेत्यस्यार्थस्य, न तु स्तोकाद्यर्थस्य कर्मत्वमपि । फलस्य फलाश्रयत्वाऽभावात्। एवञ्च न तद्वाचकेभ्यः षष्ठीप्रसक्तिरित्याहुः ॥ १४ ॥

परीक्षा

यति—*एवमिति* । *एवम्*—व्यापारवत्। *स्तोकं पाक इति* । अत्र व्यवदेशिवद्भावेन साध्यावस्थफलाश्रयस्यैव कर्मत्वेन तत्समानाधिकरणात् स्तोकपदाद् द्वितीया । अत एव क्रियाविशेषणानां कर्मत्वमिति प्रवादः सङ्गच्छते । न च निर्मूलोऽयं प्रवादः इति भ्रमितव्यम्। "ओजः सहोऽम्भसा" इति सूत्राद्वर्त्तते—इत्यनुवर्त्तमाने "तत्प्रत्यनुपूर्वमीप" इति सूत्रेण द्वितीयान्तात्प्रत्ययविधानं सङ्गच्छते। एवं च तस्मिन्नर्थे सकर्मकाकर्मकसाधारण्येन ज्ञापकमस्तु ॥ १४ ॥

*तत्र*—पाकादिशब्दे । *धातुरूपं*–धातुस्वरूपम्, निबन्धनं प्रतिपादकं, यस्याः सा वाचकतासम्बन्धेनास्तीति शेषः। *तस्याः*–क्रियायाः । *सिद्धभावः*—सिद्धत्वं तद् घञादिप्रतिपाद्यमस्तीति शेषः ।

कारिकाप्रतिपाद्यमस्तीति शेषः । कारिकाप्रतिपाद्यमर्थं शङ्कासमाधानाभ्यां दृढ-

स्थाप्यायां तदसम्भवस्योक्तत्वात् । स्तोकः पाक इत्यनापत्तेश्च । तस्माद्धात्वर्थान्वये स्तोकादिशब्देभ्यो द्वितीया । घञर्थान्वये प्रथमा पुँल्लिङ्गता चेति–तत्सिद्धये घञादेः शक्तिरुपेया । एतेन घञादीनां प्रयोगसाधुतामात्रमिति नैयायिकनव्योक्तमपास्तम् ।

न च घञन्तशक्त्युपस्थाप्यान्वये स्तोकः पाक इति भवतीति

---

दर्पणः

*उक्तत्वादिति* । क्रियान्तराकाङ्क्षाऽनुत्थापकतावच्छेदकरूपवत्त्वं साध्यत्वमित्यादिनेत्यर्थः । क्रियान्तराकाङ्क्षाऽनुत्थापकतावच्छेदकरूपेणोपस्थितेः क्रियान्वयासम्भवादिति भावः । तेन रूपेणोपस्थितेः 'पश्य मृगो धावति'इत्यादौ व्यभिचरितत्वादाह–*स्तोकः पाक इति* । घञा सिद्धावस्थक्रियाया अबोधने धात्वर्थविशेषणवाचकस्तोकादिशब्दस्य लिङ्गसर्वनामनपुंसकत्वापत्तिरिति भावः । तदेव विशदयति–*तस्मादिति* । *एतेनेति* । घञादीनां सिद्धावस्थाऽऽपन्नक्रियावाचकत्वव्यवस्थापनेनेत्यर्थः । *प्रयोगसाधुतामात्रमिति* । मात्रपदेन वाचकत्वव्यवच्छेदः ।

*नैयायिकनव्योक्तमिति* । धातूनां सुब्विभक्त्यप्रकृतित्वात्तदर्थे सुबर्थसंख्याकर्मत्वादीनामन्वयानुपपत्त्या धातोरिव घञन्तस्यापि क्रियावाचकत्त्वमभ्युपेयम् । प्रकृत्येकदेशार्थे तदन्वयाऽभ्युपगमे तु यत्र पाककर्त्रादेर्द्वित्वादिकं बाधितम्, पाकादेश्च तदबाधितं, तत्र पचन्तौ पश्यतीत्यादिप्रयोगापत्तेः । धातूपस्थाप्याऽर्थे सुबर्थान्वयबोधं प्रति तद्धातूत्तरधर्मिकयत्किञ्चिदर्थपरत्वज्ञानस्य प्रतिबन्धकत्वावगमे तु गौरवम् । एवञ्च यत्र धातुमात्रस्य पाकादौ तात्पर्य्यम्, तत्र तद्विशेषणतावाचकस्तोकपदाद् द्वितीयैव । यत्र तु कृदन्तसमुदायस्य तत्र तद्विशेषणवाचकपदं तत्समानविभक्तिकमेवेति कातन्त्र-

परीक्षा

यति––*नचेत्यादिना* । *अनापत्तेरिति* । यदि प्रत्ययेन सिद्धावस्थापन्नक्रियायाः अभिधानं न स्यात्तदा प्रकृतेऽपि धातुप्रतिपाद्यक्रियायामेवाभेदेन स्तोकपदार्थस्यान्वयः स्यात्, तदा द्वितीयैव स्यान्नतु प्रथमा । यदि प्रत्ययार्थोऽप्यस्तिः तदा तस्यास्तिर्भवन्तिपर इति न्यायेन गम्यमानाऽस्तिक्रिया कर्तृतया ऽभिहितकारकत्वेनाभिहिते प्रथमेति प्रथमा भवतीति भावः । सिद्धमर्थमुपसंहरति—*तस्मादिति* । *द्वितीयेति* । न च षष्ठी स्यादिति वाच्यम् ? कर्तृसाहचर्य्येण धात्वर्थे भेदेनान्वयिकर्मवाचकादेव षष्ठीविधानात् । *एतेन*—उक्तरीत्या प्रकृतिप्रत्ययोरुभयोरपि वाचकताया आवश्यकत्वेन ।

कातन्त्रपरिशिष्टकृन्मतमनूद्य दूषयति—*नचेत्यादिना* । एवं हि तैरुक्तं पाकं पश्येत्यादौ घञन्तानुपूर्व्याः शक्ततावच्छेदकत्वमावश्यकम् । अन्यथा तदुत्तरप्रत्ययार्थसंख्याकर्मत्वादेर्द्धात्वर्थेऽन्वयो न स्यात्—धातूनां प्रत्ययाप्रकृतित्वात् प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमात् । न च प्रकृत्येकदेशार्थ एवान्वयोऽस्त्विति वाच्यम् ? यत्रैकेन कर्त्रा पाकद्वयं क्रियते, तत्र पाके द्वित्वस्याबोधेन पचन्तौ पश्यतीति प्रयोगापत्तेः । यदि तु धातूपस्थाप्यार्थे सुबर्थसंख्यान्वयबुद्धिं प्रति धातूत्तरप्रत्ययधर्मिककिञ्चिदर्थपरत्वज्ञानं प्रतिबन्धकमित्युच्यते, तदा गौरवमिति घञाद्यन्तसमुदायस्य

वाच्यम्। घञन्तानुपूर्व्याः शक्ततावच्छेदकत्वे गौरवादनुशासनाच्च घञादेरेव तथा शक्तिकल्पनादिति दिक्। एवञ्च घञ्शक्त्यभिप्रायेण "कृदभिहित" इति भाष्यमतो न तद्विरोध इति भावः॥ १५॥

ननु कारकाणां भावनान्वयनियम एव पाक इत्यत्रापि कर्म्मषष्ठ्यनुसारेण भावनाया वाच्यत्वं सिद्ध्येत्। तदेव कुत इत्याशङ्कां समाधत्ते—

**सम्बोधनान्तं कृत्वोऽर्थाः कारकं प्रथमो वतिः।**
**धातुसम्बन्धाधिकारनिष्पन्नमसमस्तनञ्॥ १६॥**

सम्बोधनान्तस्य क्रियायामन्वयः। 'त्वं ब्रूहि देवदत्त' इत्यादौ निघातानुरोधात्। 'सामानवाक्ये निघातयुष्मदस्मदादेशा" इत्य-

---

दर्पणः

परिशिष्टकृन्मतं नव्यनैयायिकमतत्वेनानूद्य दूषयति-*नचेति॥ *गौरवादिति*॥

ननु भावाख्यातवद्भावविहितघञादीनां धात्वर्थानुवादकत्वे स्थिते प्रागुक्तप्रयोगोपपत्तयेऽनायत्त्या घञन्तानुपूर्व्याः शक्ततावच्छेदकत्वस्वीकार आवश्यक इत्यत आह-*अनुशासनादिति*॥ तथाच गुरुभूतानुपूर्व्याः शक्ततावच्छेदकत्वापेक्षयानुशासनानुगुण्यादुक्तप्रयोगोपपत्तये घञ्त्वस्यैव तत्त्वमुचितमिति भावः।

ननु घञादीनां व्यापारावाचकत्वेऽपि क्रियाविशेषणत्वाद् द्वितीयेत्यत्र क्रियापदस्य पाकार्थकतया तथानुपस्थाप्यपरत्वात् 'स्तोकः पाक' इत्यादौ धातूपस्थाप्यपाकस्योक्तविशेषणवैकल्यान्न तद्विशेषणवाचकपदाद् द्वितीयापत्तिरत आह-*दिगिति*॥ तदर्थस्तु-स्यादेवं यदि क्रियाविशेषणाद् द्वितीयेति स्वतन्त्रमनुशासनं स्यात्, किन्त्वस्मदुक्तफलितार्थकथनमेव तत्। तथात्वे वा त्वन्मते 'स्तोकं पाक' इत्यनापत्तेश्चेति॥१५॥

*क्रियायामिति*॥ प्रवर्त्तनाविषयक्रियायामित्यर्थः। तत्र तदनन्वये निघाताऽनुपपत्तिं प्रमाणयति-*निघाताऽनुरोधादिति*। *समानवाक्य इति*। 'आख्यातं सविशेषणं वाक्यम्' इति समर्थसूत्रभाष्यात्साक्षात्परम्परया वा पदार्थान्तराऽन्वितक्रियाबोधकाख्यातस्यैकवाक्यतालाभेन सम्बोधनान्तार्थस्य क्रियायामनन्वये, 'त्वं ब्रूहि देवदत्त'

परीक्षा

शक्तिरूपेण। एवं च यत्र धातुमात्रस्य पाकप्रतिपादकता; तत्र तत्समानाधिकरणस्तोकपदाद् द्वितीया; यत्र तु घञाद्यन्तसमुदायेन पाकादिः प्रतिपाद्यते, तत्र तत्समानाधिकरणपदात् प्रथमेति विवेक इति हि तेषां मतम्। ननु भावाख्यातवद्भावविहितघञादीनामपि धात्वर्थानुवादकत्वेन पूर्वोक्तव्यवस्थासिद्धये घञान्तानुपूर्व्याः शक्ततावच्छेदकत्वमगत्या स्वीकार्य्यमित्यत आह—*अनुशासनेति*। तथा शक्तत्वं गुरुभूतानुपूर्व्याः शक्ततावच्छेदकत्वकल्पनापेक्षया घञादिनिष्ठधर्मस्य शक्ततावच्छेदकत्वे लाघवमिति भावः। उक्तार्थे भाष्यमपि साधकमित्याह—*एवमिति*॥ १९॥

तटस्थः शङ्कते—*नन्विति।* *क्रियायाम्*–प्रवर्त्तनाविषयक्रियायाम्। *समान-

नेन समानवाक्ये एव तन्नियमात् । उक्तं च वाक्यपदीये—

सम्बोधनपदं यच्च तत् क्रियायां विशेषणम् ।
व्रजानि देवदत्तेति निघातोऽत्र तथा सति ॥ इति ॥

'पचतिभवति देवदत्त' इत्यादौ तु सूत्रभाष्यादिरीत्यैकवाक्यता-

---

दर्पणः

इत्यादौ तदभावात् समानवाक्य इति "प्रकृत्यामन्त्रितस्य" इति विहितस्य निघात-स्यानुपपत्तेरित्याखण्डलार्थः । तत्र 'शालीनां ते ओदनं दास्यामि' इत्यादौ शालीना-मित्यादेः समानवाक्यत्वसिद्धये-परम्परयेति । पचतिभवतीत्यादिसाधारणं चैतत् । प्रकृते च सम्बोधनस्यानुवाद्यविषयतयाऽनुवाद्यस्य विधेयसाकाङ्क्षतया विधेयतायाश्च क्रिया-निष्ठत्वेन तत्रैव सम्बोधनान्तार्थान्वयौचित्यात् समानवाक्यस्थत्वमक्षतमिति भावः । बोधस्त्वत्राभिमुखीभवनानुकूलव्यापारविषयदेवदत्तोद्देश्यकप्रवर्त्तनाविषयत्ववदभिन्नकर्तृ-कं भाषणमिति । तत्र हरिसम्मतिमाह-*उक्तञ्चेति* ॥

*सम्बोधनपदमिति* ॥ तद्बोध्यमित्यर्थः ॥ *विशेषणमिति* ॥ स्वोद्देश्यक-प्रवर्त्तनाविषयत्वरूपपरम्परासम्बन्धेनेत्यर्थः । व्रजानीत्यस्य हि जानीहीति शेषः ।

सिद्धस्याभिमुखीभावमात्रं सम्बोधनं विदुः ।
प्राप्ताऽऽभिमुख्यो ह्यर्थात्मा क्रियासु विनियुज्यते ॥

इति कारिकान्तरे विनियुज्यत इति वदता प्रवर्त्तनाविषयक्रियायामेव तदन्वय-बोधनात् । प्रवर्त्तनोद्देश्यस्यैव तद्विषयक्रियोद्देश्यत्वादुद्देश्यविधेयभावस्य तयोः संस-र्गमर्य्यादया लाभादेकवाक्यतया निघात इति तदर्थः । शाब्दबोधस्त्वत्र सम्बोधनवि-षयदेवदत्तोद्देश्यकप्रवर्त्तनाविषयो मत्कर्तृकव्रजनकर्मकं ज्ञानमिति । *सूत्रभाष्या-

परीक्षा

वाक्ये*—निमित्तनिमित्तिनोरेकवाक्यघटकत्वे । *तद्विधानात्*—निघातविधानात् । वाक्यं च-"सविशेषणाख्यातं सविशेषणं वाक्यम्" इति समर्थसूत्रस्थभाष्यात् साक्षात् परम्परया वा किञ्चिन्निष्ठप्रकारतानिरूपितक्रियानिष्ठविशेष्यताशाली समुदायो वाक्य-मिति तदर्थः । एवं च सम्बोधनान्तार्थस्य क्रियायामन्वय एवोक्तसमानवाक्यत्वस्योप-पत्तिरिति भावः । 'त्वं ब्रूहि' इत्यस्माद्बोधस्तु—अभिमुखीभवनानुकूलव्यापारविषय-कदेवदत्तोद्देश्यकप्रवर्त्तनाविषयत्वभिन्नकर्तृकं भाषणमिति द्रष्टव्यः । उक्तार्थे हरिसम्म-तिमाह—*उक्तं हीत्यादिना* । *विशेषणमिति* । स्वार्थोद्देश्यकप्रवर्त्तनाविषयत्वस-म्बन्धेनेत्यादिः । *व्रजानीति* । जानीहीति शेषः(१)। प्रवर्त्तनाया य उद्देश्यः; स एव प्रवर्त्तनाविषयक्रियोद्देश्य इत्युच्यते । एवं चोद्देश्यता सिद्धस्यैवेति सम्बोध्यताव-च्छेदकधर्मावच्छिन्नस्य सिद्धत्व एव सम्बोधनविभक्तिरिति सिद्धम् । 'व्रजानि देवदत्त जानीहि' इत्यस्मात्सम्बोधनविषयदेवदत्तविशिष्टं प्रवर्त्तनाविषयो मत्कर्तृकं-सञ्ज्ञान-मिति बोधः ।

उक्तं वाक्यलक्षणं पचतिभवतीत्यादिसाधारणमित्याह—*पचतीति* । *सूत्रभा-

---

(१) तेन ज्ञानक्रियायां देवदत्तस्योद्देश्यतया व्रजनस्य कर्मतयाऽन्वयेन समानवा-क्यत्वं ज्ञेयम् ।

सत्वात् स्यादेव निघातः । "तिङ्ङतिङः" (पा० सू० ८।१।२८) इति सूत्रयता तिङन्तानामप्येकवाक्यतास्वीकारात् । एकतिङ् वाक्यं

दर्पणः

दिरीत्येति* ॥ भूवादिसमर्थसूत्रस्थभाष्योक्तरीत्येत्यर्थः ॥

*स्यादेवेति* ॥ आमन्त्रितदेवदत्तपदस्येत्यर्थः । अत्र जानीहीति पदाध्याहारेणोक्तरीत्या देवदत्तपदस्यैकवाक्यस्थत्वाऽक्षतेरिति भावः । तत्र सूत्रकारसम्मतिमाह—*तिङ्ङतिङ इतीति* ॥ तिङन्तानामिति बहुवचनेन प्रकृते जानातिपदाऽध्याहारः सूच्यते । अन्यथा तत्र निघाताऽप्राप्त्या तत्पर्य्युदासबोधकतिङ्ग्रहणस्य वैयर्थ्यापत्तेरिति भावः ।

सम्मतिरियं सूत्रकृत एकवाक्यतांशे निघातांशे च । भाष्यसम्मतिस्तु न, तेनातिङ्ग्रहणस्य प्रत्याख्यानात् ।

नन्वेवं कथमतिङ्ग्रहणप्रत्याख्यानसङ्गतिः । पचतिभवतीत्यत्र निघातवारकतया तस्यावश्यकत्वादिति चेद् ? न । तत्र कारकान्वितक्रियाबोधकत्वरूपैकवाक्यत्वस्य सुप्चयसुप्तिङन्तचयसाधारणस्य सत्त्वेऽपि वार्त्तिककारपरिभाषितश्रूयमाणैकतिङ्त्वरूपैकवाक्यत्वस्य तत्रासत्त्वादित्याशयात् । तथाचोक्तस्थले तादृशैकवाक्यत्वाऽभावान्निघाताऽप्रसक्तिरेवैतत्सूचनायैव स्यादेव निघात इति सम्भावनाद्योतकलिङ उपादा-

परीक्षा

ष्येति* । भूवादिसूत्रसमर्थसूत्रभाष्यरीत्येत्यर्थः । इदमुपलक्षणम् ।

"सुप्तिङन्तचयो वाक्यं क्रिया वा कारकान्विता" इति कोशरीत्यापि बोध्यम् । *निघात इति* । आमन्त्रितनिघात इत्यर्थः । किञ्च पाणिनीयसूत्रमपि मानमित्याह—*तिङङतिङ इति* । *स्वीकारादिति* । तिङन्तात्परस्य तिङन्तस्य निघातवारणायातिङ् इति पर्य्युदासः कृतः । स च तिङन्तद्वयघटितस्यैकवाक्यत्व एव सार्थको भवतीति भावः । तत्रातिङ्ग्रहणप्रत्याख्यातृवार्तिकरीत्या न भवति निघात इत्याह—*एकतिङिति* । एकम्–अद्वितीयम् तिङ्–तिङन्तम्, यत्र तद्वाक्यमित्यर्थः । इदं यथाश्रुतरीत्या प्रत्याख्यानं यदि सूत्रानुरोधेनैकतिङन्तार्थविशेष्यकबोधजनकत्वमित्यर्थः क्रियते; तदाऽतिङ्ग्रहणमावश्यकमेव । अत एव हेलाराजेन बहुष्वपि तिङन्तेषु साकाङ्क्षेष्वेकवाक्यता 'तिङन्तेभ्यो निघातप्रतिषेध' इत्यभिहितम् ।

एवं च 'सुप् तिङन्तचयोवाक्यं क्रिया वा कारिकान्विता' इति यल्लौकिकवाक्यत्वं तदेव निघातनियामकमिति सिद्धम् । अत्र वाशब्दश्चेदर्थे सुप् च तिङ् च सुप्तिङावन्तौ यस्य तत्सुप्तिङन्तम् , सुब्विशिष्टं तिङन्तं सुप्तिङन्तम् । सुप्तिङन्तं च सुप्तिङन्तञ्च सुप्तिङन्ते तयोः समुच्चय इत्यर्थः । इदमेकवाक्यत्वम् । जैमिनिसम्मतमपि, "अथैक्यादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्" इति तत्सूत्रात् । अथक्यादित्यस्य विशेष्यभूतभावनैक्यादित्यर्थः । एतावानेव विशेषस्तस्य मते—भावना प्रत्ययवाच्या, अस्मन्मते तु धातुवाच्येति ।

यत्तु–अर्थैक्यादित्यस्य तात्पर्य्यविषयस्यार्थस्यैकत्वादित्यर्थ इतिः तन्न । "स्योनन्ते सदनं कृणोमि घृतस्य धारया सुषेवं कल्पयामि" इत्यस्य सदनप्रतिपादकवाक्यसमुदायस्य तस्मिन् सीदामृते प्रतितिष्ठेति सदनप्रकाशकस्य च यागाङ्गनिरूपणत्वेन तात्प-

इति वदतां वार्त्तिककाराणां मते परं न। वस्तुत एकतिङ्वि- शेष्यकं वाक्यमिति तदभिप्रायस्य हेलाराजीयादौ वैयाकरणभूषणेऽस्माभिश्च प्रतिपादितत्वात्तन्मतेऽपि भवत्येवेत्यवधेयम्॥ *कृत्वोऽर्थाः*॥ "क्रियाभ्यावृत्तिगणने कृत्वसुच्" (पा० सू० ५।४।१७) इति क्रियायोगे तत्साधुत्वोक्तेः। क्रियाया अभ्यावृत्तिः-पुनःपुनर्जन्म, तस्मिन् द्योत्ये इति तदर्थात्।

*कारकम्*॥ "कारके" इत्यधिकृत्य तेषां व्युत्पादनात्। कारकशब्दो हि क्रियापरः करोति कर्तृकर्म्मादिव्यपदेशानिति व्युत्पत्तेः। तथाचाग्रिमेष्वपादानादिसंज्ञाविधिषु क्रियाऽर्थककारकशब्दानुवृत्त्या क्रियान्वयिनामेव संज्ञेति भाष्ये स्पष्टम्।

---

दर्पणः

नम्। तदेतदाविष्करोति-*वार्त्तिककाराणामिति*॥ यथाश्रुतसूत्रमनुरुद्ध्याह-*वस्तुतस्त्विति*॥ *हेलाराजीयेति*॥

बहुष्वपि तिङन्तेषु साकाङ्क्षेष्वेकवाक्यता।
तिङन्तेभ्यो निघातस्य प्रतिषेधस्तथाऽर्थवान्॥

इति वाक्यपदीयव्याख्याऽवसर इति शेषः॥ *तन्मतेऽपि भवत्येवेति*॥ इदञ्च निरुक्तलौकिकवाक्यत्वस्यैव निघातप्रयोजकत्वमित्याशयमूलकमित्यवधेयम्॥ *पुनःपुनर्जन्मेति*॥ अत एव सकृत्प्रवृत्तौ, द्विः पचतीति न। 'पञ्च कृत्वो भुङ्क्ते' इत्यादौ पञ्चादिशब्दाः संख्योत्पत्तिपराः। तस्या एव कृत्वसुजादिर्द्योतकः। सूत्रस्वारस्याच्च तद्द्योत्यार्थस्य क्रियायामन्वय इति भावः। क्रियान्वयिनामेव संज्ञेत्यपादानादिमध्यम्। क्वचित्तथैव पाठः॥

*स्पष्टमिति*॥ अन्ये तु—उत्तरभाष्ये करोति क्रियां निर्वर्त्तयतीति व्युत्पत्तिप्रदर्शनात्कारकत्वम्। अत एव ब्राह्मणस्य पुत्रं पन्थानं पृच्छतीत्यादौ ब्राह्मणस्य न कारकत्वम्। पुत्रेणाऽन्यथासिद्धत्वात्। अत एव तेषां क्रियायामन्वयः। क्रियाजनकमिति ज्ञाते का सा क्रियेत्याकाङ्क्षोदयेन क्रियाया अपि जनकाकाङ्क्षया च तत्रैवान्वय-

परीक्षा

र्थविषयैक्यादेकवाक्यत्वापत्तेः। यत्र तु वाक्ययोर्वाक्यानां वा आकाङ्क्षा; तत्र वाक्यैकवाक्यतेति व्यवहारः। यथा 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' 'समिधो यजति'इत्यनयोः। एतच्च वाक्यं द्विधा—वैदिकं, लौकिकं च। वैदिकम्—'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिकम्। लौकिकन्तु—काव्याकाव्यात्मकत्वेन द्विविधमिति बोध्यम्। *पुनःपुनर्ज्जन्मेति*। अत एव सकृत्पाकाय यत्र प्रवृत्तिस्तत्र द्विः पचतीत्यादिन भवति। एवं च यत्र पञ्चकृत्वो भुङ्क्ते—इत्यादिप्रयोगस्तत्र पञ्चादिशब्दाः क्रियोत्पत्तिपरा इत्यर्थे कृत्वसुजादिस्तात्पर्य्यग्राहक इति तेषां द्योतकत्वव्यवहारः।

*व्युत्पत्तेरिति*। एवं च कारकशब्दः क्रियायां योगरूढः। *अनुवृत्त्येति*। अन्वेतीत्यस्याध्याहारः। "वस्तुतस्तु करोति क्रियां जनयतीति भाष्यकारीयव्यु-

*प्रथमो वतिः* ॥ "तेन तुल्यं क्रिया चेद्वतिः" (पा०सू० ५।१।१५) इति विहितः । तत्र यत्तुल्यं सा क्रिया चेदित्युक्तत्वात् ॥ धातुसम्बन्धाधिकारे—"धातुसम्बन्धे प्रत्ययाः" (पा० सू० ३।४।१) इत्यधिकृत्य तेषां विधानात् ।

*असमस्तनञ्* ॥ समासायोग्यः प्रसज्ज्यप्रतिषेधीयो नञि-

---

दर्पणः

स्यौचित्यात् । अत एव "गतिकारकोपपदात्कृत्" (पा०सू० ६।२।१३९) इत्यादौ कारकशब्दस्यापादानादिपरता सङ्गच्छते । "कारके" इति तु प्रथमार्थे सप्तमीत्याहुः ॥

*इत्युक्तत्वादिति* ॥ तथाच ब्राह्मणवदिति वृत्तौ ब्राह्मणशब्दस्य ब्राह्मणकर्तृकाध्ययनपरतया तत्तौल्यवत्यर्थसमभिव्याहृताध्ययनक्रियायां ब्राह्मणकर्तृकाध्ययनतुल्यमेककर्तृकमध्ययनमिति ब्राह्मणवदधीत इत्यतो बोधः । "तत्र तस्येव" इति विहितवतेर्द्रव्यगुणान्वयित्वान्मूले प्रथम इत्युक्तम् ॥ *विधानादिति* ॥ तत्र धातुशब्दस्य धात्वर्थपरताया 'वसन् ददर्श' इत्यत्राऽतीतवासकर्तृकर्तृकं दर्शनमित्यादिरीत्या बोधादिति भावः ॥

*प्रसज्ज्येति* । प्रतिषेधशब्दः कर्मघञन्तो बाहुलकात् । प्रसज्ज्याऽऽपाद्य प्रतिषेधः—प्रतिषेधविषयः प्रतियोगी यस्य तादृशाऽभावोऽर्थो यस्येति व्युत्पत्त्याऽभावार्थक

परीक्षा

त्पत्तिप्रदर्शनपरग्रन्थात्कारकत्वं क्रियाजनकत्वमेव । अत एव कारकाणां क्रियान्वयित्वमिति वाक्यस्य नाववोधकता । अत एव च "अकथितं च" इति सूत्रे कारकपदस्य 'ब्राह्मणस्य पुत्रं पन्थानं पृच्छति' इत्यत्र ब्राह्मणशब्दस्य कर्मसञ्ज्ञाऽभावः प्रयोजनं ब्राह्मणस्यान्यथासिद्ध्या क्रियाजनकत्वाभावादित्युक्तिसङ्गतिः । यदि 'क्रियान्वयित्वं कारकत्वम्' इतिः तदाऽन्यथासिद्धिप्रदर्शनविरोधः स्पष्ट एव । ननु यदि 'क्रियाजनकत्वमेव कारकत्वम्' चेत् कारकस्य क्रियायामेवान्वय इति नियमः कथमिति चेदित्थम्—क्रियाजनकमिति ज्ञाने का सा क्रिया; यस्या इदं जनकं क्रियायां ज्ञातायामस्याः किं जनकमिति रीत्या परस्या काङ्क्षादर्शनेन क्रियायां तदन्वयस्यौचित्यमिति । *इत्युक्तत्वादिति* । एवं च 'पितृवदधीते पुत्र' इत्यादौ पित्रादिशब्दानां पितृकर्तृकाध्ययनलाक्षणिकानां प्रकृतित्वेन तदर्थपितृकर्तृकाध्ययनस्य वेत्यर्थसादृश्येऽन्वयस्तत्त्वधीत इत्यत्र य-इङ् धातुस्तदर्थं इति पितृकर्तृकाध्ययनतुल्यं पुत्रकर्तृकमध्ययनमिति बोधः । प्रथम इत्युपलक्षणं "तदर्हम्" इति सूत्रविहितवत्यर्थसादृश्यस्यापि क्रियायामेवान्वयात् । *विधानादिति* । तत्रत्यधातुपदस्य धात्वर्थपरतया धात्वर्थयोः सम्बन्धे—एककालिकत्वादिरूपे—विवक्षिते प्रत्ययानां विधानादित्यर्थः । एवं च प्राधान्येन या क्रिया प्रतीयते तस्या यत्—कालिकत्वं तस्मिन् काले गुणीभूतक्रियावाचिभ्यः प्रत्ययविधानाद् 'वसन् ददर्श' इत्यत्र दर्शनरूपक्रियायाः प्राधान्यात्तदनुरोधेनाप्रधानवासक्रियावाचकाद्वस्धातोर्भूते लट् प्रत्ययः । अतीतवासकर्तृकर्तृकं भूतानद्यतनपरोक्षमेककर्तृकमतीतं दर्शनमिति बोधः । *प्रसज्यप्रतिषेधीय इति* । प्रतिषेधशब्दे कर्म्मणि घञ् । प्रसज्य—आपाद्य प्रतिषेधः—प्रतिषेधविषयो यस्य वाचकः स इति व्युत्पत्या अत्यन्ताभावार्थक इति फलितम् । प्रतियोग्यारोपस्याभावज्ञाने कारण-

त्यर्थः। उत्तरपदाऽर्थान्वयेऽपि समासविकल्पेन पक्षेऽसमस्तत्वाद् यथाश्रुतग्रहणाऽयोगात्।

नचासमस्तनञः क्रियान्वये मानाभावः। न त्वं पचसि, न युवां पचथः, चैत्रो न पचति, घटो न जायते, इत्यादौ क्रियाया एव निषेधप्रतीतेः।

अत एव विद्यमानेऽपि घटे तादृशप्रयोगः। तथाच-घटो नास्ती-

---

दर्पणः

इत्यर्थः॥ *यथाश्रुतेति*॥ न ब्राह्मणमानयेत्यादौ नञर्थारोपस्य ब्राह्मणादावन्वयेन व्यभिचारापत्तेरिति भावः। *निषेधप्रतीतेरिति*॥ अत्यन्ताऽभावप्रतीतेरित्यर्थः। तथाच तादृशप्रतीतिरेवोक्तनञर्थस्य क्रियान्वयित्वे मानमिति भावः।

तस्य प्रतियोगितया युष्मदाद्यर्थाऽन्वयित्वे तु युष्मदादौ लकारवाच्यकर्तृवाचकत्वरूपसामानाधिकरण्याभावान्मध्यमपुरुषाद्यनुपपत्तिर्युष्मदर्थप्रतियोगिकाभावस्यैकत्वेन द्विवचनाद्यनुपपत्तिश्चेति सूचयितुं, न त्वं पचसि, न युवां पचथ इत्युक्तम्। एवं चैत्रप्रतियोगिकाभावकर्तृत्वोपगमे पाके तत्कर्तृकत्वबाधः, पाकानुकूलकृत्यभावार्थकत्वे त्वन्मते पुरुषव्यवस्थापकाभावेन कदाचिन्मध्यमोत्तमयोरापत्तिश्चेति बोधयितुं चैत्रो न पचतीत्युक्तम्। *अत एवेति*। नञः क्रियाप्रतियोगिकाभावबोधकत्वादेवेत्यर्थः॥

*तादृशप्रयोग इति*। घटो न जायते इत्याकारक इत्यर्थः। घटस्य विद्यमानतादशायां घटकर्तृकोत्पत्त्यनुकूलव्यापाराभावाऽबाधात् त्वन्मते तु घटाऽभावे उत्पत्त्यनुकूलव्यापारकर्तृत्वाऽभावादुक्तप्रयोगानुपपत्तिरिति भावः। उक्तरीत्या नञः क्रियाप्रतियोगिकाऽभावबोधकत्वध्रौव्ये, घटो नास्तीत्यत्र घटाऽभावकर्तृकत्वस्य धात्वर्थे अबाधेऽपि तद्बोधमनादृत्य घटास्तित्वाभावबोधाभ्युपगम उचितो वक्ष्यमाणकार्य्य-

परीक्षा

तायाः प्राचीननैयायिकसम्मतत्वात्। *असमस्तेति*। यथा श्रुतमसङ्गतं समासस्य वैकल्पिकत्वेन समासाभावेन ब्राह्मण इत्यत्र ब्राह्मणपदार्थे एवान्वयदर्शनेन व्यभिचारप्रसङ्गादित्याह--*उत्तरपदार्थेति*। उत्तरपदार्थत्वेनाभिप्रेतेत्यर्थः।

असमस्तनञः--क्रियायामेवान्वय इत्येतत्साधयति--*न चेत्यादिना*। *न त्वं पचसीत्यादि*। यदि नञर्थस्य विशेष्यतया युष्मदर्थेऽन्वयः स्यात्तदा सम्बोध्याभावस्य कर्तृत्वापत्तौ युष्मत्सामानाधिकरण्याभावेन पुरुषव्यवस्था न स्यात्, तथाऽभावस्यैकत्वेनैकवचनमेव स्यात्, न तु द्विवचनादिरपीति भावः। *अत एव*--प्रसज्यप्रतिषेधीयनञ क्रियान्वयनियमादेव। *तथा प्रयोग*--घटो न जायते इति प्रयोगः। यदि नञः क्रियायामन्वयस्तदा घटकर्तृकोत्पत्त्यनुकूलव्यापारस्य सत्वेन तादृशप्रयोगस्योपपत्तिर्भवति। यदि तु नञर्थे घटस्य प्रतियोगितयाऽन्वयः, तदा घटाभावकर्तृकोत्पत्त्यनुकूलव्यापारस्य प्रतीतिर्वाच्या, तथाच बाध इति भावः। नचैवमपि लडर्थवर्तमानत्वस्य धात्वर्थ एवान्वयो वाच्यः। तथाच घटकर्तृकवर्तमानोत्पत्त्यनुकूलव्यापाराभावबोधो वाच्यः। स च न सम्भवति; वर्तमानस्य तादृशप्रतियोगिनोऽप्रसिद्धेरिति वाच्यम्? बौद्धस्य प्रतियोगिनः प्रसिद्धेः। एवमेव वायौ रूपं नास्तीत्यादौ बौद्धस्य वाय्वधिकरणरूपकर्तृकसत्ताश्रयत्वस्य प्रतियोगिनः प्रसिद्धिर्द्रष्टव्या। *तथाच*--प्रस-

त्यत्राप्यस्तित्वाभाव एव बोध्यते । न हि–घटो न जायते, नास्तीत्य-
नयोर्धात्वर्थभेदमन्तरेणास्ति विशेषः । तथाच–'भूतले न घट' इत्यत्रा-
प्यस्तीत्यध्याहार्य्यम् । प्रकारतासम्बन्धेन नञर्थविशेष्यकबोधे, धातु-

---

दर्पणः

कारणभावबलादित्याह–*तथाच घट इति* । तदेवोपपादयति–* न हीत्यादिना ।

ननु यत्र न क्रियावाचकसमभिव्याहारो भूतले न घट इत्यादौ, तत्र नञा कथं क्रियाप्रतियोगिकाऽभावो बोधनीयोऽत आह––*तथाचेति* । *अध्याहार्य्यमिति* । 'अस्तिर्भवन्तीपर' इत्यादिभाष्ये क्रियान्तराभावेऽप्यस्तिक्रियामादाय वाक्यपरिपूर्त्तिबोधनादिति भावः । *प्रकारतासम्बन्धेनेति* । नञर्थाऽभावनिष्ठविशेष्यतानिरूपितप्रकारतासम्बन्धेन शाब्दबुद्धित्वाऽवच्छिन्नं प्रति विशेष्यतासम्बन्धेन धातुजन्योपस्थितेर्हेतुत्वस्य 'न त्वं पचसि' इत्याद्यनुरोधेन क्लृप्तत्वादत्राऽपि तद्बोधोपपत्तयेऽस्त्यध्याहार आवश्यक इति भावः ।

ननु 'त्वं पचसि'इत्यादाविवाऽत्राऽपि नञः पर्य्युदासद्योतकत्वाऽभ्युपगमाद् युष्मल्लक्ष्यार्थ–त्वद्भिन्ने सामानाधिकरण्याऽबाधान्न पुरुषव्यवस्थाऽनुपपत्तिः । संख्यायास्तत्राबाधान्न द्विवचनाऽनुपपत्तिरपीति । तादृशकार्य्यकारणभावस्यैवाऽप्रामाणिकतया कथं तदनुरोधोऽस्त्यध्याहारनियामकः । घटो न जायते इत्यादौ प्रसज्ज्यप्रतिषेधाऽर्थकनञ्स्थले तु यथा नाऽनुपपत्तिस्तथा वक्ष्यते । तथाच भूतले घटो नेत्यादौ भूतलवृत्ति-

परीक्षा

ज्यप्रतिषेधार्थकनञः क्रियान्वयनियमे च । *अध्याहार्य्यमिति* । यत्र क्रियावाचिपदं न श्रूयते; तत्र नञर्थान्वययोगिक्रियावाचकं पदमध्याहार्य्यमित्यर्थः । तत्राध्याहृतपदप्रतिपाद्यक्रियाया अनुयोगितासम्बन्धेन नञर्थाभावेऽन्वयः ।

यत्तु 'भूतले न घट' इति वाक्यस्य भूतलाधेयत्वाभाववान् घट इत्यर्थ इति, तन्न । कारकाणां क्रिययैवान्वयेन क्रियातिरिक्तेऽन्वयाभावात् । अत एव "सुडनपुंसकस्य" इति सूत्रे नपुंसकस्य न इत्यर्थे न हि नपुंसकेन सामर्थ्यम्; केन तर्हि भवति, नेति भाष्यं सङ्गच्छते । नञर्थात्यन्ताभावस्य क्रियान्वयनियमस्य सिद्धौ यादृशः कार्य्यकारणभावः सिद्धस्तमाह––*प्रकारतासम्बन्धेनेति* । अत्र प्रकारता कार्य्यतावच्छेदकसम्बन्धो, विशेष्यता च कारणतावच्छेदकसम्बन्धः । प्रकारता चेह नञर्थाभावनिष्ठविशेष्यतानिरूपिता ग्राह्या । ननु 'भूतले न घटः' इत्यत्रास्तीत्यस्याध्याहाराभावेऽपि न क्षतिः । भूतलवृत्तित्वाभाववान् घट इति बोधाङ्गीकारात् । नचैवं सति, अहं नास्मि; घटो नास्तीत्यादौ पुरुषव्यवस्थाया घटा न सन्ति; घटौ न स्तः, इत्यादौ वचनव्यवस्थायाश्च कथमुपपत्तिरिति वाच्यम् ? एतादृशे स्थले नञः पर्य्युदासद्योतकत्वस्याङ्गीकारादस्मच्छब्दस्यास्माद्भिन्ने लक्षणायाः स्वीकारेणास्मदर्थे नञन्तस्य सामानाधिकरण्यस्य त्वं पचसीत्यत्र युष्मत्सामानाधिकरण्यस्य च सत्वात्पुरुषव्यवस्थाया उपपत्तेः । एवं घटो न स्तो, घटा न सन्तीत्यादौ वचनानुपपत्तिरपि न । द्वित्वबहुत्वावच्छिन्ने–आख्यातार्थाश्रयत्वाभावाङ्गीकारात् । एवं घटो न जायते, इत्यस्मादाख्यातलक्ष्यार्थाश्रयत्वाभावबोध एवास्तु । एवं वायौ रूपं नास्तीत्यादौ रूपविशेष्यकवा-

जन्यभावनोपस्थितेर्हेतुत्वस्य क्लृप्तत्वात् । शेषं नञर्थनिर्णये वक्ष्यते१६

**तथा यस्य च भावेन षष्ठी चेत्युदितं द्वयम् ॥**

**साधुत्वमष्टकस्यास्य क्रिययैवावधार्य्यताम् ॥१७॥**

"यस्य च भावेन भावलक्षणम्" (पा० सू० २।३।३७) इत्यत्र भावनार्थकभावशब्देन तद्योगे साधुत्वाख्यानलाभात् "षष्ठी चानादरे" (पा० सू० २।३।३८) इति तदग्रिमसूत्रेऽपि चकाराद्यस्य च भावेनेत्यायातीत्यर्थः ॥ *साधुत्वमिति* ॥ तत्स्वरूपं तु वक्ष्यते ॥

---

दर्पणः

घटाऽभाव इति बोधे बाधकाभावोऽत आह—*शेषमिति* । तथाच यदा युष्मदर्थभिन्नकर्तृको न पाकस्तदा 'न त्वं पचसि' इति प्रयोगाऽनापत्तिः पर्युदासद्योतकतावादिमते, अतस्तत्र प्रसज्ज्यप्रतिषेधार्थकत्वमेवाऽङ्गीकरणीयमित्युक्तयुक्त्या कार्य्यकारणभावस्यावश्यकतेत्यादिशेषपदार्थः । नैयायिकमतमपि तत्रैव व्यक्तीभविष्यति ॥ १६ ॥

*साधुत्वाऽऽख्यानलाभादिति* । अयम्भावः—"यस्य च भावेन भावलक्षणम्" । (पा०सू० २।३।३७) इति सूत्रेण क्रियाज्ञापकक्रियाश्रयवाचकपदात् सप्तमी विधीयते । भावलक्षणमित्युपादानाऽज्ज्ञापकत्वरूपसप्तम्यर्थस्य क्रियायामेवाऽन्वयः । अत एव 'गोषु दुह्यमानासु गत' इत्यादौ दोहनक्रियाऽऽधारकालेन गमनपरिच्छेदकत्वं बुध्यते इति *आयातीति* । समस्तसूत्रमेव तत्रानुवर्त्तत इत्यर्थः । तथाचाऽनादरे गम्यमाने यन्निष्ठक्रियायाः क्रियान्तरज्ञापकत्वं तद्वाचकतेति तदर्थात् तद्विहितयोरपि तयोः क्रियायोग एव साधुत्वं लभ्यत इत्यर्थः ; ननूक्तानां क्रियान्वयाभावेऽपि शक्तत्वरूपसाधुत्वं सुलभमत आह—*तत्स्वरूपमिति* । साधुत्वस्वरूपमित्यर्थः । *वक्ष्यत इति* ।

परीक्षा

युवृत्तित्वाभावबोध एवास्तु । तथा सति प्रतियोग्यप्रसिद्धिरपि न भविष्यतीत्युक्तकार्य्यकारणभावो न स्वीकार्य्य इति नैयायिकमतानुसारिणः ।

शङ्काया निरासायाह—*शेषमिति* । यदा कोऽपि पुरुषः पाकं न करोति तस्मिन्कालेऽपि न त्वं पचसीति प्रयोग इष्यते, तदनुपपत्तिः । युष्मद्भिन्नकर्तृकपाकाभावात् । न च देशान्तरे युष्मद्भिन्नः कर्त्ताऽस्त्येवेति वाच्यम् ? इदानीमिह 'न त्वं पचसि' 'नाहमिह पचामि' इत्यत्र चानुपपत्तेस्तादवस्थ्यात् । एवं सामान्यादिषु समवायेन सत्ता नास्तीत्यादौ न प्रतियोगिप्रसिद्धिः । तन्मते समवायसम्बन्धावच्छिन्नसामान्यादिवृत्तित्वस्याप्रसिद्धेः । सामान्यादिवृत्तित्वस्य समवायसम्बन्धावच्छिन्नप्रतियोगिताकाभावबोधस्तु वक्तुमशक्यः, तादृशाभावस्य व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकतया तादृशाभावतात्पर्येण पृथिव्यादिषु सत्ता नास्तीति प्रयोगापत्तेरिति ॥१६॥

*उदितं द्वयमिति*—विहितं द्वयम् , षष्ठीसप्तमीद्वयम् । "यस्य च भावेन भावलक्षणम्" इति सूत्रेण 'गोषु दुह्यमानासु गत' इत्यत्र लक्षकक्रियाश्रयवाचकात्सप्तम्याः "षष्ठी चानादरे" इत्युत्तरसूत्रेण लक्षकक्रियाश्रयवाचकात् षष्ठीसप्तम्योर्विधानात् क्रियायोग एव तयोः साधुत्वमिति भावः ।

*वक्ष्यत इति* । साधुत्वनिरूपणावसरे इति शेषः । ननु क्रियाशब्दस्य धात्वर्थ-

*क्रिययैवेति* ॥ अयं भावः–भूवादिसूत्रादिषु प्रायशः क्रियाशब्देन भावनाव्यपदेशात् । तत्र तस्य साङ्केतिकी शक्तिः । फलांशे काचित्कः, क्रियत इति यौगिकः प्रयोगः । तथाच सञ्ज्ञाशब्दस्यानेपक्षप्रवृत्तत्वेन बलवत्त्वाद्भावनान्वय एव साधुता लभ्यते । अत एव संज्ञाशब्दप्राबल्याद्, रथन्तरमुत्तराग्रन्थपठितऋक्ष्वेव गेयं, न तु वेदे तदुत्तरपठ्यमानऋक्ष्विति नवमे निर्णीतम् ।

---

दर्पणः

साधुत्वनिर्वचनाऽवसरे इति शेषः ।

साधुत्वं न शक्तत्वमपशब्दादपि अर्थोदयात्, किन्तु व्याकरणैकव्यञ्जिका पुण्यजनकतावच्छेदकजातिरिति वक्ष्यत इत्यर्थः । प्रकृते च व्याकरणेन क्रियान्वितेष्वेव तद् व्यज्यत इति तदन्यस्याऽसाधुतैवेतिभावः ।

ननु 'क्रिययैवाऽवधार्य्यताम्' इति मूलेन क्रियाऽन्वय एवोक्तानां साधुत्वं लभ्यते इति सत्यमेवः तथापि भाष्ये क्रियापदस्य फलेऽपि प्रयोगात्साक्षात्परम्परया वा क्रियाफलान्वयेनाऽपि तेषां साधुत्वोपपत्तौ नोक्तरीतिर्धातोर्व्यापारवाचकत्वसाधिकेत्याशङ्कयाऽऽशयं प्रकाशयति–*अयम्भाव इति* । *प्रायशः क्रियाशब्देनेति* । तथाच प्रयोगबाहुल्यं रूढिसद्भावे प्रयोजकमिति भावः ॥

*साङ्केतिकोति* । सङ्केताभिव्यङ्ग्या रूढिरित्यर्थः । तत्र हेतुः–*काचित्क इति* । तत्र नियामकमाह–*यौगिक इति* । क्रियते व्यापारेण निष्पाद्यत इति व्युत्पत्तेरिति भावः । *अनपेक्ष्येति* । प्रकृतिप्रत्ययशक्तिमनुसन्धायेत्यर्थः । *अत एवेति* । सञ्ज्ञाशब्दस्याऽनपेक्ष्य प्रवृत्तिकत्वेन बलवत्त्वादेवेत्यर्थः ॥

*नवमे इति* । मीमांसानवमाऽध्याये इत्यर्थः । तथाहि—रथन्तरं हि "यद्योन्यां

परीक्षा

परतया फलयोगे भवदुक्ताष्टकानां साधुत्वमस्तुः न तु भावनान्वयनियमस्य लाभ इति तदनुरोधेन भावनाया वाच्यत्वं न सिद्ध्यतीत्याशङ्कानुत्थानायाह–*अयम्भाव इति* । *तस्य*–क्रियाशब्दस्य, सङ्केतादागता शास्त्रकारीयव्यवहारादागता शक्तिः । एवं च क्रियाशब्दस्तत्र योगरूढः । एतेन भावनायां क्रियाशब्दस्य योगरूढत्वे प्रयोगप्राचुर्य्यं नियामकमित्युक्तम् । *यौगिक इति* । एवं च रूढेर्योगापेक्षया बलवत्त्वात्तस्य झटिति भावनाबोधकत्वमेव पङ्कजशब्दवत् । *अनपेक्ष्येति* । प्रकृतिप्रत्ययविशेषशक्तिमननुसन्धायेत्यर्थः । *अत एव*—सञ्ज्ञाशब्दस्यानपेक्ष्य प्रवृत्तिकत्वेन बलवत्वादेव । *रथन्तरम्*—सामविशेषः । *उत्तराग्रन्थेति* । उत्तरासञ्ज्ञकग्रन्थविशेषपठितऋक्ष्वित्यर्थः । *तदुत्तारपठ्यमानेति* । रथन्तरयोनेः परतः पठ्यमानऋक्ष्वित्यर्थः । *नवमे*–नवमाध्याये मीमांसायाम् । तत्र हि–'रथन्तरं हि यद्योन्यान्तदुत्तरयोगायति' इति श्रूयते, तत्र रथन्तरयोनेः परतो बृहद्योनेः पठितत्वाद्रथन्तरं तस्यां गेयमुत उजराग्रन्थे न त्वा वा मन्यते–इत्यादिपठिते गेयमिति संशयेऽविशेषादुभयत्र गेयमिति पूर्वपक्षे, उत्तराग्रन्थे—उत्तराशब्दस्य प्रवृत्तिः शब्दस्वरूपमात्रापेक्षाः न तु तत्रोत्तरकालपठितक्रियापेक्षा रथन्तरयोनेः परतः पठ्यमान-ऋक्षु तु तादृशक्रियापेक्षा । एवं पूर्वग्रन्था-

किञ्च फलांशोऽपि भावनायां विशेषणं कारकाण्यपि क्वचित्तथा-भूतानीति। "गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात् स्यात्" (जै० सू० ३।१। २२) इति न्यायेन सर्वे सेवका राजानमिव भावनायामेव परस्परनिरपेक्षाण्यन्वियन्ति। 'न हि भिक्षुको भिक्षुकान्तरं याचितुमर्हति सत्यन्यस्मिन्नभिक्षुके' इति न्यायेनापि फलं त्यक्त्वा भावनाया-मेवाऽन्वियन्तीति मीमांसका अपि मन्वते। एवञ्च विशेष्यतया कारकादिप्रकारकबोधं प्रति धातुजन्यभावनोपस्थितेर्हेतुरिति कार्य्य-

---

दर्पणः

तदुत्तरयोर्गायति" इति श्रूयते। तत्र रथन्तरयोनेः परतो बृहद्योनेः पठितत्त्वाद्रथन्तरं तस्यां गेयम्?

उतोत्तराग्रन्थे, "न त्वा वा मन्यते" इत्यस्य पठितत्वात् तत्र गेयमिति संशयेऽवि-शेषादुभयत्र गेयमिति पूर्वपक्षे उत्तराग्रन्थे उत्तराशब्दस्य सञ्ज्ञारूपेण प्रसिद्धिर्बृह-द्योनौ तु तस्याः पूर्वग्रन्थाऽपेक्षिकोत्तरत्वबलाद्यौगिकी, इति संज्ञाशब्दस्याऽनपेक्ष्य-प्रवृत्तिकत्वेन बलवत्त्वादुत्तराशब्दसङ्केतित-"नत्वा वा मन्यत" इत्यादृक्ष्वेव तद्गेय-मिति नवमे निर्णीतम्। तद्वत्त्रापीति भावः। ननु भावनायां क्रियापदस्य साङ्केति-की शक्तिः; फले तु यौगिकः प्रयोग इत्यत्रैव न दृढतरं मानम्, येनोक्ताधिकरणाव-तारः सम्भाव्येत। प्रायेण तस्य तु यौगिकत्वेनाऽप्युपपत्तेरत आह—*किञ्चेति*॥

*तथाभूतानीति*। विशेषणानीत्यर्थः। कर्त्राऽऽख्यातस्थले क्वचित् दृष्टत्वादि-तिभावः। *गुणानामिति*। विशेषणानां परार्थत्वादन्योपकारकत्वादत एव समत्वा-त्समानधर्मत्वात्तेषां परस्परं सम्बन्धो न भवेदिति न्यायार्थः। तथा च यथा फलस्यो-पकारकत्वाद् विशेष्यभावनायामन्वयस्तथा कारकाणामपि साक्षात्परम्परया वा तत्रै-वान्वयोऽन्यथा कारकत्वस्यैवाऽनुपपत्तेर्न तु फले निराकाङ्क्षत्वादिति भावः। तदनुसा-रिलौकिकन्यायमप्युपन्यस्यति—*न हि भिक्षुक* इत्यादि॥

*मीमांसका अपीति*। उक्तन्यायेन कारकप्रकारबोधं प्रत्याख्यातजन्यभावनो-पस्थितेर्हेतुतायास्तैः क्लृप्तत्वादिति भावः॥ कारकादीत्यादिना लडाद्यर्थकालपरि-

परीक्षा

पेक्षा चेति विलम्बितप्रवृत्तिकत्वेन न बृहद्योनौ पठितानां ऋचां ग्रहणम्, किन्तु उत्त-राशब्दस्य स्वरूपमात्रापेक्षा या सुप्रवृत्तिस्तासां नत्वा वा मन्यते-इत्यादि ऋचामेव बोधकोऽयमुत्तराशब्द इति तास्वेव गेयमितिनिर्णीतम्।

कारकाणां भावनायामेवान्वये युक्त्यन्तरमाह—*किञ्चेत्यादिना*। *तथाभू-तानि*—विशेषणभूतानि। *गुणानामिति*। विशेषणानां परार्थत्वात्परोपकारक-त्वात्समत्वात्परस्परमसम्बन्धः। फलस्यात्र विशेष्यभावनोपकारकत्वं चेतरभेदसाध-कत्वम्; कारकाणान्तु तन्निष्पादकत्वमिति तस्यामेवान्वयः, फलस्य कारकाणां च, न तु फले कारकाणामन्वयो निराकाङ्क्षत्वात्। अस्मिन्नर्थे लोकप्रसिद्धं दृष्टान्तमाह—*नहीति*। *मीमांसकेति*—कारकप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति आख्याता-

कारणभावस्य क्लृप्तत्वात् यत्रापि पक्ता पाचक इत्यादौ भावना गुणभूता; तत्रापि क्लृप्तकार्य्यकारणभावाऽनुरोधात् तस्यामेवान्वय इत्यवसीयते इत्यादिभूषणे प्रपञ्चितम्।

केचित्तु–भूतले घटः, देवदत्तो घटमित्यादावन्वयबोधाकाङ्क्षानिवृत्त्योरदर्शनान्न तद्व्यतिरेकेण साधुत्वलाभ इत्याहुः ॥ १७ ॥

स्वयमुपपत्तिमाह—

---

दर्पणः

ग्रहः ।। *गुणभूतेति*। तृजाद्यर्थकर्त्तरि विशेषणीभूतेत्यर्थः। एतेन पूर्वोक्तन्यायस्य तत्राऽसम्भवो दर्शितः। *तस्यामेवेति*। धात्वर्थभावनायामेवेत्यर्थः। *प्रपञ्चितमिति*। फलांशे तु न कारकाणामन्वयः, मीमांसकमतेऽपि तस्या अव्युत्पन्नत्वात्। अन्यथा कारकान्वितस्य कारकत्वाऽसम्भवेन यागरूपफलस्य करणतया क्रियायामनन्वयाऽऽपत्तेरिति तत्रोक्तम्।

*अदर्शनादिति*। 'सर्वं हि वाक्यं क्रियया परिसमाप्यते' इति न्यायेन तत्राऽस्तिजानात्यादिक्रियामन्तरेणाऽन्वयबोधनिराकाङ्क्षत्वयोरदर्शनादित्यर्थः। तत्र 'चैत्रः सुन्दरः' इति क्रियासाकाङ्क्षवाक्यस्याऽसाधुतापत्तिः। फलांशान्वयलाभेनैवोपपत्तौ भावनावाचकत्वालाभश्चेत्यस्वरस आहुरित्यनेन सूच्यते ।। १७ ।।

*उपपत्तिमिति*। उक्ताष्टकस्य भावनायामन्वये साधकोपमासरूपां तामुक्त्वानन्वये बाधकोपमासरूपां तामाहेत्यर्थः। ननु सम्बोधनान्तादीनां क्रियान्वय एव

परीक्षा

र्थभावनोपस्थितेः कारणतया अनेन न्यायेन तैः साधनादिति। कारकादित्यादिना कालस्य परिग्रहः। ननु यत्र न भावनायाः प्राधान्येन भानम्; तत्र का गतिरत आह—*यत्रापीति*। *गुणभूताः*—प्रत्ययार्थकर्त्तरि विशेषणीभूताः। *क्लृप्तेति*। विशेष्यतासम्बन्धेन कारकादिप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति भावनात्वसमानाधिकरणविषयतासम्बन्धेनोपस्थितिः कारणमिति कार्य्यकारणभावात्। *तस्यामेव*—भावनायामेव। *अन्वयः* । करणादिकारकाणामिति शेषः। *प्रपञ्चितमिति*। फलांशे न कारकाणामन्वयः, किन्तु भावनायामेव मीमांसकसम्मतत्वात्। अन्यथा कारकान्वितस्य तद्धात्वर्थकारकत्वाभावेन 'सोमेन यजेत' इत्यादौ सोमादिपदार्थयागरूपफलांशस्य करणतया भावनायामन्वयो न स्यादितिरीत्या प्रपञ्चितमित्यर्थः। *अदर्शनादिति*। क्रियावाचकपदाकाङ्क्षासत्वेन तद्वाचकपदाध्याहारं विनेति शेषः। *तद्व्यतिरेकेण*—क्रियावाचकपदव्यतिरेकेण। *साधुत्वेति*। अन्वयबोधजनकत्वं हि साधुत्वमिति तेषामाशयः। *आहुरिति*। अत्रारुचिबीजन्तु साधुत्वस्य व्याकरणव्यङ्ग्यजातिविशेषरूपतया क्रियावाचकपदसाकाङ्क्षत्वेऽपि 'नीलो घट' इत्यादावस्त्येव तत्। अत एव "गामित्युक्ते कर्मनिर्दिष्टम्, कर्त्ता क्रिया चानिर्दिष्टे" इत्यादि भाष्यं सङ्गच्छत इति ॥ १७ ॥

*स्वयमिति*। अस्य–ननु भूतलेन घटःइत्यत्र सप्तम्यर्थाभावः; महानसवदित्यत्र च पक्षानुयोगिकसादृश्यबोध इति दूषयन्नित्यादिः। क्वचित्पुस्तके तु–इत्थमेव पाठः।

**यदि पक्षेऽपि वत्यर्थः कारकञ्च नञादिषु ॥**
**अन्वेति त्यज्यतां तर्हि चतुर्थ्याः स्पृहिकल्पना ॥१८॥**

पर्वतो वह्निमान् धूमाद् महानसवत, भूतले न घटः। भूतले घट इत्यादिपदात्। एवमादिष्वनुशासनविरोधेऽपि यदि साधुत्वमन्वयश्चाभ्युपेयते; तर्हि चतुर्थ्याः स्पृहिकल्पनाऽपि त्यज्यतामित्यर्थः। अनुशासनानुरोधतौल्ये अर्द्धजरतीयमयुक्तमिति भावः॥ १८॥

---

दर्पणः

साधुत्वे, पर्वतो वह्निमान् महानसवदित्यादौ वत्यर्थसादृशस्य कथं पर्वतेऽन्वयः? कथं वा भूतले न घटः' इत्यत्र सप्तम्यर्थभूतलाधेयत्वस्य तथाऽभावे इत्यत आह मूले-*यदि पक्षेऽपीति*। पक्षे प्रतिज्ञावाक्यजन्यबोधविशेष्ये सन्दिग्धसाध्यके धर्मिणि पर्वतादाविति यावत्। कारकमधिकरणादि, नञादिषु—नञर्थाऽभावे; इतरनामार्थे चेत्यर्थः। तमेव विषदयति सारे-*पर्वतो वह्निमानित्यादिना* ॥ *आदिपदादिति*॥ नञादिष्वित्यादिपदादित्यर्थः । तदेव विवृणोति—*एवमादिष्विति*। भूतले घट इत्यादावित्यर्थः ॥

*अन्वयश्चेति*। महानससदृशः पर्वतो, भूतलवृत्तित्वाऽभाववान् घटो, भूतलवृत्तिर्घटाऽभाव इति वा बोधश्चेत्यर्थः। "तेन तुल्यम्" इत्यनुशासनेन क्रियागतसादृश्यबोधन एव वतेः "कारक" इत्यधिकृत्य "सप्तम्यधिकरणे च" इत्यनुशासनेन क्रियान्वय एव सप्तम्याश्च साधुत्वबोधनादुक्तम्-*यदीति*। *चतुर्थ्या इति*। पुष्पेभ्य इत्यत्र "स्पृहेरीप्सित" (पा० सू० १।४।३६) इति विहितचतुर्थ्याः स्पृहयत्युपात्तार्थे एव स्वार्थाऽन्वयबोधकत्वम्, न पदान्तरोपात्ते, अध्याहृते वा तदर्थेऽनुशासनविरोधादिति स्वसिद्धान्तस्त्यज्यतामित्यर्थः ॥

*अर्द्धजरतीयमिति*। इदमर्थे गहादित्वाच्छः क्वचिदनुशासनाऽनुरोधः क्वचिन्नेत्यर्द्धजरतीसदृशमित्यर्थः। तथा च स्वीयसिद्धान्तप्रच्युतिरूपबाधकभियाऽत्राऽपि पर्वतो वह्निमान् भवितुमर्हतीत्येव प्रतिज्ञाऽङ्गीकरणीया, न तु क्रियावाचकपदशून्या

परीक्षा

*उपपत्तिमिति*। अनन्वये बाधकोपन्यासरूपां तामित्यर्थः। *यदीत्यादि*। पर्वतो वह्निमान्, धूमात्, महानसवदित्यादौ पक्षे पर्वतादावित्यर्थः—सादृश्यम्। *कारकम्*—अधिकरणादि। *नञादिषु*—नञाद्यर्थोऽभावे। आदिना नोशब्दपरिग्रहः। *त्यज्यतामिति*। पुष्पेभ्य इत्यत्र चतुर्थ्यां श्रुतायां स्पृहयतीति पदमेवाध्याह्रियते; न तु पदान्तरमिति कल्पना त्यज्यताम्। "स्पृहेरीप्सित" इत्यनुशासनानुरोधेन तथा कल्प्यते इति चेद्? अन्यत्रापि तथैवानुशासनानुरोधः स्वीकार्य्यो; न तु तत्त्यागः। एवं चोक्ताष्टकस्योक्तरीत्या साधुत्वस्योक्तत्वेन क्रियायामेव कारकाणां वत्यर्थस्य चान्वयः, यद्यनुशासनानुरोधेन पुष्पेभ्य इत्यत्र स्पृहयतीति पदाध्याहारस्तदाऽन्यत्रापि अनुशासनानुरोध एवास्तु; न तु तस्य त्यागः। *अर्द्धजरतीयमिति*। "गहादित्वाच्छः" अर्द्धजरतीसादृश्यमित्यर्थः। क्वचिदनुशासनानुरोधोपादानं; क्वचित्तु त्याग

एवं कर्त्रादौ विहितानामिन्यादीनां क्रिययैवान्वय इत्याह—

**अविग्रहा गतादिस्था यथा ग्रामादिकर्म्मभिः ॥**
**क्रिया सम्बध्यते तद्वत् कृतपूर्व्यादिषु स्थिता ॥१९॥**

नविविच्य ग्रहो ग्रहणं यस्याः सा अविग्रहा गुणीभूतेति यावत् । तथा च ग्रामं गत इत्यत्र यथा–क्तप्रकृत्यार्था गुणीभूतापि क्रिया ग्रामादिकर्म्मभिः सम्बध्यते; तथा कृतपूर्वी कटमित्यत्रापि

---

दर्पणः

सेति नोक्तनियमे व्यभिचारः । 'भूतले न घटः' इत्यादौ यद् वक्तव्यं तत्तूक्तम् । वक्ष्यते वाऽधिकमिति भावः ॥ १८ ॥

कृतपूर्वीत्यत्र भावविहितक्तेन सिद्धाऽवस्थापन्नो भाव उच्यते । तद्विशेषणं च प्रकृत्यर्थक्रियेत्याशयेन मूलमवतारयति–*एवमित्यादिना* । कर्त्रादावित्यादिना भावपरिग्रहः । इन्यादीनामित्यादिना क्त्वातुमुनादीनाम् । *सम्बध्यते इति* । कारकप्रकारकबोधं प्रति विशेष्यतया धातुजन्यभावनोपस्थितेर्हेतुतायाः पूर्वमुक्तत्वादिति भावः ॥

*कृतपूर्व्वी कटमिति* । नन्वत्र कर्मणि क्ते कटशब्दादनभिहिताऽधिकारीयद्वितीयानुपपत्तिः । भावे क्तस्तु सकर्मकाद्गगनकुसुमायमान एव । तयोरेवेति नियमात् । अत एव नपुंसके भावेऽपि न सः, तथाच कथमुक्तदार्ष्टान्तिकवाक्योपपत्तिरिति चेदत्राहुः—कर्मणो विशेषरूपेण प्रागविवक्षया अकर्मकत्वाद्भावे प्रत्यये तदन्तस्य पूर्वशब्देन समासे "सपूर्वाच" इतीनिः, पश्चात्तु कर्मणो विशेषरूपस्य विवक्षया तत्र द्वितीयेति । इदं च "कर्त्तृकर्मणोः कृति" ( पा० सू० २।३।६९ ) इति भाष्ये स्पष्टम् । ईदृशविवक्षाऽविवक्षे

परीक्षा

इतिरीत्या त्यागोपादानाभ्यामर्द्धजरतीसादृश्यम् । एवं च स्वसिद्धान्तानुरोधेन 'भूतले न घट' इत्यस्यान्वयबोधजननायास्तीति पदमध्याहार्य्यम् । 'पर्वतो वह्निमान्' इत्यत्रापि भवितुमर्हतीति पदमध्याहार्यम् । प्रतिज्ञावाक्यमपि 'पर्वतो वह्निमान्भवितुमर्हति' इत्याकारकमेव प्रयोक्तव्यम् । तत्रार्हणक्रियायामुदाहरणवाक्यघटकवतिप्रत्ययार्थसादृश्यस्यान्वयः । वत् प्रक्रातमहानसादिशब्दानां महानसादिकर्त्तृकभवने लक्षणा च स्वीकार्य्या । "तेन तुल्यम्" इत्यनुशासनानुरोधादिति भावः ॥ १८ ॥

*एवम्*—उक्ताष्टकवत् । *कर्त्रादावित्यादिना*–भावस्य । *इन्यादिना*–इत्यादिना–क्त्वातुमुनादीनां च परिग्रहः । तत्र कारकप्रकारकबोधं प्रति धात्वर्थभावनोपस्थितेः कारणता पूर्वमुक्तैव । क्त्वान्तार्थस्य तत्रान्वये प्रमाणन्तु "समानकर्तृकयोः पूर्वकाले" इति सूत्रमेव । एवम्–"तुमुन्ण्वुलौ" इति सूत्रेऽपि क्रियार्थायां क्रियायामित्युक्तिरिति ।

ननु कृतपूर्वीत्यत्र कर्मणो विशेषेण रूपेण प्रागन्वयाविवक्षया कृधातोरकर्मकत्वं सम्पाद्य तस्माद्भावे प्रत्ययः ; स च सिद्धावस्थां क्रियामभिधत्ते इति । तस्या धात्वर्थभावनाया विशेषणत्वात्कथं तत्र पुनः कर्मणोऽन्वय इत्याशङ्कानिरासायाह—*अविग्रहे-

गुणभूता इन्यादिभिरित्यर्थः ।

नच वृत्तिमात्रे समुदायशक्तेर्वक्ष्यमाणत्वात् तत्रान्तर्गता भावना पदार्थैकदेश इतिकथं तत्रान्वय इति वाच्यम् । नित्यसापेक्षेष्वेक-

दर्पणः

च तद्भाष्यप्रामाण्यात् कृतपूर्वीत्यादिविषये एव, नाऽन्यविषय इति बोध्यम् ।

*इन्यादिभिरिति* । तदर्थकर्त्रादिभिरित्यर्थः । वस्तुतस्तु दार्ष्टान्तिके स्ववाचकप्रकृतिकप्रत्ययार्थेऽन्यस्मिन् वा गुणीभूतकटादिकर्मभावादिभिरिति व्याख्येयम् । नातः, कृतपूर्वीति प्रयोगघटकक्तस्य धात्वर्थाऽनुवादकत्वेऽपि क्षतिः । पूर्वकालिकक्रियाकर्त्तेति ततो बोधेन तादृशक्रियाया इन्यर्थकर्त्तरि गुणत्वात् । नाप्ययं भावाऽधिकारीयस्वातन्त्र्येणाऽप्रयोगात् । अत एव 'भोक्तुं गतमेतेन' इत्यादिप्रयोगोपपत्तिः । भावाऽनधिकारीयभावविहितप्रत्ययस्य धात्वर्थानुवादकत्वात्प्रकृत्यर्थक्रियाया अगुणत्वात् । एवम् "अव्ययकृतो भाव" इत्युक्ते पाक इत्यादिप्रयोगस्थघञर्थात्तुमुनाद्यर्थे वैलक्षण्यानुभवात् तुमुनादीनामपि साध्यमात्रस्वभावभावार्थकत्वमित्यन्यत्र विस्तरः ।

*वृत्तिमात्रे इति* । मात्रपदं कृत्स्नाऽर्थकम् । *वक्ष्यमाणत्वादिति* । 'समासे खलु भिन्नैव' इत्यनेनेत्यादिः । तत्र समासपदस्य वृत्तिसामान्यपरत्वेन व्याख्यास्यमानत्वादिति भावः । *कथमिति* । गत इत्यादौ कृद्वृत्तिसत्त्वेन गमनकर्तृरूपगतपदार्थैकदेशभावनायां कर्म्मान्वयासम्भवाद् दृष्टान्तासिद्धिरिति भावः । नित्यसापेक्षस्थले हि पक्षद्वयम् । 'चैत्रस्य गुरुकुलम्' इत्यत्र विशेषणस्य चैत्रादेर्गुर्वादिद्वारकसम्बन्धेन कुलादिरूपविशेष्य एवान्वय इति तत्रैकः पक्षः । सचोक्तो हरिणा—

समुदायेन सम्बन्धो येषां गुरुकुलादिना ।
संस्पृश्यावयवाँस्ते तु युज्यन्ते तद्वता सह ॥ इति ।

उक्तस्थले समुदायनिरूपितसम्बन्धे षष्ठी अवयवद्वारकश्च समुदायेन सम्बन्ध इति सामर्थ्याद् अवयवमपीति विशेषणं स्पृशतीति तदर्थः । अपरस्तु गुर्वादिनिरूपितसम्बन्धे एव, देवदत्तस्येति षष्ठी तत्रैव तदन्वयः । उक्तञ्च—

सम्बन्धिशब्दः सापेक्षो नित्यं सर्वः[1] समस्यते ।
वाक्यवत्सा व्यपेक्षा हि वृत्तावपि न हीयते ॥ इति ।

नित्यमपि साऽपेक्षपदाऽर्थाऽन्वयि, हि—यतो देवदत्तस्य गुरोः कुलमित्यादिव्यस्ते या व्यपेक्षा सा समासेऽपि न हीयत इति कारिकार्थः । 'पदार्थः पदार्थेनाऽन्वेति' इति

परीक्षा

त्यादि* । *इन्यादिभिरिति* । इन्याद्यर्थकर्त्रादिभिरित्यर्थः । ननु दृष्टान्ते प्रकृत्यर्थक्रियायाः स्ववाचकप्रकृतिकप्रत्ययार्थे गुणत्वात्तस्यां बहिर्भूतग्रामादिपदार्थान्वयः ; दार्ष्टान्तिके तु न ; तस्यामिन्प्रत्ययार्थकर्त्तुरन्वय इति वैषम्यमिति चेद् ? न । विशेष्यत्वविशेषणत्वाभ्यां वैषम्येऽपि परान्वयित्वमात्रे दृष्टान्ततयोपपादनात् । तत्रायं विशेषः—दृष्टान्ते गुणीभूता क्रिया ग्रामादिकर्मभिः साक्षादन्वेति, दार्ष्टान्तिके तु गुणीभूता क्रिया परम्परयाऽन्यस्मिन् विशेषणमिति । एककटाभिन्नाश्रयिका या उत्पत्तिस्तदनुकूलव्यापारवानिति ह्यस्माद् बोधः ।

*वक्ष्यमाणत्वादिति* । "समासे खलु" इत्यादिनेत्यादिः । *कथमिति* । गौ-

**देशेऽपि, देवदत्तस्य गुरुकुलं, चैत्रस्य नप्ता, इत्यादाविवान्वयाभ्युपगमात् । एवं भोक्तुं पाकः, भुक्त्वा पाक इत्यत्रापि द्रष्टव्यम् ॥१९॥**

---

दर्पणः

व्युत्पत्तिस्तु नित्यसापेक्षाऽतिरिक्तविषये तद्भावः । तत्रान्तिमपक्षमभिप्रेत्य समाधत्ते- *नित्यसापेक्षेष्विति* ।

तथाच गुरुत्वादेरन्यनिरूप्यत्वेन तदुपस्थितौ नियमेन जायमानाया निरूपकाकाङ्क्षाया निवृत्तये देवदत्ताद्यन्वयवत्' प्रकृतेऽपि, किं साधकं गमनरूपसाध्यमिति साधनाकाङ्क्षानिवृत्तये ग्रामादिकर्माऽन्वयस्याऽऽवश्यकत्वान्न दृष्टान्तासङ्गतिरिति भावः । आदिना "शरैः शातितपत्रः" इत्यादेः सङ्ग्रहः । अवतरणिकास्थादिपदग्राह्यं स्पष्टयति-*एवं भोक्तुमिति* । अत्राऽप्यादिपदग्राह्यम्—*भुक्त्वा पाक इति* । घञर्थभावगुणभूतायां पच्यर्थक्रियायां तुमुनन्तार्थक्रियान्वय इति बोध्यमित्यर्थः ।

अत्र नव्याः—तुमुन्विधायके "क्रियार्थायां क्रियायाम्" इत्युक्त्या प्रत्त्यासत्त्या क्रिययोरेकजातीयत्वलाभेन स्ववाचकप्रकृतिकप्रत्ययार्थे प्रत्यगुणीभूतायाः साध्यमात्रस्वभावाया एव, क्रियायामित्यनेन ग्रहणाद्भोक्तुं गतं भोक्तुं पाक इत्यसाध्वेव । ध्वनितं चेदम् "उपपदमतिङ्" इति सूत्रभाष्ये । यत्र तु क्रियामात्रार्थकस्य ग्रहणम्, तत्र क्रियामात्रविशेषणादपीतिगतपाकादियोगेऽपि सूच् क्त्वा दीत्याहुः ।

तेषामयमाशयः—घञाद्यन्तस्थले प्रकृतिप्रत्ययाभ्यां विशेष्यविशेषणभावापन्नसत्त्वाऽसत्वस्वभावक्रियाद्वयमुपस्थाप्यते । तत्र प्रत्ययार्थक्रियायाः प्राधान्यम् । एवञ्च धातूपस्थाप्यक्रियायाः साध्यमात्रस्वभावत्वेऽपि तस्या घञर्थं प्रति गुणत्वान्न तत्र तुमुनादीति ।

परीक्षा

नित्या पशुरपशुरित्यादिशब्दानां प्रामाण्यापत्तिवारणाय 'पदार्थः पदार्थेनान्वेति, न तु पदार्थैकदेशेन' इति व्युत्पत्तिस्वीकाराद्भावनायाः पदार्थैकदेशत्वात् । 'देवदत्तस्य गुरुकुलम्' इत्यस्माद्देवदत्तस्य यो गुरुस्तस्य कुलमिति बोधः । 'चैत्रस्य नप्ता' इत्यस्मात्तु चैत्रस्येत्यस्य नप्तृपदार्थे जन्यजन्यः पुमान् तदेकदेशजन्यतायामन्वयः । *अभ्युपगमादिति* । उक्तव्युत्पत्तेः सम्बन्धिकातिरिक्तविषयत्वात् । तदुक्तं हरिणा—

सम्बन्धिशब्दः सापेक्षो नित्यं सर्वः समस्यते ।
वाक्यवत् सा व्यपेक्षा हि वृत्तावपि न हीयते ॥ १ ॥ इति ।

नित्यं सापेक्ष इत्यन्वयः । एतेनैतादृशस्थले एकदेशान्वयेऽपि साधुत्वमिति सूचितम् । अथवा 'चैत्रस्य गुरुकुलम्' इत्यादौ षष्ठ्यन्तार्थस्य चैत्रसम्बन्धस्य स्वाश्रयगुरुसाध्यत्वरूपपरम्परासम्बन्धेन कुले एवान्वयः-अयमपि पक्षस्तेनोक्तः—

समुदायेन सम्बन्धो येषां गुरुकुलादिना ।
संस्पृश्यावयवांस्ते तु युज्यन्ते तद्वता सह ॥ इति ।

अवयवद्वारकसम्बन्धेन समुदायार्थेन सम्बन्धेऽवयवमपि विशेषणं सामर्थ्यात्स्पृशतीति फलितम् । अत्रत्यो नित्येत्यादिग्रन्थ आदिरीत्या द्रष्टव्यः । *इत्यत्रापीति* । गुणभूतधात्वर्थक्रियायामन्वयो भुजेः ॥ १९ ॥

ननु यदि गुणीभूतक्रियामादाय पूर्वोक्तरूपाणां साधुत्वम्, तदा सकृत् पाको, द्विः

अतिप्रसङ्गमाशङ्क्य समाधत्ते—

**कृत्वोऽर्थाः क्त्वातुमुन्वत्स्युरिति चेत् सन्ति हि क्वचित् ॥**
**अतिप्रसङ्गो नोद्भाव्योऽभिधानस्य समाश्रयात् ॥ २० ॥**

भोक्तुं पाकः ; भुक्त्वा पाक इत्यादौ "तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्" (पा०सू० ३।३।१०॥) "समानकर्त्तृकयोः पूर्व्वकाले" ( पा०सू० ३।४।२१ ) इति क्रियावाचकोपपदे क्रिययोः पूर्वोत्तरकाले विधीयमानाऽपि तुमुन्नादयो गुणभूतां तामादाय यथा जायन्ते, तथा कृत्वोऽर्था अपि स्युः । एकः पाक इत्यत्र, "एकस्य सकृच्च" (पा०-सू० ५।४।१९) द्वौ पाकौ, त्रयः चत्वार इत्यत्र "द्वित्रिचतुर्भ्यः सुच्" (पा०सू० ५।४।१७) । पञ्चेत्यत्र कृत्वसुच् स्यात् । तथाच सकृत् पाकः द्विस्त्रिश्चतुः पाका इत्याद्यापत्तिरिति चेदिष्टापत्तिः । "द्विर्वच-नम्" इत्यादिदर्शनात् । अतिप्रसङ्गस्त्वनभिधानान्नेत्याह— *अती-ति* ॥ "न हि वचिरन्तिपरः प्रयुज्यते" इत्याद्यभियुक्तोक्तरीत्या समा-धेयमिति भावः ।

---

दर्पणः

तत्रेदं चिन्त्यम्—भावाऽनधिकारीयधात्वर्थाऽनुवादकप्रत्ययान्तयोगे तुमुनो दुर्वा-रत्वात् । किञ्च सुज्विधायकेऽप्युक्तविशेषणविशिष्टायास्तस्या ग्रहणमावश्यकम् । तत्तद्विशेषणीभूतक्रियायाः साध्यमात्रस्वभावत्वेन तज्जन्मगणने द्वौ पाकावित्यत्र सुजापत्तेरशक्यवारणत्वात् । नच तत्रेष्टापत्तिः । क्रियापदोपादानवैयर्थ्यादभ्यावृत्तिपद-सामर्थ्येनैव क्रियाया लाभादिति वक्ष्यमाणत्वात् ।

किञ्च 'साध्यत्वेन क्रिया तत्र' इति हरिपद्यव्याख्यावसरे, एकस्यैव सम्बन्धिभेदा-दाचार्यत्वमातुलत्वादिवदेकस्या एव क्रियायाः प्रकृतिप्रत्ययरूपवाचकसम्बन्धिभेदादुप-स्थितिरिति स्वोक्तिविरोधः क्रियाद्वयावबोधाङ्गीकार इति ॥ १९ ॥

*अतिप्रसङ्गमिति* । गुणभूतक्रियामादाय कृत्वोर्थापत्तिरूपमित्यर्थः ॥ तुमुन्ना-दीत्यादिना, 'कृष्णं दर्शको याति' इत्यत्र ण्वुलः सङ्ग्रहः । क्रिययोरित्यस्योद्देश्यत्वरूपे तादर्थ्ये इति शेषः ॥ विधीयमाना इत्यस्य द्योतकतयेत्यादिः ॥ द्विर्वचनमित्यादीत्या-दिना द्विः प्रयोगपरिग्रहः । तत्र ल्युड्घञर्थगुणीभूतक्रियामादाय सुचो दर्शनादिति

परीक्षा

पाकस्त्रिः पाक इत्यपि स्यादित्याशङ्कां निराचष्टे—*अतिप्रसङ्गमित्यादिना* । *इत्या-द्यापत्तिरिति* । आदिना पञ्चकृत्वः पाक इत्यस्य संग्रहः । *इष्टापत्तिः* । ल्युडाद्यर्थे गुणीभूता या क्रिया तस्या जन्मगणने कृत्वसुजादिप्रत्ययोत्पत्ताविष्टापत्तिः । तत्र मान-माह—*द्विर्वचनमित्यादीति* । आदिना "द्विः प्रयोगोर्द्विवचनम्" इति भाष्यप्रयोग-संग्रहः । 'सकृत्पाक' इत्यादिकं चानभिधानान्न भवतीत्याह–*अतिप्रसङ्ग इति* । "अन-भिधाने दृष्टान्तमाह—*नहि वचीति* । अभिधानलक्षणाः—कृत्तद्धितसमासा इत्यभि-

केचित्तु—"क्रियाभ्यावृत्तिगणने" इत्यत्र क्रियाग्रहणं व्यर्थम्। तस्या एवाभ्यावृत्तिसम्भवेन सामर्थ्यात्तल्लाभात्। तथाच-साध्यमात्रस्वभावक्रियालाभाय तदिति वाच्यम्। नच पाक इत्यादौ तादृशीति नातिप्रसङ्गः। द्विर्वचनमिति च, द्विःप्रयोगो द्विर्वचनमिति

---

दर्पणः

भावः॥ *तस्या एवेति*। क्रियाया एवेत्यर्थः। एवकारेण द्रव्यगुणव्यवच्छेदः। तयोः सकृदेवोत्पत्तेः। क्रियायास्तु नैकस्या अपि निवृत्तिभेदाया धातुवाच्यत्वोपगमेन तत्सम्भवादिति भावः।

*साध्यमात्रेति*। यद्यपि धातूपस्थाप्यायां तत्वमक्षतमुक्तयुक्तेः, तथाऽपि साध्यमात्रस्वभावपदस्योक्तप्रत्ययार्थगुणीभूतसाध्यस्वभावमात्रपरत्वान्न दोषः॥ *तादृशी-

परीक्षा

युक्तोक्तेर्येषां तद्धितप्रत्ययान्तानां प्रयोगः प्रामाणिकस्तेषां साधुत्वान्वाख्यानम्। 'सक्तुपाकः' इत्यादिप्रयोगे तु विवादसत्वात्तस्य साधुत्वान्वाख्यानाय "एकस्य सकृच्च" इत्येतदत्र न प्रवर्त्तते इति भावः। न च गुणप्रधानभावो भिन्नयोः पदार्थयोर्भवति; पाक इत्यादौ च पच्—धातुप्रतिपाद्यक्रियाया एकत्वात्कथं गुणप्रधानभाव इतिवाच्यम्? साध्यत्वसिद्धत्वाभ्यामसत्वसत्वाभ्यां च धर्माभ्यामुपाधिभ्यां कल्पितभेदमादाय विशेष्यविशेषणभावोपपत्तेः। तत्र "प्रकृतिप्रत्ययौ सहार्थम्" इत्यादि क्लृप्तन्यायेन प्रत्ययप्रतिपाद्यायाः सिद्धस्वभावक्रियायाः प्राधान्यम्। प्रकृत्यर्थभूतसाध्यस्वभावा क्रिया तस्यां विशेषणतया भासते। एकज्ञानविषयत्वं च संसर्गो विशेषणतया भासमानक्रियायामेव कारकान्वयो यथा; तथा कृत्वोऽर्था अपि भवन्ति।

अनभिधानं विनापि 'सक्तुपाक' इत्यादिप्रयोगापत्तिं वारयतां मतमाह—*केचित्वित्यादिना*। *तस्या एवेति*। सा साध्यमात्रस्वभावा पूर्वापरीभूतावयवकक्रियोक्ता तस्या एवेत्यर्थः। एवकारेण द्रव्यगुणव्यवच्छेदः। अयम्भावः—ययोर्द्रव्यगुणयोरेकवारमुत्पत्तिस्तयोर्न पुनरुत्पत्तिरित्यनुभवसिद्धम्, किन्तु सकृदेव क्रिया तु यद्यपि पूर्वापरीभूता नानावयवकत्वविशिष्टा भिन्ना भिन्नकालिकप्रवृत्या साध्यते; तथाऽपि निवृतिभेदाद् धातुना प्रतिपाद्यते, शब्दशक्तिस्वभावादिति तस्या जन्मनि पौनःपुन्यम्, अस्यां कल्पनायां "संख्यायाः क्रियाभ्यावृत्ति" इति सूत्रमेव मानमिति, एतदेवाह—*सामर्थ्यादिति*। अभ्यावृत्तिपदोपादानसामर्थ्यादित्यर्थः। *तत्*—क्रियापदम्। *नचेति*। नहीत्यर्थः। *तादृशी*—साध्यमात्रस्वभावा। नच प्रागुक्तरीत्या प्रकृतिप्रतिपाद्या साध्यमात्रस्वभावैवेति वाच्यम्? तस्याः कृद्विहिता या द्रव्यभावमापन्ना क्रिया तां प्रति विशेषणतया तस्या जन्मगणनासम्भवेन या विशेष्यविधया भासते तस्याः जन्मगणनं वाच्यम्। तच्च न सम्भवतीत्याशयात्। द्विर्वचनमित्यादेस्तु सौत्रवात्साधुत्वम्। अत एव द्विः प्रयोगाविति न ज्ञापकमिति। साध्यमात्रस्वभावत्वाभावेऽपि सुज्न भवतीत्याद्यर्थे ज्ञापकमित्यर्थः। एवमेव द्विः प्रयोग इत्यस्याऽपि साधुत्वम्। इदमुपलक्षणं तुमुन्विधायकसूत्रेऽपि क्रियाग्रहणादुभयोः क्रिययोः साजात्यलाभात्। साजात्यस्य च साध्यमात्रस्वभावकल्पनवत्। स्ववाचकप्रकृतिकप्रत्ययार्थ-

व्युत्पत्त्या "द्विर्वचनेऽचि" (पा० सू० १।१।५९) इति ज्ञापकं वा आश्रित्योपपादनीयमित्याहुः ॥ २० ॥

ननु सिद्धान्ते बोधकतारूपा शक्तिराख्यातशक्तिग्रहवतां बोधादावश्यकी इति धातोरेव भावना वाच्या, नाख्यातस्येति कथं निर्णय इत्याशङ्कां समाधत्ते—

**भेद्यभेदकसम्बन्धोपाधिभेदनिबन्धनम् ॥**
**साधुत्वं तदभावेऽपि बोधो नेह निवार्य्यते ॥२१॥**

भेद्यं—विशेष्यम्, भेदकं–विशेषणं तयोर्यः सम्बन्धस्तस्य यो भेदस्तन्निबन्धनं साधुत्वम् । अयमर्थः-व्याकरणस्मृतिः शब्दसाधुत्व-

---

दर्पणः

ति-*घञुपस्थाप्योक्तरूपेत्यर्थः । *व्युत्पत्त्येति* ॥ विवरणपरभाष्यकारप्रयोगादित्यर्थः ॥ *ज्ञापकमिति* ॥ तादृशसूत्रकृत्प्रयोगम् । 'हतशायिकाः शय्यन्ते' इतिवदिति भावः । *आहुरिति* ॥ सारग्राहिण इति शेषः ॥ २० ॥ *सिद्धान्त इति ॥ वैयाकरणसिद्धान्ते । 'इन्द्रियाणां स्वविषयेषु' इत्यादिना प्रतिपादिता बोधकतारूपा शक्तिराख्यातेऽप्यबाधितैव । ततो भावनाबोधस्य जायमानत्वादित्यर्थः । *साधुत्वपरेति* ॥ तथाच हरिः—

साधुत्वज्ञानविषया सैषा व्याकरणस्मृतिः ॥ इति

परीक्षा

विशेषणतानापन्नत्वेनैवाश्रयणाद्भोक्तुं गतो भोक्तुं पाक इत्यादि न भवति, किन्तु भोक्तुं पचति भोक्तुं गच्छतीत्याद्येवेति । *आहुरिति* । आहुरित्यस्वरसबीजन्तु कृत्वसुज्विधायके क्रियाग्रहणम्, अभ्यावृत्तिग्रहणम्, अभ्यावृत्तिगणनं क्रियाया एव, न तु द्रव्यगुणयोरित्यर्थबोधकमेवास्तु । तावताऽपि तस्या चारितार्थ्येन साध्यमात्रस्वभावेत्यत्र मानाभावात् । एवं च 'सकृत् पाक' इत्यादिप्रयोगाणामनभिधानमेवोचितम् । एवं "द्विर्वचनम्" इत्यादिलौकिकप्रयोगाणां स्वरसत एवोपपत्तौ सौत्रत्वाश्रयणमनुचितम् । एवं तुमुन्विधायकसूत्रस्योक्तरीत्या विलक्षणविषयत्वकल्पनेऽपि धात्वर्थमात्रानुवादकक्तान्तयोगे तस्य दुर्वारकतेति भोक्तुं गतमित्यादि भवत्येवेति ॥ २० ॥

*सिद्धान्ते*—वैयाकरणसिद्धान्ते । *बोधकतारूपेति* । "इन्द्रियाणां स्वविषय" इत्यादिना बोधकतारूपव शक्तिः प्रतिपादिता ।

यद्यभेद्यशब्द इतरभिन्नत्वेन ज्ञायमानपर इत्याशयेन व्याचष्टे—*भेद्यं विशेष्यमित्यादिना* । *तस्य यो भेद इति* । तस्य विशेष इत्यर्थः । *तन्निबन्धनम्*—तत्प्रयोज्यम् । अयम्भावः–यादृशसम्बन्धेन यादृशविशेषणान्विते विशिष्ये यादृशानुपूर्व्याः सूत्रकाराद्यन्यतमेन साधुत्वमुक्तम्, स शब्दस्तस्मिन्नर्थे साधुः, अन्यत्रासाधुः । अत एव दन्त्यमध्यो अस्वशब्दोऽश्वत्वप्रवृत्तिनिमित्तमुपादायाश्वे न साधुः, किन्तु दरिद्र एव एवमाख्यातस्य "लः कर्मणि" इत्यादिना कर्त्रभिधायकत्वस्य युक्तिसिद्धत्वात्तत्रैव साधुता, न त्वन्यत्र । धातोश्च भावनानभिधायकत्वेऽसाधुता व्याकरणसिद्धान्तविरोधा-

परा तत्रैवावच्छेदकतया कल्प्यमानधर्म्मस्य शक्तित्वं वदतां मीमांसकानां पुनः शक्तत्वं साधुत्वमित्येकमेवेति तद्रीत्या विचारे साधुत्वनिर्णय एव शक्तिनिर्णय उच्यते। अतिरिक्तशक्तिवादेऽप्याख्यातानामसाधुता भावनायां स्यादेव। एवञ्च चतुर्थ्यर्थे तृतीयाप्रयोगवद्धात्वर्थभावनायामाख्यातप्रयोगे, याज्ञे कर्मण्यसाधुशब्दप्रयोगान्नाऽनृतं वदेदिति निषेधोल्लङ्घनप्रयुक्तं प्रायश्चित्तं दर्शनान्तरीयव्युत्पत्तिमतां स्यादेवेति।

---

दर्पणः

तत्र—साधुशब्दे। *अवच्छेदकतया*। बोधजनकताऽवच्छेदकतयेत्यर्थः। *अतिरिक्तशक्तिवादेऽपीति*। साधुत्वं न शक्तत्वमसाधोरपि बोधात्किन्तु बोधकत्वमिति वक्ष्यमाणसिद्धान्तिमतेऽपीत्यर्थः।

*असाधुता स्यादेवेति*। आख्याताच्छक्तिभ्रमेण भावनाबोधेऽपि तत्र तस्याऽसाधुता स्यादेवेत्यर्थः। तथाच भाष्यकृता—"सिद्धे शब्दार्थसम्बन्धे" (म भा० आ० २) एत्यत्र "समानायामर्थावगतौ साधुभिर्भाषितव्यम्, नाऽसाधुभिरिति गम्यागम्येतिवन्नियमः। क्रियते" इति पस्पशायामुक्तम्। एवं यादृशविशेषणान्वितयादृशविशेष्यबोधे यादृशानुपूर्व्याः सूत्रकृदाद्यन्यतमसम्मतत्वं तादृशबोधे तादृशानुपूर्वीकः शब्दः साधुर्नान्यत्र। अत एवास्वशब्दोऽश्वे न साधुः, किन्तु निःस्वे। अश्वशब्दो निस्वे न साधुः, किन्तु तुरग इति सङ्गच्छते। नन्वस्तु साधुतेत्यत आह-*एवञ्चेति* याज्ञकर्मणीत्यनेन "नानृतं वदेन्नाऽपभ्रंशितं वा" इत्यादिश्रुतिः क्रतुप्रकरणे पाठादितरत्र तत्प्रयोगे प्रत्यवायाऽभावं सूचयति—*स्यादेवेति*। भावनाबोधकत्वेनाख्या-

परीक्षा

दिति, एतदेव विशदयति—*अयमर्थ इत्यादिना*। *तत्र*—'साधुशब्दे। *अवच्छेदकतया*—तन्निष्ठा या बोधजनकज्ञानविषयता तदवच्छेदकतया। *एकमेवेति*। साधुशब्दज्ञानाच्छाब्दबोध इति तदुक्तेः। ननु साधुत्वं न शक्तत्वमसाधोरपि बोधात्, किन्तु शक्तत्वमतिरिक्तमेवेत्याशयेनाह—*अतिरिक्तेति*। *स्यादेवेति*। आख्यातस्य भावनायां शक्तिभ्रमात्ततो भावनाया बोधेऽपि तत्र तस्यासाधुता स्यादेव; सूत्रकाराद्यन्यतमेन तत्र तस्य शक्तेरबोधनात्। अत एव गम्यागम्या दृष्टान्तेन पस्पशायां भाष्यकृता—"समानायामर्थावगतौ शब्दैश्चापशब्दैश्च तत्र धर्मनियमः क्रियते" साधुभिर्भाषितव्यम्, नासाधुभिरिति। भावनायामाख्यातस्यासाधुत्वसिद्धौ यत् फलितं तदाह—*(१)तथाचेति*। तत्र तस्यासाधुत्वे च। *नानृतमिति*। अत्रानृतं द्वेधा शब्दानृतमर्थानृतञ्चेति, शब्दानृतं गाव्यादि। अर्थानृतमस्वेऽश्वशब्दप्रयोगः। *प्रायश्चित्तमिति*। क्रतुप्रकरणे 'नानृतं वदेन्नापभ्रंशित वै' इति पाठादिति शेषः। *दर्शनान्तरीयेति*। मीमांसकरीत्या भावनामायाख्यातस्य शक्तिरिति भ्रमवतां सूत्रकारा-

---

(१) एवञ्चेति पाठान्तरम्।

ननु त्वन्मते 'नानृतम्'इति निषेधः क्रत्वर्थ एव न सिद्ध्येद्, आख्यातेन कर्त्तुरुक्तत्वाच्छ्रुत्या पुरुषार्थतैव स्यात् । प्रकरणा-

---

दर्पणः

तस्य सूत्रकारादिभिरनुशिष्टत्वात् कर्तृबोधकत्वेनैव तदनुशासनादिति भावः ।

मीमांसकः शङ्कते-*नन्विति*। त्वन्मते-वैयाकरणमते। *नानृतमिति*। दर्शपूर्णमासप्रकरणे हि 'नानृतं वदेत्' इति श्रूयते। तत्र किमयं प्रतिषेधः पुरुषार्थः, आहोस्वित् क्रत्वर्थ इति संशये, वदेदित्याख्यातात् कर्तृप्रतीत्या कर्तृवाचकत्वनिर्णयो, "लः कर्मणि" इत्यनुशासनात्तस्य कर्तृपरत्वलाभाच्च। प्रत्ययार्थत्वेन वदनं प्रति प्राधान्याद् वदनं तावत् पुरुषार्थोऽतः प्रतिषेधोऽपि पुरुषार्थः। निषेधप्रतियोगित्वेन वदनक्रियामनुवदता वदेदिति शब्देन पुरुषार्थतयैव बोधनात् तादृशस्यैवाऽनृतवदनस्यानिष्टसाधनताया विपरीतस्वभावबोधकनञा बोधनादन्यादृशाऽनृतवदनस्य चाऽनुपस्थितत्वात्। अत एवऽनारभ्याऽधीतस्मार्त्तवदननिषेधस्याऽप्येतदेव मूलं भवतीति लाघवम्। अन्यथा तन्मूलभूतः पुरुषाऽर्थोऽन्यो निषेधः कल्प्यः इति गौरवं प्रसज्येतेति पूर्वपक्षे, 'अनन्यलभ्य एव शब्दार्थः' इति न्यायाद्भावनैवाख्यातवाच्या, कर्त्ता त्वाख्यातवाच्यभावनाया अविनाभावादाक्षेपलभ्य एवेति न तत्र तस्य शक्तिः। "लः कर्म्मणि" इत्यादिस्मृतिरपि "द्व्येकयोः" इत्यनेनैकवाक्यतया तत्संख्यातवाचित्वपरैव। पचति देवदत्त इत्यादौ च गौः शुक्ल इतिवत् सामानाधिकरण्यं लक्षणयैवेति नाख्यातस्य कर्तृवाचित्वमिति कर्तुः श्रुतेरनुपस्थितत्वान्न पुरुषार्थता तस्य, किन्तु प्रकरणात् क्रत्वर्थतैवेतिनिर्णीतं कर्त्रधिकरणे। *आख्यातेनेति*। तिङेत्यर्थः।

परीक्षा

दिभिः कर्त्तर्य्येवाख्यातस्य शक्तिबोधनात्-तस्मादेतद्दोषवारणाय कर्तृकर्मणोराख्यातवाच्यत्वमावश्यकम्।

ननूक्तरीत्या कर्त्तुराख्यातार्थत्वे व्याकरणसङ्गतावपि दर्शपूर्णमासप्रकरणपठितस्य 'नानृतं वदेत्' इति निषेधस्य क्रत्वर्थत्वं न स्यात्। तथा च क्रतौ-अपभाषणे क्रतुवैगुण्यनिवारणार्थं प्रायश्चित्तानुष्ठानं न स्यादिति सकलमीमांसकशिष्टाचारविरोध इत्याह-*नन्वित्यादिना*। *त्वन्मते*-वैयाकरणमते। *क्रत्वर्थः*-क्रतूपकारकः। किमयं प्रतिषेधः पुरुषार्थ-आहोस्वित् क्रत्वर्थ इति संशये वदेदिति श्रुत्या कर्त्तुः पुरुषस्य प्रतिपादनात् पुरुषार्थः स्यात्, अनृतवदनकर्त्तुः पुरुषस्य नञ्समभिव्याहारादनिष्टसाधनता प्रतीयेत। तथा चानभ्याधीतस्य नानृतमिति निषेधस्याऽपि एतदेकवाक्यतया पुरुषार्थतैव स्याल्लाघवात्, नतु तस्यान्यपदार्थत्वमपि, स्मार्त्तस्य श्रौतमूलत्वेन वैलक्षण्यकल्पनायां गौरवात्। अनेनाख्यातेनेत्यादिना कर्त्राधिकरणोयपूर्वपक्षानुवादः कृतः, तत्र हि-'अनन्यलभ्य एव शब्दार्थः' इति न्यायेन भावनाया अविनाभावात्कर्त्ता आक्षेपलभ्य एव, न तु तत्राख्यातस्य शक्तिः "लः कर्मणि" इति सूत्रं तु "द्व्येकयोः" इति सूत्रैकवाक्यतया। आक्षिप्तकर्तृनिष्ठसंख्याबोधकं देवदत्तः पचति इत्यादौ सामानाधिकरण्यं तु 'गौः शुक्ल' इतिवत्। एवं श्रुत्या पुरुषस्यानुपस्थितत्वात्, न तस्य 'नानृतम्' इति निषेधस्य पुरुषार्थत्वं, किन्तु प्रकरणात् क्रत्वर्थत्वमिति निर्णीतम्। यदि

द्धि क्रत्वर्थता, तच्च श्रुतिविरोधे बाध्यत इति चेद् ? न।

दर्पणः

*तच्चेति*। प्रकरणं चेत्यर्थः। *श्रुतिविरोध इति*। निरपेक्षरवरूपश्रुति प्रातिकूल्य इत्यर्थः।

तथाहि-श्रुत्यादयः षडिह विनियोजकाः। तत्र विरुद्धयोरेकत्रोपनिपाते समुच्चयदौर्लभ्यादेकेनाऽपरस्य बाधो वक्तव्यः स च बलवता दुर्बलस्येति कस्य दौर्बल्यमित्याकाङ्क्षायां परदौर्बल्यप्रतिपादकं, 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्' इति सूत्रं प्रणिनाय महर्षिजैमिनिः। श्रुत्यादीनां पठितानां समवाये एकत्रोपनिपाते पारदौर्बल्यमिति। पर एव पारः। उत्तरपठितम्। तथा चैषां मध्ये यदपेक्षया यत्परं तत् दुर्बलमित्यर्थः। तत्र हेतुमाह-अर्थविप्रकर्षादिति। अर्थस्य विनियोजकस्य लिङ्गादितो विप्रकर्षादुत्तरवर्त्तित्वात्। लिङ्गादेर्विलम्बेन पूर्वापेक्षया विनियोजकत्वागतेरिति यावत्।

तत्र श्रुत्यादीनामुदाहरणानि निरपेक्षाण्येव स्युः। इतरप्रामाण्याऽनधीनप्रामाण्यकत्वं च निरपेक्षत्वम्। यथा-'व्रीहीनवहन्ति' इति। अत्र क्रियाजन्यफलभागित्वं कर्मत्वं बोधयन्ती द्वितीयाश्रुतिरितरनिरपेक्षैव व्रीहीणामवघातशेषित्वं प्रतिपादयति॥१॥

अर्थविशेषप्रकाशनसामर्थ्यं लिङ्गम्। यथा-'बर्हिर्देवसदनं दामि' इति। अत्र लवनार्थप्रकाशकतया लवनस्य विनियोगः॥ २॥

परस्पराकाङ्क्षावशादेकस्मिन्नर्थे पर्य्यवसन्नानि पदानि वाक्यम्। यथा 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्' 'अग्नये त्वा जुष्टं निर्वपामि' इति। अत्र मन्त्रलिङ्गेन निर्वापे प्रयुज्यमानस्य समवेताऽर्थभागस्यैकवाक्यताबलेन, 'देवस्य त्वा' इत्यादिभागस्यापि तत्रैव विनियोगः॥ ३॥

परीक्षा

भवता कर्तुराख्यातवाच्यता स्वीक्रियते, तदा तु पुरुषार्थत्वं स्यादिति भावः। *श्रुतिविरोध इति*। अत्र श्रुतिशब्दो निरपेक्षरवपरः। निरपेक्षो रवःश्रुतिरिति तैः कथनात्। "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्"इति जैमिनिसूत्रं हि प्रकरणस्य दौर्बल्यबोधकम्। श्रुत्यादीनां पठितानामेकत्र समवाये एकत्र समवधाने परस्यैतत्सूत्रपठितेषु परस्य दुर्बलत्वमिति तदर्थः। परस्य दुर्बलत्वे हेतुरर्थविप्रकर्षादित्यर्थस्य विनियोज्यस्य विप्रकर्षाद्दूरवर्त्तित्वात्। लिङ्गादेर्विलम्बेन विनियोजकत्वावगतेरिति यावत्।

आद्यस्योदाहरणं यथा-व्रीहीनवहन्तीति। अत्र द्वितीयाश्रुत्या निरपेक्षतया व्रीहीणामवघातशेषं प्रतिपादयति॥ १॥

लिङ्गमर्थविशेषप्रतिपादनसामर्थ्यम्, यथा 'बर्हिर्देवसदनं दामि' इत्यादि। अत्र दामीत्यस्य लवनरूपार्थप्रकाशकतया लवनेऽस्य विनियोग इति वाच्यम्? परस्पराकाङ्क्षावशादेकस्मिन्नर्थे पर्य्यवसितानि पदानि यथा-"अग्नये त्वा जुष्टं निर्वपामि' इति मन्त्रस्य निर्वपामीति मन्त्रलिङ्गेन निर्वापे प्रयुज्यमानस्य समवेतार्थे भागस्यैकताबलेन "देवस्य त्वा सवितुः प्रसवेऽश्विनोः" इत्यस्याऽपि तत्रैव विनियोगः॥२-३॥

दर्पणः

लब्धवाक्यभावानां पदानां कार्य्यान्तरापेक्षावशाद्वाक्यान्तरेण सम्बन्ध आकाङ्क्षापर्यवसन्नं प्रकरणम्। यथा–'समिधो यजति' इति। अस्य हि दर्शपूर्णमासे कथम्भावाकाङ्क्षायाः प्रकरणपाठवशाच्छेषत्वम्॥ ४॥

स्थानम्–क्रमः। स चानेकस्याम्नातस्य सन्निधिविशेषाम्नानम्। यथा–दधिरसीत्यत्राऽग्नेयोपांश्वग्नीषोमीययागाः क्रमेण पठिताः। एवं मन्त्रभागेऽपि क्रमेणानुमन्त्रणत्रयं पठितम्। तत्राग्नेयाग्नीषोमयोर्द्वयोर्लिङ्गेनैव विनियोगसिद्धिः। 'दधिरसि'इत्यत्र तु न लिङ्गादिविनियोजकं, किन्तु यस्मिन् प्रदेशे ब्राह्मणे उपांशुयागविधानं तस्मिन् प्रदेशे मन्त्रेऽप्यस्य पाठ इति क्रमादुपांशुयागानुमन्त्रेण तस्य विनियोगः॥ ५॥

समाख्या–योगबलम्। तथा–हौत्रमौद्गात्रम्' इत्यादि। तत्र हि होतुरिदं हौत्रमित्यादियोगबलेन हौत्रादिसमाख्यातानि कर्माणि होत्रादिभिरनुष्ठेयानीति॥ ६॥

विरोधोदाहरणादि यथा—श्रुतिलिङ्गयोर्विरोधे श्रुतिर्बलीयसी, लिङ्गं तु दुर्बलम्, अर्थविप्रकर्षात्। यथा–'कदाचनस्तरीरसी' इत्यादिकाया ऋचो विनियोजिका श्रुतिः 'ऐन्द्रया गार्हपत्यमुपतिष्ठते' इति इन्द्रप्रकाशनसामर्थ्याल्लिङ्गादिन्द्रोपस्थापने विनियोगोऽस्याः प्रतिभाति। अन्यप्रकाशकस्याऽन्यत्र विनियोगाऽयोगात्। श्रुत्या गार्हपत्योपस्थाने स प्रतीयते। गार्हपत्यमिति द्वितीया हि कर्मविभक्तितया कामपि क्रियामपेक्ष्य प्रकृत्यर्थस्य शेषित्वं बोधयति। क्रियाजन्येष्टफलभागित्वस्य तदर्थत्वात्। एवमैन्द्रयेति तृतीयाप्रकृत्यर्थस्य शेषत्वं क्रियां प्रति साधकतमत्वरूपकरणत्वस्य तदर्थत्वात्। तदनयोर्विरोधः।

तत्राऽयं पूर्वपक्षः, सामर्थ्यज्ञानमपेक्ष्य श्रुतिर्विनियोजिका। न ह्यसमर्थं श्रुतिसहस्रमपि विनियोक्तुमलम्। अतो लिङ्गस्य बलवत्त्वादिन्द्रोपस्थानेऽस्या विनियोगः। तदनुरोधितया द्वितीया सप्तम्यर्थतया व्याख्येया। गार्हपत्यसमीपे इन्द्रोऽनया उपस्थातव्य इत्यर्थः पर्यवस्यतीति।

सिद्धान्तस्तु—श्रुतिः स्वरूपसत्सामर्थ्यमपेक्षते, न तु तज्ज्ञानमपि। येन लिङ्गं बलवद्भवेत्। तस्य च पूर्वसत एव विनियोगोऽन्यथानुपपत्त्या ज्ञानं पश्चादुपजायते। लिङ्गं तु विनियोजने श्रुतिमपेक्षते। न ह्यनयेन्द्र उपस्थातव्य इति लिङ्गात् स्वरसतः प्रतीयते, किन्त्विन्द्र एतादृगित्येतावन्मात्रम्। तथाच प्रकरणाम्नानसामर्थ्यादिन्द्र-

परीक्षा

प्रकरणन्तु—लब्धवाक्यभावानां पदानां कार्य्यान्तरापेक्षया वाक्यान्तरेणाकाङ्क्षया सम्बन्ध एव। यथा–समिधो यजतीति, अस्य कथं भावाकाङ्क्षा दर्शपौर्णमासप्रकरणपाठवशात्तच्छेषत्वम्॥ ४॥

स्थानं–क्रमः। स च पाठसादृश्यात्, पाठसादृश्यं च द्विविधम्, यथासंख्यपाठेन संनिधिपाठेन च। यथा–ऐन्द्राग्नमेकादशकपालं निर्वपेत्। वैश्वानरं द्वादशकपालमिति रीत्या क्रमविहीनेष्टिषु–'इन्द्राग्नीरोचनादिव' इत्यादीनां याज्यानुवाक्यानुमन्त्राणां यथासंख्यं प्रथमस्य प्रथमम्, द्वितीयस्य द्वितीयमिति। एवं यो विनियोगः स यथासंख्यपाठात् प्रथमपठितमन्त्रस्य कैमर्थ्याकांक्षायां प्रथमतो विहितं कर्मैव प्रथममुपतिष्ठते समानदेशत्वादिति॥ ५॥

'तिङर्थस्तु विशेषणम्' इत्यनेन परिहृतत्वात् । न हि गुणभूतः कर्ता निषेधं स्वाङ्गत्वेन ग्रहीतुमलम् । भावना तु प्रधानं तं ग्रहीतुं समर्थेति प्रकरणा-

---

दर्पणः

प्रकाशनसमर्थाया ऋचोऽन्यथाऽनुपपत्त्या लिङ्गेनाऽनयेन्द्र उपस्थातव्य इति श्रुतिः कल्पनीया, यथा विनियोगो भवेत् । ततो यावल्लिङ्गं श्रुतिकल्पनाय प्रक्रान्तव्यापारं, तावत् प्रत्यक्षश्रुत्या विनियोगः सिद्ध इति प्रकरणे निराकाङ्क्षे कयाऽनुपपत्त्या श्रुतिः कल्पनीया । तस्माच्छ्रुतेर्बलवत्त्वात्तदनुगुणतया सामर्थ्ये नीयमाने इन्द्रपदं परमैश्वर्याश्रयवाचकतया गार्हपत्यतात्पर्य्यकमित्यवधार्य्यत इति ।

विरोधोदाहरणान्तराणित्वन्वत्यतोऽवधार्य्याणि, गौरवभयान्नेह प्रपञ्चितानि । तदयं निर्गलितोऽर्थः—श्रुतिर्निरपेक्षत्वात् सर्वतो बलवती, लिङ्गं तु विनियोगे एकान्तरितत्वाद् द्व्यन्तरितवाक्याद् बलवत् । एवं वाक्यादावप्यूह्यम् । समाख्या तु पञ्चान्तरितत्वात्सर्वतो दुर्बलेति । प्रकृते आकाङ्क्षापर्यवसन्नप्रकरणेन वाक्यं कल्पनीयम् । तेन च लिङ्गं, लिङ्गेन श्रुतिस्तयाऽनृतवदननिषेधस्य क्रतौ विनियोगः । यावच्च प्रकरणं वाक्यकल्पनायै प्रक्रान्तव्यापारं तावत्प्रत्यक्षया कर्त्रर्थैकाख्यातश्रुत्या तस्य पुरुषार्थत्वविनियुक्ते क्लृप्तमपि वाक्याद्यत्किञ्चित्कारकमिति श्रुतिविरोधे बाध्यत इत्यस्यार्थः । लिङ्गादीनामुक्तप्रकारेण श्रुत्यपेक्षया दुर्बलत्वादिति भावः ।

समाधत्ते—*तिङर्थस्तु विशेषणमिति* ॥ तथाचाख्यातश्रुत्या कर्तुरुपस्थापनेऽपि न भावनावत् तस्य प्राधान्येन भानं, येन निषेधस्य पुरुषार्थता शङ्क्येत, किन्तु विशेषणतयैव तथोपस्थितस्य च विशेषणाऽन्तरनैराकाङ्क्ष्येण कर्त्तुः श्रौतनञर्थसम्बन्धाभावान्नाऽत्र श्रुत्या प्रकरणबाध इत्याशयं विशदयति-*स्वाङ्गत्वेनेति* । स्वविशेषणतयेत्यर्थः । नन्वेवं निषेधस्य क्वापि श्रौतपुरुषार्थता न स्यात् । 'न कलञ्जं भक्षयेत्' इत्यत्राप्युक्तरीत्या कर्तरि नञर्थासम्बन्धेन श्रौतत्वात्, यदि च कर्तुरप्राधान्येऽपि कर्तृवृत्तिभावनायाः प्राधान्यात्तस्या नञर्थाऽन्वये तद्द्वाराख्यातार्थकर्त्तुरप्यन्वयान्न तस्य श्रौतपुरुषाऽर्थत्वानुपपत्तिरिति विभाव्यते; तदा प्रकृतेऽपि तुल्यमत आह-

परीक्षा

समाख्यावाचको यौगिकः शब्दः । यथा-हौत्रमौद्गात्रमिति । अत्र होतुरिदं हौत्रमिति योगबलेन हौत्रादि समाख्यानि कर्म्माणि हौत्रादिभिरनुष्ठेयानीति ॥ ६ ॥

*परिहृतत्वादिति* । यदुक्तं तत्प्रकारं दर्शयति-*नहीति* । यदि कर्त्ता प्रधानं स्यात्तदा निषेधस्य पुरुषार्थता शङ्क्येत, तथा तु नास्ति; किन्तु विशेषणमेव; तस्य च विशेषणान्तरनैराकांक्ष्येण कर्तुः श्रौतनञर्थसम्बन्धाभावात् । *स्वाङ्गत्वेन*—स्वविशेषणतया । *तम्*—निषेधम् । *प्रकरणात्*-क्रतुप्रकरणात् । नन्वेवं 'न (१)कलञ्जं भक्षयेत्' इत्यादिनिषेधस्यापि पुरुषार्थत्वं न स्यात्पुरुषस्य कर्त्तुर्विशेषणत्वात् । यदि च कर्त्तुरप्राधान्येऽपि कर्तृवृत्तिभावनायाः प्राधान्यात्तस्या नञर्थान्वये तद्द्वारा

---

(१) कलञ्जं च विषलिप्तशस्त्रहतमृगमांसमिति यावत् । उक्तं च—
विषलिप्तेन शस्त्रेण यो मृगः परिहन्यते । अभक्ष्यं तत्तत्कलञ्जस्य तन्मासमिहेष्यते इति ।

त् क्रत्वर्थतैव । अस्तु वा क्रतुयुक्तपुरुषधर्म्मः । अनुष्ठाने विशेषाभावात् । "जञ्जभ्यमानोऽनुब्रूयान्मयि दक्षक्रतू"इति वाक्योक्त-

दर्पणः

*अस्तुवेति*।

*अनुष्ठान इति*॥ 'नाऽनृतं वदेत्' इति निषेधस्य क्रतुयुक्तपुरुषधर्मत्वे यजमानस्य प्राधान्यात्प्रधानीभूतकर्त्रैवानृतवदनं वर्ज्यं स्यात्; क्रत्वर्थत्वे च यज्ञप्रवृत्तेन यजमानेन ऋत्विग्भिश्च वर्जनं सिध्यतीति विशेषात् कथमेतदिति वाच्यम् । श्रुतिप्रकरणाभ्यां क्रतुसम्बन्धपुरुषकर्तृकानृतवदनाभाव इति बोधेन क्रतुकर्तृकेतिबोधे मानाभाव इति क्रतुयुक्तेति वदतोऽभिप्रेतत्वादिति ।

तत्र दृष्टान्तमाह-*मयि दक्षिक्रतू इति* । दर्शपूर्णमासप्रकरण एवैतन्मन्त्रवचनं श्रूयते-"जञ्जभ्यमानोऽनुब्रूयान्मयि दक्षक्रतू" इति । तत्र किमेतन्मत्रवचनं शुद्धपुरुषधर्मः उत क्रतुयुक्तपुरुषसंस्कारकतया क्रत्वङ्गमिति सन्देहे, वाक्येन तावज्जञ्जभ्यमानपुरुषधर्मतयैवाऽयं प्रतीयते । कृत्प्रत्ययस्य शानचः कर्तृवाचकत्वात् । प्रकरणेन तु क्रत्वङ्गतया: प्रकरणं च वाक्यापेक्षया दुर्बलमिति पुरुषधर्मतैव युक्ता । सत्यां च फलाकांक्षायां "प्राणापानावेवात्मानं धत्ते" इति वाक्यशेषे श्रुतस्य फलस्य रात्रिसत्रन्यायेनकल्पनादिति पूर्वपक्षे, सिद्धान्तः—वाक्यप्रकरणयोर्विरोधे बाध्यबाधकभावो, नत्वत्रास्ति विरोधः । जञ्जभ्यमानपदस्य कर्तृवाचकतया तादृशपुरुषस्य क्रतावपि सत्त्वात् तत्संस्कारमुखेन क्रत्वङ्गतासम्भवात् । एवञ्चाऽर्थवादोपस्थितफलकल्पनागौरवमपि नेति । तथाच बलाबलचिन्ताया विरोध एवौचित्येन जञ्जभ्यमानवाक्या-

परीक्षा

कर्तुरप्यन्वय इत्येतावतैव पुरुषार्थत्वमिति ब्रूषे; तदा प्रकृतेऽपि सममित्याह—*अस्तु वेति* । क्रतुयुक्तपुरुषसंस्कारद्वारा क्रतुयुक्तपुरुषधर्मः । न च क्रतुयुक्तः प्रधानीभूतो यजमानस्तेनैव प्रधानतयाऽनृतं वर्ज्जनीयमिति कर्त्तुर्वाच्यत्वे समायाति भावनाया वाच्यत्वे तु प्रधानन्यायानवतारात्सर्वैरिति विशेषः प्राप्नोतीति वाच्यम् । श्रुतिप्रकरणाभ्यां क्रतुसम्बद्धपुरुषकर्तृकानृतवदनाभावबोध एव लभ्यते; न तु क्रतुकर्त्तृकर्त्तृक इत्याशयात् । *अनुष्ठाने*–क्रत्वङ्गक्रियाकरणे जञ्जभ्यमानवाक्यवदिति । यथा दर्शपूर्णमासप्रकरणपठितमिदं वाक्यम् , तत्र 'जञ्जभ्यमान' इत्यत्र कर्त्तरि शानच् प्रत्यय इत्यस्य शुद्धपुरुषसंस्कारकत्वमुत क्रतुसम्बद्धपुरुषसंस्कारकतया क्रत्वङ्गत्वमिति सन्देहे, अनेन वाक्येन तावज्जञ्जभ्यमानपुरुषधर्मतैव प्रतीयते, प्रकरणेन तु क्रत्वङ्गत्वमिति विरोधस्य सत्वात्केवलपुरुषसंस्कारकत्वमिति पूर्वपक्षे सिद्धान्तितम् । यत्र विरोधस्तत्र श्रुतिप्रकरणयोर्बाध्यबाधकभावः । यत्र तु न तथा; तत्रोभयोः समावेश एव, न तु बाध्यबाधकभाव इति प्रकृते जञ्जभ्यमानपदस्य कर्त्तृवाचकतया तादृशपुरुषस्य क्रतावपि सत्वेन तत्संस्कारमुखेन क्रतुसंस्कारकत्वमिति तथा प्रतीतेऽपीति भावः । तदुक्तम्भट्टपादैः-

स्त्र्युपायमांसभक्षादिपुरुषार्थत्वमपि श्रितः ।
प्रतिषेधः क्रतोरङ्गमिष्टः प्रकरणाश्रयात् ॥

इति स्त्र्युपायः-स्त्र्युपगमनं, प्रतिषेधो 'न स्त्रियमुपेयात्' 'न मांसमश्नीयात्' 'नानृतं वदेत्' इति प्रतिषेधः ।

मन्त्रविधिवदित्यादिभूषणे प्रपञ्चितम्।

नन्वाख्यातस्य भावनायामसाधुत्वे ततस्तद्बोधो न स्यात्, साधुत्वज्ञानस्य शाब्दबोधहेतुत्वादित्यत आह—*बोध इति* ॥ असाधुत्वेऽपि साधुत्वभ्रमाद् बोधोऽस्तु नाम, अपभ्रंशवत्। असाधुत्वन्तु स्यादेवेति भावः। वस्तुतः साधुत्वज्ञानं न हेतुस्तद्व्यतिरेकनिर्णयोऽपि न प्रतिबन्धक इति 'असाधुरनुमानेन' इत्यत्र वक्ष्यामः ॥ २१ ॥

रङ्गोजिभट्टपुत्रेण कौण्डभट्टेन निर्म्मिते।
पूर्णो भूषणसारेऽस्मिन् धात्वाख्यातार्थनिर्णयः ॥ १ ॥

इति श्रीकौण्डभट्टविरचिते वैयाकरणभूषणसारे धात्वर्थाख्यातसामान्यार्थनिर्णयः समाप्तः ॥ १ ॥

---

दर्पणः

ऽनुवचनस्य वाक्यप्रकरणाभ्यां क्रतुयुक्तपुरुषधर्मतावत् प्रकृतेऽप्यनृतवदननिषेधस्य श्रुतिप्रकरणाभ्यां क्रतुसम्बन्धपुरुषधर्मतैवोचिता। उक्तञ्च भट्टपादैः—

स्त्र्युपायमांसभक्षादिपुरुषार्थमपि श्रितः।
प्रतिषेधः क्रतोरङ्गमिष्टः प्रकरणाश्रयाद् ॥ इति भावः ॥

*प्रपञ्चितमिति* ॥ प्रपञ्चस्तु उक्तः। ननु साधुत्वज्ञानं विनाऽपि शाब्दबोधोदयेन व्यभिचारात् कथमेतत्, साधुत्वस्य शक्तत्वरूपताया निराकरिष्यमाणत्वाच्चात आह- *वस्तुत इति*। *तद्व्यतिरेकनिर्णय इति*। असाधुत्वनिश्चये इत्यर्थः। तन्निश्चयेऽप्यपभ्रंशाद् बोधदर्शनात्। तथाचाख्याताद्भावनाबोधे बाधकाऽभाव इति भावः ॥ २१ ॥

इति भूषणसारदर्पणे धात्वाख्यातार्थनिरूपणम् ॥ १ ॥

---

परीक्षा

मीमांसकः शङ्कते-*नन्विति*। साधुत्वज्ञानस्य शाब्दबुद्धिं प्रति कारणत्वमभ्युपेत्य साधुत्वभ्रमादित्युक्तम्। वस्तुतस्तदेव नेत्याह—*वस्तुत इति*। ननु यत्संशयव्यतिरेकनिश्चयौ यदुत्पत्तिप्रतिबन्धकौ तन्निश्चयस्तद्धेतुरिति सामान्यतो व्याप्त्या साधुत्वनिश्चयस्य शाब्दबुद्धित्वावच्छिन्नं प्रति हेतुत्वादत आह-*तद्व्यतिरेकनिर्णय इति*। *न प्रतिबन्धक इति*। तद्व्यतिरेकनिर्णयेऽप्यसाधोर्लौकिकैः प्रयुज्यमानाच्छाब्दबोधस्य दर्शनेन व्यभिचारात्, असाधुत्वनिश्चयस्य प्रतिबन्धकत्वासिद्धावुक्तव्याप्त्यनवसर इति भावः ॥ २१ ॥

इति श्रीमद्भूषणसारटीकायां परीक्षानामिकायां धात्वाख्यातार्थविवरणं समाप्तम्।

# अथ लकारार्थनिर्णयः ।

अथ प्रत्येकं दशलकाराणामर्थं निरूपयति—

**वर्त्तमाने परोक्षे श्वो भाविन्यर्थे भविष्यति ।**
**विध्यादौ प्रार्थनादौ च क्रमाज्ज्ञेया लडादयः ॥२२॥**

लडादयष्टितः षट् क्रमेणैष्वर्थेषु द्रष्टव्याः । तथाहि—वर्त्तमानेऽर्थे लट् । "वर्त्तमाने लट्" (पा०सू० ३।२।१२३) इति सूत्रात् । प्रारब्धा-

---

दर्पणः

अथ लकारार्थनिर्णयः ।

लकारसामान्यार्थे निरूपिते तद्विषयकजिज्ञासानिवृत्ताववश्यवक्तव्यत्वज्ञानाद्विशेषार्थनिरूपणेऽवसरस्य सङ्गतित्वं सूचयन्नाह-*प्रत्येकमिति* । *दशलकाराणामिति* । लट् लिट् इत्यादिक्रमेण पठितानामित्यर्थः । आदेशानां वाचकत्वमिति पक्षेऽपि तिङाद्यादेशनिष्ठां बोधकतारूपां शक्तिं लडादिष्वारोप्य तद्विधानात् तदर्थकत्वं तेषामनभिमतमिति भावः ।

*प्रारब्धापरिसमाप्तत्वमिति* । विनष्टाद्यवयवप्रागभावकत्वे सत्यनुत्पन्नध्वंसान्त्यावयवकत्वमित्यर्थः । भाविभूतक्रिययोरतिप्रसङ्गवारणाय क्रमेण पदद्वयम् । लक्ष्ये

परीक्षा

लकारसामान्यस्यार्थे निरूपिते तद्विषयकसामान्यार्थाजिज्ञासानिवृत्तौ विशेषार्थविषयकजिज्ञासोत्पत्तावसरसङ्गत्या लकारविशेषार्थं निर्वक्ति—*वर्त्तमान इत्यादिना* । लडादयः षट् टितः क्रमाद्वर्त्तमानादिषु कालेषु द्रष्टव्या इत्यर्थः । नच वर्त्तमानत्वादिप्रतीतिर्लकारादेशज्ञानादिति बोधकत्वरूपा शक्तिरादेशेष्वेवोचिता, एवं चैते षट् वर्त्तमानादिष्वित्यनुपपन्नमिति वाच्यम् ? शास्त्रीयानुवादवशात्तस्याः शक्तेर्लडादिष्वारोपेण विधानाभ्युपगमात् । *प्रारब्धपरिसमाप्तत्वमिति* । अयं भावः-वर्त्तमानत्वं न शब्दप्रयोधिकरणकालवृत्तित्वम् । तादृशदिनादिरूपकालमादाय विनष्टेऽपि पाके पचतीति प्रयोगापत्तिः । नापि तादृशक्षणवृत्तित्वम्, क्रियायाः पूर्वापरीभूतावयवकसमुदायरूपायास्तादृशैकक्षणवृत्तित्वासम्भवात् । किन्तु विनष्टप्रागभावकाद्यवयवकत्वे सति, अनुत्पन्नध्वंसान्त्यावयवकव्यापारसमुदायनिष्ठं तादृशशब्दप्रयोगाधिकरणबुद्धिस्थक्षणसमूहावयवाश्रयकालवृत्तित्वमेव विवक्षितमिति । नचैवमपि यत् किञ्चिदेकक्षणे तादृशसमूहाभावादनुपपत्तिरेवेति वाच्यम् । क्रियाया यत्किञ्चिदेकक्षणवृत्त्ययं पचेत् तादात्म्यारोपेण पचतीत्यादिव्यवहाराभ्युपगमात् । अत एव निवृत्तभेदादतिकथनमिति । यद्यपि "भावकालकारकसंख्याश्चत्वारोऽर्था आख्यातस्य" इति निरुक्तभाष्ये प्रतिपादितमिति वर्तमानत्वादिकं क्रियाऽतिरिक्तमादाय कालवृत्ति निर्वक्तुमुचितम्, तथाऽपि उपाधिमन्तरा तस्य निर्वक्तुमशक्यतया धातुवाच्यक्रियाभि-

**परिसमाप्तत्वं, भूतभविष्यद्भिन्नत्वं वा वर्त्तमानत्वम् । पचतीत्यादावधिश्रयणाद्यधःश्रयणान्ते मध्ये तदस्तीति भवति लट्प्रयोगः ।**

---

दर्पणः

लक्षणं ग्राहयति—*पचतीति* । *अधिश्रयणादीति* । साध्यत्वप्रकारकप्रतीतिविषयपूर्वापरीभूतावयवसमुदायस्यैव क्रियात्वादिति भावः ।

*तदिति* । उक्तवर्त्तमानत्वमित्यर्थः । यद्यपि भावकालकारकसंख्याश्चत्वारोऽर्था आख्यातस्येति निरुक्तभाष्यात् क्रियातिरिक्तकालस्यैव वर्त्तमानत्वादिकं प्रतीयते, तथापि निरुपाधिकस्य तस्य वर्त्तमानत्वादिना प्रत्येतुमशक्यत्वादुपाधिभूतक्रियामादायैव तत्र तत्त्वस्य वक्तव्यतयाऽऽवश्यकत्वात् क्रियायामेव तत्त्वमुक्तमित्यवधेयम् ।

वस्तुतस्तु दण्डमुहूर्त्ताद्यात्मकः खण्डकाल एव वर्त्तमानत्वादिना लडादिवाच्यः । तद्गतं वर्त्तमानत्वं च तत्तच्छब्दप्रयोगाधिकरणत्वमेव तदादिन्यायेन तत्तच्छब्दप्रयोगाधिकरणत्वेनाऽनुगमाच्च न शक्त्यानन्त्यम् ।

यद्येवमपि तत्तत्कालत्वेन तत्तत्कालबोधस्यानुभवसिद्धानुपपत्तिरिति विभाव्यते; तदास्तु शब्दप्रयोगाधिकरणवृत्तिकालत्वव्याप्यधर्मत्वेनोपलक्षिततत्तत्कालत्वावच्छिन्न एव लटः शक्तिः । क्रियारम्भात् पूर्वं समाप्त्युत्तरं चाऽधीते पचतीत्यादिप्रयोगापत्तिस्तु स्ववृत्तिप्रागभावाऽप्रतियोगिवृत्तित्वस्ववृत्तिध्वंसाऽप्रतियोगिप्रकृतक्रियाऽनुयो-

परीक्षा

न्नक्रियामादायव काले वर्तमानत्वादिकं निर्वचनीयम्, तदपेक्षया तत्तद्धात्वर्थक्रियामादाय तन्निर्वचनीयमित्येवोचितम् ।

वस्तुतस्तु तत्तत्कालत्वेनोपाधिना वक्तृबुद्धिविषयतावच्छेदकत्वोपलक्षितेन तत्तत्काल एव लडादीनां शक्तिः कल्प्यते । एवं च तदादिन्यायेन तदाख्याने सा । न च तत्कालत्वावच्छिन्नेष्वाद्यादिरूपे काले लडादीनां शक्तिश्चेत्तादृशकालाधारकक्रियायां देवदत्ताश्रयकत्वमबाधितमादाय पचिक्रियाया आरम्भात्पूर्वं तादृशक्रियाध्वंसानन्तरं च पचतीतिप्रयोगापत्तिरिति वाच्यम् । कर्ता ह्याख्यातार्थः; स च व्यापाराश्रय एव । तत्र व्यापारस्य धातुलभ्यत्वादनन्यलभ्यस्य तत्तच्छब्दप्रयोगकालावच्छिन्नव्यापारतावच्छेदकसम्बन्धावच्छिन्नाश्रयता या लडर्थतावच्छेदकता तया दोषाभावात् । एवं वर्तमानसामीप्यमपि लडर्थः क्वचित् । "वर्तमानसामीप्ये वर्तमानवद्वा" इति सूत्रात् । वर्तमानसामीप्यं चातीतानागतसाधारणम् । तच्च क्रियानिष्ठम् । प्रकृतशब्दप्रयोगाधिकरणक्षणध्वंसाधिकरणक्षणोत्पत्तिकत्वप्रकृतशब्दप्रयोगाधिकरणक्षणवृत्तिध्वंसप्रतियोगिक्षणवृत्तित्वान्यतररूपम् । 'कदाऽऽयास्यसि' इत्युक्ते एष आगच्छामीत्युक्ते आद्ये कदा गतोऽसीत्यादौ अन्त्यम्प्रतीयते । वर्तमानसामीप्यं च विवक्षाधीनं क्रियायां प्रधानभूतायां विशेषणतया भासते । निरुक्तवर्त्तमानसामीप्याश्रयगमनानुकूलाक्रियेति बोधात् । *भूतभविष्यद्भिन्नत्वं वेति* । अत्र वाकारोऽनास्थायां पूर्वापेक्षयाऽस्य गुरुत्वात् । एवं भूतत्वभविष्यत्वयोरप्येवं निर्वचनस्यैतत्तुल्यतया एतत्पक्षे कार्यमित्यन्योन्याश्रयापत्तिश्च स्यादितिपूर्वलक्षणमेव युक्तमिति । *मध्ये तदस्तीति* । मध्यकालवृत्तिव्यापारे निरुक्ते वर्तमानत्वमस्तीत्यर्थः ।

आत्माऽस्ति पर्वताः सन्तीत्यादौ तत्तत्कालिकानां राज्ञां क्रियाया अनित्यत्वात्तद्विशिष्टस्योत्पत्त्यादिकमादाय वर्त्तमानत्वमूह्यम्। उक्तं हि भाष्ये–"इह भूतभविष्यद्वर्त्तमानानां राज्ञां क्रिया स्तिष्ठतेरधिकरणम्" इति

---

दर्पणः

गिकत्वाभ्यां विशेषितेन आधेयतासम्बन्धेनाऽन्वयनियमोपगमेन वारणीया।

यत्र तु खण्डक्रियैव धात्वर्थस्तत्र शुद्धाधेयतासम्बन्धेनैव तदन्वयान्नाऽऽत्माऽस्तीत्यादा दोष इति। भूतभविष्यद्भिन्नत्वं वेत्यत्र वाकारोऽनास्थायाम्। पूर्वलक्षणापेक्षयाऽस्य गुरुत्वाद्भविष्यत्त्वस्यापि वर्त्तमानत्वघटितत्वेन तद्ग्रहे, भविष्यत्वग्रहे च तदवच्छिन्नभिन्नत्वरूपवर्त्तमानत्वग्रह इत्यन्योऽन्याश्रयाच्च। एवं भूतत्वमादायाऽप्यन्योन्याश्रयो द्रष्टव्यः।

ननु सत्ताश्रयत्वादीनां धात्वर्थत्वे तत्राऽसङ्गतिः तेषामखण्डत्वेनाऽवयवघटितोक्तलक्षणवर्त्तमानत्वासम्भवादत आह—*आत्मास्तीति*। *अनित्यत्वादिति*। सावयवत्वेन प्रागभावप्रतियोगित्वे सति ध्वंसप्रतियोगित्वादित्यर्थः। तद्विशिष्टस्यानित्यराजक्रियादिविशिष्टसत्तादिरूपार्थस्येत्यर्थः। तथाच केवलसत्तादिरूपार्थे तदसत्त्वेऽप्युक्तविशेषणविशिष्टे तस्मिन् विशेषणांशमादाय तत्सत्त्वं नाऽनुपपन्नमिति भावः।

यद्वा तद्विशिष्टेत्यस्य तदा अव्यहितत्वादनित्यत्वस्यैव परामर्शात् तादृशक्रियागतं वर्त्तमानत्वमारोप्य सत्ताद्यर्थको लडित्यर्थः। तत्र स्वोत्प्रेक्षितत्वं निरस्यति–*उक्तं हीति*। *तिष्ठतेरधिकरणमिति*। आधेयतासम्बन्धेन तादृशक्रियात्मककालविशिष्टत्वात् तासामिति भावः। अनेन साधुत्वं लभ्यते। लक्षितकालस्येव वस्तुतस्त्वित्यादिना उक्तकल्पस्यैव क्रियायामाधेयतयान्वयलाभात्।

परीक्षा

नन्वात्मास्ति पर्वताः सन्तीत्यादौ प्रधानीभूता याऽऽत्मधारणानुकूलक्रिया व्यापारभूता तस्यां निरुक्तप्रारब्धापरिसमाप्तत्वं नास्तीति कथं लटः साधुत्वमत आह—*आत्माऽस्तीति*। *राज्ञामिति*। इदमुपलक्षणं यस्य कस्यचित् क्रियायाः(१)। राज्ञामिति तु राज्ञः प्राधान्यात्तदुक्तिः। *अनित्यत्वादिति*। राजादिकर्तृकक्रियायां प्रागभावप्रतियोगित्वध्वंसप्रतियोगित्वरूपमनित्यत्वमस्तीति प्रारब्धापरिसमाप्तत्वस्य वर्तमानत्वस्य सत्वादित्यर्थः। *तद्विशिष्टस्य*—राजादिक्रियाविशिष्टस्य।

अयम्भावः—आत्मास्तीत्यादौ धातूनामनेकार्थत्वाद्राजादिकर्तृकक्रियाविशिष्टा आत्मधारणरूपफलानुकूलव्यापाररूपा क्रिया धारणार्थः। एवं च विशेष्यतया भूतक्रियाया अनित्यत्वात्तद्विशिष्टस्याप्यनित्यत्वमितिनिरुक्तवर्तमानत्वस्य सम्भव इति। उक्तार्थे भाष्यकारसम्मतिमाह—*उक्तञ्चेत्यादिना*। राजा तिष्ठतीत्यादौ स्वतो वर्तमानत्वस्य सम्भवः। आत्मा तिष्ठति, पर्वतास्तिष्ठन्तीत्यादौ तु राजादिक्रियामादायोक्तरीत्या वर्तमानत्वम्। *तिष्ठतेरिति*। स्थित्यादेरप्युपलक्षणम्। एवञ्च राज्ञः स्थितिर्भूतादिभेदेन भिन्ना, आत्मादिस्थितेर्भेदिका, अस्मिन्नर्थे हरिसम्मतिमप्याह—

---

(१) अधिकरणमिति शेषः।

परतो भिद्यते सर्वमात्मा तु न विकम्पते।
पर्वतादिस्थितिस्तस्मात् पररूपेण भिद्यते॥

इति वाक्यपदीये च। एवम् "तम आसीत्" "तुच्छेनाभ्यपिहितं यदासीत्" "अहमेकः प्रथममासम्, वर्त्तामि च भविष्यामि च" इत्यादिश्रुतयोऽपि योज्याः।

तच्च वर्त्तमानत्वादि लडादिभिर्द्योत्यते। क्रियासामान्यवाचकस्य तद्विशिष्टे लक्षणायां लडादेस्तात्पर्य्यग्राहकत्वेनोपयोगात्।

---

दर्पणः

*परतो भिद्यते इति*। सर्वं पच्यादिधात्वर्थसामान्यं परतः—स्वाऽपेक्षयाऽन्येन वर्त्तमानत्वादिना। *भिद्यते*-व्यावर्तते। आत्मास्तीत्यत्रात्मादिपदमात्मसत्ताद्यर्थकं न विकल्पते सनातनत्वेन निरवयवत्वादुक्तविशेषणसम्बन्धाभावेन भेदाऽनुमितिविषयो न भवतीत्यर्थः। तथाचाऽत्मास्तीति प्रयोगाऽनुपपत्तिरिति पूर्वार्द्धार्थः। समाधत्ते-*तस्मादिति*। विशेषाऽतिरिक्तपदार्थस्य स्वतो व्यावृत्तत्वासम्भवादित्यर्थः। पर्वतादीत्यादिनाऽत्यादिपरिग्रहः।

*पररूपेणेति*। परस्य राजक्रियादिरूपार्थस्य, रूपेण-धर्मेण वर्त्तमानत्वादिना भिद्यते इत्युक्त एवार्थः। *तम इत्यादि*। तम आसीदित्यादयो भूतक्रियागतभूतत्वारोपात्। *भविष्यामि चेति*। भाविक्रियागतभविष्यत्त्वारोपाच्च योज्या इत्यर्थः। पक्षद्वयस्यैवाऽऽकरारूढतां प्रदर्शयन् प्रथमद्योतकत्वपक्षे उपपत्तिमाह-*तच्चेति*। *क्रियासामान्येति*। कालसामान्यवृत्तिक्रियावाचकस्येत्यर्थः।

*तद्विशिष्टे*। वर्त्तमानकालादिविशिष्टे, वर्त्तमानत्वादिविशिष्टे वा व्यापारे इत्यर्थः। लडादेरित्यादिना लिडादिपरिग्रहः। *उपयोगादिति*। स च प्राक्प्रतिपादितः। तथाच लडाद्यादेशत्वेन तिवादीनां वर्त्तमानत्वादिद्योतकत्वान्नापाक्षीदित्यादा वर्त्तमानक्रियाप्रतीतिः। क्रियासामान्यशक्तधातोस्तत्तद्विशिष्टे लक्षणयैव तत्तद्विशिष्टक्रियाबोधोपपत्तौ पृथग्वर्त्तमानत्वादौ तेषां शक्तिकल्पने गौरवादिति भावः। वाच-

परीक्षा

*परत इत्यादिना*। आत्मा—विशेष्यतया भासमानम्। न विकम्पते-न तस्य रूपं भिन्नं भवति। *तस्माद्*-विशेष्यस्य स्वतो व्यावृतत्त्वासम्भवात्।

*पररूपेणेति*। परस्य राजादेर्या क्रिया तस्या यद्रूपं तद्धर्मो वर्तमानत्वादिस्तेन भिद्यत इत्यर्थः। एवं वर्तमानत्ववद्भूतत्वभविष्यत्वविषयेऽपि तथैव भूतत्वं भविष्यत्वं चोपपादनीयम्।

एवमेव श्रौतप्रयोगस्याप्युपपत्तिः कार्येत्याह—*तुच्छेनेति*। *तुच्छेन*—अज्ञानेन। प्रभुर्नित्यमात्मस्वरूपम्। *अभ्यपिहितम्*-आवृत्तस्वरूपम् यदासीदित्यर्थः।

नासम् अत्र भूतत्वस्य, भवामीत्यत्र निरुक्तवर्तमानत्वस्य। यदुक्तं दशलकाराणामर्थ इति तत्राद्यशब्दो न वाच्यार्थपरः, किन्तु द्योत्यार्थपर इत्याह—*तच्चेति*। *वाचकस्येति*। धातोरिति शेषः। *तद्विशिष्टे*—वर्तमानत्वादिविशिष्टे। *लडादेः*—लडाद्यादेशस्य। *तात्पर्यग्राहकत्वेन*—इत्यनेन द्योतकत्वं स्पष्टतयैवोक्तम्।

अन्वयव्यतिरेकाभ्यां तद्रूपं लडादिवाच्यमेव। अन्यथा प्रत्ययानां वाचकत्वविलोपापत्तिरित्यपि पक्षान्तरम्।

लिडर्थमाह—*परोक्षे इति*। "परोक्षे लिट्" (पा०सू०३।२।११५) इतिसूत्रात्। कालस्तावद्द्यतनानद्यतनभेदेन द्विविधः। द्विविधोऽपि भूतभविष्यद्रूपः। तत्रानद्यतने भूते परोक्षे लिडित्यर्थः। तेनाद्यतने भूते, अनद्यतने भविष्यति, भूतेऽप्यपरोक्षे च न लिट्प्रयोगः। परोक्षत्वं च-साक्षात्करोमीत्येतादृशविषयताशालिज्ञानाविषयत्वम्।

---

दर्पणः

कत्वपक्षमवलम्ब्याऽऽह—*अन्वयव्यतिरेकाभ्यामित्यादि*।

नच तक्रकौण्डिन्यन्यायात् कर्त्राद्यर्थबाधः, शक्तताऽवच्छेदकभेदात्। किञ्चैवं "लः कर्मणि"इतिसूत्रं निरवकाशं स्यात्। स्थलान्तरेऽपि विध्याद्यर्थैर्बाधसम्भवादितिभावः। *अन्यथा*—अन्वयव्यतिरेकयोः शक्त्यग्राहकत्वे। *विलोपापत्तिरिति*। सर्वत्र प्रकृत्यैव तत्तत्प्रत्ययार्थत्वाभिमतबोधसम्भवादिति भावः। अधिकं सुबर्थनिर्णये वक्ष्यते।

*अनद्यतने भूत इति*। "भूते" ( पा० सू० ३।२।८४ ) इति "अनद्यतने लङ्" (पा० सू० ३।२।१११ ) इति सूत्राभ्यां तत्तत्पदानुवृत्तिरिति भावः। *न लिट्प्रयोग इति*। उक्तार्थस्य बाधात् पपाचेत्यादिजबोधानन्तरमनद्यतनत्वादिसन्देहाऽनुदयाद् भूतत्वादिवत्तयोरपि तद्वाक्यजबोधे क्रियांशे विशेषणतया भानमभ्युपेयम्। तच्च वाचकतां द्योतकतां वा विनाऽनुपपन्नमिति लिटस्तदभ्युपगम आवश्यक इति भावः।

ननु परोक्षत्वं प्रत्यक्षान्यज्ञानविषयत्वम्। तथाच प्रत्यक्षक्रियायामपि श्रुतानुमितत्वयोः सत्त्वात् पपाचेत्यादिप्रयोगापत्तिरत आह—*परोक्षत्वञ्चेति*। यथाश्रुतप्रत्यक्षाविषयत्वस्योपनीतक्रियायामभावेन तत्र पपाचेत्यादिप्रयोगानुपपत्तिरत आह—*साक्षात्करोमीति*। साक्षात्करोमीत्येतत्प्रतीतिसाक्षिकलौकिकविषयत्वाभा-

परीक्षा

अथ लडादीनां वर्तमानत्वादिवाचकत्ववादिनो मतमाह—*अन्वयेत्यादिना*। कर्त्राद्यर्थबाधस्तु वक्तुमशक्यः। "लःकर्मणि" इति सूत्रारम्भसामर्थ्यात्। शक्ततावच्छेदकभेदाच्च। अन्यथा विध्याद्यर्थैरपि बाधापत्तिरितिभावः। अन्यथा—शक्तिग्राहकयोरन्वयव्यतिरेकयोरनङ्गीकारे। एतत्पक्षे वर्तमानलस्य प्रत्ययार्थत्वेऽपि प्रत्ययार्थः कर्ता यथा भावनायां विशेषणं भवति; तथा वर्तमानत्वमपि, व्युत्पत्तिवैचित्र्यादिति बोध्यम्। *विलोपापत्तिरिति*। सर्वत्रैव लक्षणया प्रकृत्यर्थत्वस्योपपादनसम्भवादिति भावः। *अनद्यतन इति*। "अनद्यतने लङ्" इति सूत्रादनद्यतन इत्यस्य तत्रानुवृत्तेः। भूते इति त्वधिकारलब्धम्। *तेन*—'अनद्यतन' इति विशेषणेन। *प्रयोग इति*। उक्तार्थस्य बाधादिति शेषः। लिटः प्रागुक्तार्थद्योतकत्वाभ्युपगमेन 'पपाच' इत्यादिवाक्यजन्यशाब्दबोधानन्तरं क्रियाविशेष्यको भूतत्वभावित्वप्रकारकोऽनद्यतनत्वापरोक्षत्वप्रकारको वा सन्देहोऽत एव न भवति। ननु परोक्षत्वं प्रत्यक्षान्यज्ञानविषयत्वम्। एवं च या क्रिया प्रत्यक्षा तस्यामप्यनुमित्साजन्यानुमितिविषयत्वसम्भवात् 'पपाच' इति प्रयोगापत्तिरत आह—*परोक्षत्वं चेति*। *इत्येतादृशविषयताशालि*—एता-

नच "क्रिया नामेयमत्यन्तापरदृष्टा पूर्वापरीभूतावयवा न शक्या पिण्डीभूता निदर्शयितुम्" इतिभाष्यात् तस्या अतीन्द्रियत्वेन परोक्षे इत्यव्यावर्त्तकमितिशङ्क्यम् । पिण्डीभूताया निदर्शयितुमशक्यत्वेऽप्यवयवशः साक्षात्करोमीति प्रतीतिविषयत्वसम्भवात् । अन्यथा 'पश्य मृगो धावति' इत्यत्र तस्या दर्शनकर्मता न स्यादिति प्रतिभाति ।

---

दर्पणः

ववत्त्वमित्यर्थः ।

उक्तस्थले प्रत्यक्षविषयतासत्त्वेऽपि तादृशविलक्षणविषयत्वाभाववत्त्वमक्षुण्णमिति न तदनुपपत्तिः । प्रत्यक्षं तादृशशब्दप्रयोक्तुर्ग्राह्यम् । ननु दशमस्त्वमसीत्यादौ शब्दादप्यपरोक्षज्ञानस्य दृष्टत्वेन शब्दजन्यतादृशज्ञानविषयेन्द्रियासम्बन्धक्रियायां लिडनुपपत्तिरितिचेद् ? न । तत्रापि शाब्दज्ञानसहकृतमनसैव दशमसाक्षात्कारो, न तु शब्दात् । लौकिकविषयतानियामकेन्द्रियसंयोगादेरभावेन शाब्दे तद्वत्त्वाऽसम्भवात् । अत एव तत्त्वमसीत्याद्याचार्योपदेशशमदमादिसंस्कृतं मन आत्मदर्शने कारणमिति गीताभाष्ये उक्तमिति सर्वं समञ्जसम् ।

"क्रिया नामेयम्" इति भाष्ये साऽसावनुमानगम्येति शेषः । क्रिया-साध्यत्वेन प्रतीयमाना, इयं पचतीत्यादिव्यवहारविषयीभूता । यतः पूर्वापरीभूता क्रमिकानेकव्यापारसमूहात्मिका, अतोऽत्यन्तापरदृष्टा—परेण प्रत्यक्षप्रमाणेनाऽत्यन्तमदृष्टा तज्जन्यज्ञानाऽविषया इति यावत् । *पिण्डीभूतेति* । अवयवानामाशुविनाशित्वेन पिण्डस्यैवाभावादिति भावः । ननु तर्हि तस्यां किं प्रमाणमत आह—*साक्षादिति* । विक्लित्त्यादिरूपकार्याऽनुमेयेति । *अन्यथेति* । क्रियाया अवयवशोऽपि साक्षात्काराऽनभ्युपगमे इत्यर्थः । *प्रतिभातीति* । उक्तार्थ एवाऽस्मद्बुद्धिविषयो भवतीत्यर्थः ।

ननु क्रियाऽवयवा अपि क्रियावदतीन्द्रिया एव ; यथा पचेरुदकसेचनादयोऽवयवास्तथा तेषामप्यवयवास्तेऽपि समूहरूपेणैव धातुवाच्याः । यस्तु क्षणाऽवच्छिन्नस्तद्रूपो-

परीक्षा

दृशानुव्यवसायनिरूपितविषयताशालि । एवं च प्रत्यक्षविषयक्रियायां तादृशानुव्यवसायनिरूपितविषयताश्रयप्रत्यक्षविषयत्वसत्त्वेन बाधान्न तत्र 'पपाच' इति प्रयोगः ।

परोक्ष इति विशेषणस्य व्यावर्त्यं दर्शयितुमाह—*नचेति* । *अत्यन्तापरदृष्टा*—परेण सर्वतो बलवता प्रत्यक्षेणात्यन्तमदृष्टा । अत्र हेतुमाह—*पिण्डीभूतेति* । समुदायभावमापन्नानामवयवानामाशुविनाशित्वेन पिण्डीभावस्यैवासम्भवादिति भावः । अत एवानुमानगम्येति भाष्ये उक्तम् । अनुमानं च तत्कृतदर्शनेन बोध्यम् । एकावयवस्य प्रत्यक्षत्वमादाय यथा—'पश्य मृगो धावति' इति प्रयोगस्तथा पच्धात्वर्थक्रियाया अपि यत्र प्रत्यक्षत्वम् ; तत्र लिडन्तप्रयोगवारणाय परोक्षे इति विशेषणमित्याशयेनाह—*पिण्डीभूताया इति* । *अन्यथा*—अवयवशोऽपि तस्याः साक्षात्कारानभ्युपगमे ।

धिकृत्य "लुङ्" (पा०सू०३।२।१०) इति सूत्रात्। अत्र विद्यमानध्वंसप्रतियोगित्वं भूतत्वम्। तच्च क्रियायां निर्बाधमिति विद्यमानेऽपि घटे घटोऽभूदिति प्रयोगः। विद्यमानध्वंसप्रतियोगी घटाभिन्नाश्रयक उत्पत्त्याद्यनुकूलो व्यापार इति बोधः॥

अयमत्र संग्रहः—कालो द्विविधः। अद्यतनोऽनद्यतनश्च। आद्यस्त्रिविधः। भूतभविष्यद्वर्त्तमानभेदात्। अन्त्यो द्विविधः। भूतो भविष्यश्च। तत्र वर्त्तमानत्वे लट्। भूतत्वमात्रे लुङ्। भविष्यत्तामात्रे लृट्, हेतुहेतुमद्भावाद्यधिकार्थविवक्षायामनयोर्लृङ्। अनद्यतने भूतत्वेन विवक्षिते लङ्। तत्रैव परोक्षत्वविवक्षायां लिट्। तादृशे भविष्यति लुट्, इति द्रष्टव्यम्॥

लृङर्थमाह—*सत्यामिति*॥ क्रियाया अतिपत्तिरनिष्पत्तिस्तस्यां

---

दर्पणः

तियोग्युत्पत्तिकत्वं भूतत्वम्। अत एव नाशस्य विद्यमानतादशायामपि, विनष्टो घट इति प्रयोगः। तदुत्पत्तेर्वर्त्तमाननाशप्रतियोगित्वात्। तथाच यत्रोत्पत्तिरेव धात्वर्थस्तत्रोत्पत्तेर्द्वैधाभानप्रसङ्गोऽत आह—*अत्रेति*। भूत इति सूत्रे इत्यर्थः॥ वर्त्तमान इत्यादि। नचोक्तदोषः। अस्मन्मते नश्यत्यादेर्नाशाऽनुकूलव्यापाराऽर्थकतया कालाऽन्वयस्यापि व्यापार एव समर्थितत्वेन च तदप्रसक्तेरुत्पत्त्यघटितत्वेन द्वैधाभानाऽसम्भवाच्च। *क्रियायामिति*। फलानुकूलायां तस्यामित्यर्थः। विद्यमानेऽपीत्यपिना समानप्रत्ययोपात्तत्वप्रत्यासत्त्याऽऽख्यातार्थकारके कालान्वयोपगमे उक्तप्रयोगानुपपत्तिः सूच्यते॥

नैयायिकास्तु—उत्पत्तिघटितत्वेन लाघवादुक्तार्थ एव भूतपदस्य शक्तिः। परन्तु नश्यत्यादौ नाशातिरिक्तस्य व्यापारान्तरस्याननुभवात्तत्रोत्पत्तिघटिते प्रत्ययस्य लक्षणावश्यकीत्याहुः॥

परीक्षा

*भूतसामान्य इति*। एतेन परोक्षत्वानद्यतनत्वयोर्व्यवच्छेदः। *विद्यमान इति*। प्रकृतशब्दप्रयोगाधिकरणक्षणे विद्यमान इत्यर्थः। अत्रापि पूर्ववन्मध्यवर्त्तिक्रियाक्षणे पूर्वक्रियाध्वंसमादायापाक्षीदित्यादिप्रयोगापत्तिवारणाय 'तत्तत्फलजनकचरमक्रियाविशेष्यकस्य तादृशातीतत्वस्य ज्ञानं कारणमिति वाच्यम्। *क्रियायाम्-* धात्वर्थक्रियायाम्। एवं च 'नष्टो घट' इत्यादौ नाशोत्पत्त्यनुकूलव्यापारस्य धात्वर्थत्वं वाच्यम्। तद्घटकोत्पत्तौ वर्त्तमानध्वंसप्रतियोगित्वस्यान्वय इति।

*अनयोः—भूतभविष्यतोः। *अनिष्पत्तिरिति*। अनिष्पत्तिसम्भावनमिति यावत्। अनिष्पत्तिरित्यत्र यः पत—धातुस्तस्य सम्भावनार्थत्वात्। यस्मिन्देशे काले वा ययोः क्रिययोः सम्भवस्तदन्यस्मिन् देशे काले वा तयोः सम्भावनं प्रसञ्जनम्, यत्र बाधापत्तिस्तत्र चाहार्यं एव ज्ञानं धातुवाच्यम्। यत्र तु न तथा तत्रोत्कटकोटिकज्ञानरूपसंशय एव। यथा—'यदि वर्षसहस्रमजीविष्यत्तदा पुत्रशतमजनिष्यत्' इति। अत्र यदि शब्दार्थोऽनिर्धारणं कालविशेषश्चार्थः। व्यापकत्वम्—द्वितीयार्थः। एवं

**गम्यमानायाम्, भूते भाविनि हेतुहेतुमद्भावे सति लृङित्यर्थः। "लिङ्-निमित्ते लृङ् क्रियातिपत्तौ" (पा०सू० ३।३।१३९) इति सूत्रात्। लिङो निमित्तं हेतुहेतुमद्भावादि। यथा—'सुवृष्टिश्चेदभविष्यत् सुभिक्षमभ-**

दर्पणः

*भूते भाविनीति* ॥ कार्यकारणभावापन्नप्रकृत्यर्थयोर्भूतत्वे भविष्यत्त्वे वा गम्यमान इत्यर्थः ॥ *हेतुहेतुमद्भावादीति* ॥ आदिना शक्त्यादिपरिग्रहः। तत्र भविष्यदर्थे उदाहरणमाह—*सुवृष्टिश्चेदिति* ॥ अत्रैकस्यैव धात्वर्थस्य कर्तृरूपोपाधिभेदेन कार्य्य-

परीक्षा

चानिर्धारितकालविशेषवृत्तिभविष्यद्धेतुभूतसहस्रवर्षव्यापकजीवित्वप्रकारकसम्भावनापकर्त्तृका तत्कर्त्तृकालकालिकभविष्यकार्यभूतशतपुत्रकर्मकोत्पत्यनुकूलफलव्यापारसम्भावनेति बोधः। अत्र सहस्रजीवित्वस्य कर्त्तरि बाधज्ञानसत्वे—आहार्यज्ञानात्मकमेव सम्भावनम्, तस्यासत्वे तु तादृशसंशयरूपं तच्छाब्दबोधविषय इति बोध्यम्। एवं भूतेऽप्युक्तार्थे लृङ्। यथा—'यदि पर्वताः कोमला अभविष्यन्, तदा आरण्यकैरेवाभक्षयिष्यन्' इति। अत्र यदि शब्दस्यातत्वं कालविशेषश्चार्थः लृङश्चातीतत्वं हेतुहेतुमत्वप्रसक्तिसम्भावनाचार्थः। असत्वम्—अभावप्रतियोगित्वं तद्घटकाभावप्रतियोगितया धात्वर्थोऽन्वेति। तत्रैवाधिकरणत्वेन प्रथमान्तार्थस्याऽप्यन्वयः। एवं च पर्वतवृत्त्यभावप्रतियोगिहेतुभूतवर्त्तमानध्वंसप्रतियोगिकोमलकर्त्तृकभवनप्रसक्तिसम्भावनासमानकालिकारण्यककर्त्तृककार्य्यभूतातीतव्यापारजन्यभक्षणसम्भावनाविषय इति बोधः। यदि त्वेतादृशे विषये योग्यतानिश्चयरूपबाधकसत्वान्न संशयसम्भव इति विभाव्यते; तदा—आहार्य्य एव बोधः। नन्वेवं 'वह्निना सिञ्चति'इति वाक्यादप्यहार्यबोधः स्यात्, इष्टत्वात्। अथवा यदिपद—तदापद—लिङ्समभिहारे एवाहार्यबोधः। आहार्यज्ञानस्येच्छाजन्यतया वह्निकरणकसेचनज्ञानं जायतामितीच्छासत्वे तु पदार्थोपस्थितिमूलको मानस बोध एव वह्निना सिञ्चतीत्यादिभ्यो भवति। एवं 'पर्वतो यदि निर्वह्निः स्यात्तदा, निर्धूमः स्यादित्यादितर्कस्थलेऽपि। "हेतुहेतुमतोर्लिङ्"इति लिङ्। तदर्थश्च वर्त्तमानत्वं प्रसञ्जनं च। आपाद्यव्याप्यापादकवत्ताज्ञानानन्तरपर्वतमाननिर्वह्नित्वसत्ताप्रसञ्जनजन्यतत्कालिकनिर्धूमत्वप्रसञ्जनमिति बोधः। अत्राप्याहार्यबोध एव। यदित्वाहार्यशाब्दबोधो नास्तीत्येव सिद्धान्तः, तदा यत्र हेतुहेतुमद्भावे लिङ्लृटौ, तत्राऽपि तत्तद्वाक्यघटकपदजन्याविश्रृङ्खलपदार्थोपस्थितिरेव तदनन्तरं विशेष्ये विशेषणं, तत्रापि विशेषणान्तरमिति रीत्या मानससंशय एव स्वीकार्य्यः।

अन्ये तु हेतुहेतुमद्भावे यत्र लिङ्; तत्र तत्समभिव्याहृतधातोस्तत्तत् क्रियाप्रसक्त्यभावे लक्षणादिपदसमभिव्याहारस्तात्पर्यग्राहकः। यथायथमतीतानागतत्वं हेतुहेतुमद्भावश्च लृङर्थस्तस्याभावेऽन्वयः। एवं च 'पर्वता यदि कोमला अभविष्यन्' इत्यादौ अतीतकालसम्बन्धिपर्वतकर्तृककोमलभवनाभावप्रयोज्य—अरण्यककर्तृकातीतव्यापारजन्यभक्षणाभाव इत्येवान्वयबोधः। प्रतियोगिप्रसिद्धिश्च बौद्धी द्रष्टव्या। एवमेव 'यदि वर्षसहस्रम्' इत्यादावनागतकालविषयको बोधोऽभावविषयकः; तर्कस्थले तु पूर्वोक्त एवार्थ इत्याहुः। तत्राभावबोधस्य वक्तृतात्पर्याविषयत्वात् चमत्कारानाधायकत्वाच्च। यत्र त्वभावबोध एव वक्तृतात्पर्यम्, तत्र [illegible] —यथा सुवृष्टिश्चे-

विष्यत्' । 'वह्निश्चेत् प्राज्वलिष्यद् ओनमपक्ष्यत्'इत्यादौ । अत्र वह्न्यभिन्नाऽऽश्रयकप्रज्वलनाऽनुकूलव्यापाराभावप्रयुक्त-ओदनाभिन्नाश्रयकविक्लित्त्यनुकूलव्यापाराभाव इति शाब्दबोधः । एवं रीत्या द्रष्टव्यम् । अयञ्च अर्थनिर्देश उपलक्षणम् । अर्थान्तरेऽपि बहुशो विधानदर्शनात् । प्रसिद्धत्वादेष्वेवार्थेषु शक्तिरन्यत्र लक्षणेति मतान्तररीत्या चोक्तम् । एतेषां क्रमनियामकश्चानुबन्धक्रम एव । अत एव 'पञ्चमो

---

दर्पणः

कारणभावाऽवगतिरुत्तरत्र तु स्वरूपतो भिन्नयोस्तयोरिति विशेषः । *व्यापाराभाव इति* ॥ धात्वर्थयोर्भविष्यत्त्वप्रदर्शनार्थं परमभावविशेष्यकबोधोत्कीर्तनम् । वह्न्यभिन्नाश्रयकभाविप्रज्वलनजन्यौदनाऽऽश्रयकविक्लित्त्यनुकूलव्यापार इति शाब्दबोधस्तूचितः ॥ *प्रयोज्य इति* ॥ व्यापाराभावान्वयिप्रयोज्यत्वोत्कीर्तनं च वह्निप्रज्वलनौदनपाकयोः कार्य्यकारणभावप्रदर्शनाय । यदभावो यदभावप्रयोज्यः स तज्जन्य इति नियमात् । तथाच प्रकृते ओदनपाकाभावे वह्निप्रज्वलनाभावप्रयोज्यत्वेऽवगते तत्प्रतियोगिनोस्तयोः कार्य्यकारणभावः सुबोधो भवतीति भावः । एवं भूते ।

परस्परेण स्पृहणयिशोभं न चेदिदं द्वंद्वमयोजयिष्यत् ।
अस्मिन् द्वये रूपविधानयत्नतः पत्युः प्रजानां विफलोऽभविष्यत् ॥

यदि देवदत्तो नाऽभविष्यदित्यादि बोध्यमित्याह-*एवं रीत्येति* ॥ *अयञ्चेति*॥ "वर्तमाने लट्" इत्यादिनोपात्त इत्यर्थः ॥ *अर्थान्तरेऽपि* ॥ अर्हप्रशंसाप्राप्तकालाद्यर्थेऽपीत्यर्थः । एषु—वर्त्तमानत्वादिषु, शक्तिः—सङ्केतरूपा पदार्थान्तररूपा वा, अन्यत्र-अर्हाद्यर्थे ॥ *मतान्तररीत्या चेति* ॥ बोधकत्वमेव शक्तिरिति वदतामस्माकं तु केषाञ्चित् प्रयोगोपाधित्वमितरेषां शक्यत्वमेवेति भावः ॥ *अनुबन्धक्रम इति* ॥ अकाराद्यनुबन्धक्रम इत्यर्थः । ननु यत्र प्रत्ययस्य तिबादेरदर्शनं तत्र द्योतकत्वं वाचकत्वं वेति पक्षद्वयेऽप्यनुपपत्तिः । वाचकस्य द्योतकस्य वा सत्त्वेन वर्त-

परीक्षा

त्यादिना* । अत्राभावयोः प्रयोज्यप्रयोजकभावप्रदर्शनं प्रतियोगिनोः प्रयोज्यप्रयोजकभावप्रदर्शनाय कारणाभावस्य कार्य्याभावप्रयोजकत्वात् । *अयञ्चेति* । "वर्त्तमाने लट्" "परोक्षे लिट्" इत्यादिनोक्तः । *अर्थान्तरेऽपि*—अर्हः प्रशंसाप्राप्तकालादिषु । *एष्वेव* । वर्त्तमानत्वादिष्वेव । *शक्तिः-* सङ्केतरूपा, पदार्थान्तररूपा वा । *मतान्तररीत्येति* । नैयायिकमीमांसकरीत्या । एतेन बोधकत्वं शक्तिरिति वदतामस्माकमर्हाद्यर्थविषयेऽपि । यदि शाब्दबोधस्तद्विषयकोऽनुभवसिद्धः, तदा शक्तिरेव; नोचेत्प्रयोगोपाधित्वमिति ध्वनितम् । *अनुबन्धक्रमः*-अकाराद्यनुबन्धक्रमः । *अत एव-*

लकार' इत्यनेन मीमांसकैर्लट् व्यवह्रियत इति दिक् ॥ २३ ॥

इति श्रीकौण्डभट्टविरचिते वैयाकरणभूषणसारे
लकारविशेषार्थनिरूपणम् ॥ २ ॥

---

दर्पणः

मानत्वादिबोधस्योपपादयितुमशक्यत्वादत आह-*दिगिति* ॥ तदर्थस्तु पदं वाचकमिति पक्षे प्रकृतिप्रत्ययविभागकल्पनया वाचकत्वं तत्रारोप्य पदशक्तिरेव व्युत्पाद्यते। यत्र प्रत्ययस्य प्रकृतेर्वा अश्रूयमाणत्वं तत्र श्रूयमाणस्यैव तदर्थकत्वं कल्प्यते। तदाहुः- "शिष्यमाणं लुप्यमानाऽर्थाभिधायि" इति। अत एव 'व्यतिसे, इरियान्'इत्यादौ प्रत्ययमात्रात्प्रकृत्यर्थविषयको बोध इत्यादिः ॥ २३ ॥

॥ इति भूषणासारदर्प्पणे लडाद्यर्थनिर्णयः ॥ २ ॥

परीक्षा

अकाराद्यनुबन्धक्रमस्य नियामकत्वादेव। *दिगिति*।

दिगर्थस्तु—यत्र लादेशानामपहारो लोपेनः तत्र तेषामश्रवणाद्वाचकताद्योतकतावैषूभयमपि न सम्भवति, किन्तु श्रूयमाणस्य परिनिष्ठितपदस्य वाक्यस्य वाचकत्वमिति स्वीकार्य्यम्। अत एव 'व्यतिसे' 'इयान्' इत्यस्मात्प्रकृतिलोपे ऽप्यर्थस्य प्रकृत्यर्थसम्बन्धस्य बोधः, स्फोटस्यैव सिद्धान्तितत्वादिति।

इति श्रीमद्भूषणसारटीकायां परीक्षानामिकायां लडाद्यर्थविवरणम्।

# अथ सुबर्थनिर्णयः ।

सुबर्थमाह—

**आश्रयोऽवधिरुद्देश्यः सम्बन्धः शक्तिरेव वा ।**
**यथायथं विभक्त्यर्थाः, सुपां कर्मेति भाष्यतः ॥ २४ ॥**

द्वितीयातृतीयासप्तमीनामाश्रयोऽर्थः । तथाहि-"कर्मणि द्वितीया" ( पा०सू० २।३।२ ) तच्च कर्त्तुरीप्सिततमम् । क्रियाजन्यफलाश्रय इत्यर्थः । क्रियाजन्यफलवत्त्वेन कर्मण एव कर्त्तुरीप्सिततमत्वात् ।

---

दर्पणः

अथ सुबर्थनिर्णयः ।

अवसरसङ्गत्या सुबन्तार्थे निरूपणीये प्रातिपदिकार्थविशेष्यत्वात् क्रियाकाङ्क्षित-त्वाच्चादौ विभक्त्यर्थनिरूपणमित्यभिप्रायवानाह-*सुबर्थमिति* ॥ *आश्रयोऽर्थ इति* ॥ किञ्चिद्धर्मानवच्छिन्नाश्रयतावानित्यर्थः । तेन चतुर्थीपञ्चम्योरर्थयोरुद्देश्याऽवध्योराश्रयात्मकत्वेऽपि न क्षतिः । तत्र द्वितीयाया आश्रयार्थकत्वे मानमाह—*तथा-हीत्यादिना* ॥

ननु यथाश्रुते "कर्त्तुरीप्सिततम" इत्यनेन कर्तृसम्बन्धिप्राप्तीच्छाविशेष्यस्यैव कर्मत्वं प्रतिपाद्यते, न तु क्रियाजन्यफलाश्रयस्येत्यत आह-*क्रियाजन्यफलाश्रयत्वे-नेति* ॥ अयं भावः-सूत्रे ईप्सिततमशब्द आप्नोतेरिच्छासन्नन्तात् कर्मक्तान्तात् प्रकृ-त्यर्थाऽतिशयद्योतके तमपि निष्पन्नः । तद्योगाच्च कर्तृशब्दात्, "क्तस्य च वर्त्तमाने" ( पा०सू० २।३।६७ ) इति कर्त्तरि षष्ठी । तथाच कर्त्रोपस्थितत्वात् स्वीयव्यापारेण

परीक्षा

अथ सुबर्थनिर्णयः ।

क्रियायाः कारकाकाङ्क्षितत्वात्कारकाभिधायिप्रत्ययस्य स्मृतत्त्वात्तेषां निरूपण-मावश्यकमिति तेषामर्थानाह—मूले—*आश्रय इत्यादिना* । *आश्रयः*—आश्रय-त्वावच्छिन्नः, चतुर्थीपञ्चम्यौ यावुद्देश्यतावधिरूपौ वाच्यौ तयोराश्रयरूपत्वेऽपि न क्षतिः । तयोर्वाच्यतावच्छेदकताया आश्रयत्वे विरहात् । आश्रयत्वावच्छिन्नस्य द्विती-यावाच्यत्वे युक्तिमाह-*तथाहीत्यादिना* । *कर्मणि द्वितीयेति* । कर्मवाचिका द्विती-येत्यर्थः । *तच्च—* कर्म च । ननु "कर्त्तुरीप्सिततमम्" इत्यनेन कर्तृविषया प्राप्तीच्छा तद्विशेष्यस्य लाभात्कथं तेन सूत्रेणाश्रयस्य द्वितीयावाच्यत्वलाभ इत्यत आह—*क्रि-याजन्येति* । कथमस्य लाभ इति चेच्छृणु ? 'ईप्सिततमम्' इत्यत्राप्नोतेरिच्छासन्नन्ता-त्कर्मणि क्तप्रत्यये ततः प्रकृत्यर्थघटकेच्छायाः प्रकर्षविवक्षायां तमुपस्थितस्य व्यापारस्य [illegible] केच्छाविषय इत्यर्थो लभ्यते । आप्तिश्च फलव-तत्रान्वय इति स्वीयव्यापारेण [illegible]

"तथा युक्तञ्चानीप्सितम्" (पा०सू० १।४।५०) इत्यादिसंग्रहा- च्चैवमेव युक्तम् । ईप्सितानीप्सितत्वयोः शाब्दबोधे भानाभावेन

---

दर्पणः

व्याप्तुमिष्यमाणतमं व्यापारजन्यफलसम्बन्धित्वप्रकारककर्तृनिष्ठोत्कटेच्छाविषयः कर्मेति पर्य्यवसानात् क्रियाजन्यफलाश्रयस्य कर्मतालाभ इति । न चेच्छाकर्मीभूतार्थ- धातोरेव "धातोः कर्मण" इति सूत्रेणेच्छायां सनो विधानाद् व्याप्तीच्छार्थकसन्नन्त- धातुना व्याप्तिरूपकर्मोपसंग्रहाज्जीवत्यादिवदकर्मकतया ततः कथं कर्मक्तोपपत्तिरिति वाच्यम् । धात्वर्थोपसंग्रहीतकर्मत्वमित्यत्र कर्मणा तद्धात्वर्थीयकर्मान्तरानाकाङ्क्षत्व- विशेषेण सन्प्रकृतिधात्वर्थकर्मणः कर्मान्तरसाकाङ्क्षत्वेनोक्ताऽकर्मकत्वस्य सन्नन्ते अस- म्भवात् । एवं सन्नतस्य वृत्तितया तद्घटककर्माऽऽदाय कर्म्मसंज्ञाकान्वय्यर्थकत्वरूपस- कर्मकत्वाभावेऽपि तद्बहिर्भूतकर्मान्वयित्वमादायैव सकर्मकत्वं बोध्यम् । एवं फलता- वच्छेदकसम्बन्धेन तद्धात्वर्थफलव्यधिकरणव्यापारवाचकत्वरूपं तदपीतिनेप्सेत्यादितः कर्मप्रत्ययानुपपत्तिः । जिघ्रतेरपि स्वार्थाऽन्तरभूतकर्मणस्तदीयपुष्पादिकर्मान्तरसाका- ङ्क्षत्वमस्त्येव । गन्धनिरूपितलौकिकविषयतायां पुष्पादेराधेयत्वीयसांसर्गिकविषयता- निरूपितप्रकारतानिरूपकत्वेनाऽन्वयेनाऽकर्मत्वात् ।

'कृष्णाय राध्यति'इत्यस्य कृष्णस्य शुभाऽशुभं पर्यालोचयतीत्यर्थान्न धात्वर्थान्तर्भू- तशुभकर्मणः कर्मान्तरसाकाङ्क्षत्वमिति न तत्रातिप्रसङ्गः । बुभूषत्यादीनां तु भवनाऽऽ- दिकर्मणः कर्मान्तरानाकाङ्क्षस्य धात्वर्थतावच्छेदककोटिप्रविष्टत्वादकर्मकत्वं व्यक्तमेव । एवं स्वर्यत इति भाष्यप्रयोगस्थस्वरवद्रूपविकृतिकर्मणः सन्निहितशब्दरूपप्रकृतिकर्म- साकाङ्क्षतया, करोत्यर्थणिजन्तात् कर्मप्रत्ययोपपत्तिरिति बोध्यम् ॥ केचित्तु—सना- द्यन्तस्य धात्वर्थोपसङ्गृहीतत्वेनाऽकर्मकत्वेऽपि तत्प्रकृतेः सकर्मकत्वमादाय तस्मात् कर्मप्रत्ययोपपत्तिमाहुः ।

ननु तथापीष्टाऽघटितस्य भवदुक्तस्य कथं कर्मलक्षणत्वमत आह—*तथा युक्त- मिति* ॥ कर्मव्यवहारस्य द्वेष्योदासीनयोरप्यविशिष्टत्वात्तत्साधारणस्यैव लक्षणत्वमु- चितम् । इच्छाघटितस्यैव तस्य लक्षणत्वे तु द्वेष्यादिकर्मण्यव्याप्तिः स्यात् । तथाच तत्साधारण्यायेदमेवाश्रयितुं युक्तमिति भावः । *एवमेवेति* । इत्थमेवेत्यर्थः । ननु द्वितीयाया उक्तकर्मार्थकत्वे, हरिं भजतीत्यादौ हर्य्यादेरीप्सितत्वादिना भानाऽनुपपत्ति- रत आह-*ईप्सितानीप्सितत्वयोरिति* ।*भानाऽभावेनेति*। सार्वजनीनतयानुभवा-

परीक्षा

त्वम् । एतेन कर्तृवृत्तिव्यापारजन्यफलवत्त्वेनेच्छाविषयत्वलाभः । नचेच्छाकर्मार्थकधा- तोरिच्छायां सनो विधानाद्व्याप्तिरूपकर्मणोऽन्तर्भावादकर्मकत्वापत्तिरिति कथं सन्न- न्तात्कर्मणि प्रत्यय इति वाच्यम् ? एकस्य कर्मणोऽन्तर्भावेऽपि बहिर्भूतकर्मसाकाङ्क्षत्वेन सकर्मकत्वोपपत्तेः । 'पुष्पं जिघ्रति' इत्यत्र घ्राधातोरिव । यद्वा सन्नन्तस्याकर्मकत्वेऽपि सन्प्रकृतेः सन्कर्मकतया कर्मान्वयसम्भव इति बोध्यम् ।

नन्वेवमिच्छाघटितमेव कर्मत्वलक्षणमस्तु, इच्छाया निवेशमकृत्वा किमेतादृशकर्म- त्वलक्षणेनेत्यत आह--*तथायुक्तमिति* । *एवमेव*–इच्छाघटितमेव । नन्वेवं सति 'हरिं भजति' इत्यादौ कर्मणो भानमिच्छाघटितरूपेण न स्यादत आह–*ईप्सितेति* ।

संज्ञायामेव तदुपयोगो, न तु वाच्यकोटौ तत्प्रवेशः। तथाच क्रियायाः फलस्य च धातुनैव लाभादनन्यलभ्य आश्रय एवार्थः। तत्वञ्चाखण्डशक्तिरूपमवच्छेदकम्। 'ओदनं पचति'इत्यत्र विक्लित्याश्रयत्वात्

दर्पणः

दितिभावः। ननु तर्हि क्रियाजन्यफलाश्रयः कर्मेत्येव सूत्र्यतामत आह-*संज्ञायामेवेति*।

अयमाशयः—क्रियाजन्यफलाश्रयः कर्मेति सूत्रप्रणयने यद्यपीप्सितानीप्सितयोरविशेषेण संज्ञा सिद्ध्यति; तथापि 'अग्नेर्माणवकं वारयति' इत्यादौ क्रियाजन्यफलभागित्वेनेष्टस्य माणवकस्याऽपि विशेषविहितेन "वारणार्थानाम्" (पा० सू० १।४।२७) इत्यनेनापादानसंज्ञा प्रसज्ज्येत। सूत्रं तु 'हरिं भजति'इत्यादौ चरितार्थम्। तत्परिहारायेप्सिततमत्वस्य संज्ञिकोटौ निवेशे अप्राप्तद्वेष्योदासीनसंज्ञाविधानार्थमुत्तरसूत्रमिति तथा नोक्तमिति। ननु तथापि पञ्चम्या इव न द्वितीयाया अप्याश्रयमात्रार्थकता, किन्तु विशिष्टस्यैवेत्यत आह—*तथाचेति*। आश्रय एवेत्येवकारेण विशिष्टार्थस्य शक्यत्वव्यवच्छेदः। नन्वाश्रयत्वस्य तत्तत्स्वरूपात्मकस्य तत्तदाश्रयभिन्नत्वात् कथं तस्य शक्यतावच्छेदकत्वम्। अनुगतधर्मस्यैव तत्त्वादत आह—*तत्वञ्चेति*। आश्रयत्वं चेत्यर्थः। *अखण्डशक्तिरूपमिति*। शक्तिर्धर्मः। इतरपदार्थाघटितमूर्त्तिकधर्मरूपमिति यावत्। आश्रय इत्यनुगतव्यवहारादाश्रयपदे शक्यतावच्छेदकत्वाच्च तत्सिद्धिर्द्रव्यत्वादिवदिति भावः॥

नैयायिकास्तु—आश्रताया नियतान्यनिरूपितस्वरूपाया अनुगमकत्वाऽसम्भवः। शक्यतावच्छेदकत्वस्यापि विभुत्वान्यतरत्वादौ व्यभिचारेण नाऽखण्डत्वसाधकत्वमिति न द्वितीयाया आश्रयोऽर्थः। तस्य प्रकृत्यैव लाभात्; प्रकृत्यर्थभिन्नत्वेन तत आश्रयस्याऽननुभवाच्च। किन्तु फलान्वयिनी कृतिरेव तदर्थः। "कर्मणि द्वितीया" इत्यस्य फलनिष्ठाऽऽधेयत्वान्वये प्रकृतितात्पर्य्ये तदुत्तरं द्वितीयेत्यर्थात् न तद्विरोधोऽपि। अनादितात्पर्यग्राहकत्वेन परम्परया शक्तिग्राहकत्वाच्च न तद्वैय्यर्थ्यम्। आश्रयत्वं तु न तच्छक्यम्। तस्य निरूपकतासम्बन्धेनैव फलाऽन्वयित्वस्याभ्युपगन्तव्यतया निरूपकत्वस्य च वृत्त्यनियामकतयाऽभावप्रतियोगिताऽनवच्छेदकत्वेन 'विहगो भूमिं गच्छति, न महीरुहम्'इत्यादौ धात्वर्थफले संयोगे महीरुहनिष्ठाश्रयतायास्तेन सम्बन्धेनाभावस्याऽप्रसिद्धतया तत्राबोधत्वाऽसम्भवात्। न च सूत्रस्वरसभङ्गः। शक्तिः कारकमितिपक्षे तदयोगात्। आधेयताया अपि निरूपकतया कारकधर्मत्वादित्याहुः॥

*विक्लित्त्याश्रयत्वात्कर्मतेति*। कर्मसंज्ञेत्यर्थः। एतेन कर्त्तृगतप्रकृतधात्वर्थव्यापारप्रयोज्यतद्व्यधिकरणप्रकृतधात्वर्थफलाश्रयत्वं कर्मत्वमुक्तम्भवति। यद्व वक्ष्यति

परीक्षा

*संज्ञायामेव तदुपयोग इति*। अयम्भावः—क्रियाजन्यफलशालिकर्मेत्युक्तावपि सूत्रदृष्टफलं यद्यपि सिध्यति, तथापि "वारणार्थानाम्" इति सूत्रं निरवकाशः स्यादिति वारणयोगे—'अग्नेर्माणवकं वारयति' इत्यत्र माणवकस्य कर्म्मत्वन्न स्यादत इच्छाऽर्थकसन्घटितं पूर्वसूत्रमारब्धम्। तथाच द्वेष्योदासीनसंग्रहार्थं "तथा युक्तम्" इत्यस्य आरम्भ इति। *तथाच*—क्रियाजन्यफलाश्रयत्वस्य कर्म्मत्वरूपत्वे च। *तत्वम्*—आश्रयत्वम्। *अखण्डशक्तिरूपम्*—अखण्डोपाधिरूपम्। इतरपदार्थघटितमूर्त्तिकध-

कर्म्मता। घटं करोतीत्यत्र उत्पत्त्याश्रयत्वाद् उत्पत्तेर्धात्वर्थत्वात्।

दर्पणः

'उक्तप्रायत्वात्' इति॥ 'अग्नेर्माणवकं वारयति' इत्यादावग्न्यादावतिव्याप्तिनिरासाय व्यापारे कर्त्तृगतत्वमुपात्तम्। वारयतेश्च संयोगानुकूलव्यापाराभावानुकूलव्यापारोऽर्थः। 'चैत्रो ग्रामं गच्छति'इत्यादौ चैत्रादेर्वारणाय व्यधिकरणेति। वैयधिकरण्यं च–तदनधिकरणवृत्तित्वं, न तु तदधिकरणावृत्तित्वम्। तस्य संयोगे असत्त्वेन ग्रामादावव्याप्तेः। तादृशवैयधिकरण्यविशिष्टाऽधिकरणतायाश्चैत्रादावसत्त्वान्नातिप्रसङ्गसम्भावनापि। 'माषेष्वश्वं बध्नाति' इत्यादौ बन्धनप्रयोज्यभक्षणाश्रयमाषाणां तत्त्ववारणाय प्रकृतधात्वर्थत्त्वं फलविशेषणम्। प्रकृतत्वं च-तत्र तत्र विशिष्योपादेयम्। 'पयसौदनं भुङ्क्ते' इत्यादौ तु कर्मत्वाविवक्षणान्न द्वितीया। कृतभोजनस्य पयो लोभेन प्रवृत्तावीप्सिततमत्वस्यापि पयसि सम्भवादिति।

ननु परैः कृञो यत्नमात्राऽर्थकत्वाभ्युपगमात् कथमुत्पत्तेः प्रकृतधात्वर्थत्वमत आह—*उत्पत्तेरिति*। तथाच–कृञ उत्पत्तिरूपफलार्थकत्वस्य प्रागुपपादनान्नार्थास-

परीक्षा

र्म्माभिन्नोऽखण्डोपाधिः। अत एव तस्यैकस्य वाच्यताऽवच्छेदकत्वे लाघवम्। आश्रय आश्रयानुगताकारव्यवहाराच्च तस्यैकस्य सिद्धिः। ननु विभुष्विति व्यवहारस्य सर्वविभुषु दर्शनेन विभुत्वस्याप्यखण्डस्य सिद्ध्यापत्तिरिति चेद्? न। इष्टत्वात्। अत्रापिशब्दानां प्रवृत्तिपक्षे जातिः पदार्थमते चाभावत्वादिवत् सामान्यादीनि निःसामान्यानि इति परिभाषाया नैयायिकसम्मताया अनाश्रयणात्। जातीयताया अपि व्यक्तियतावद्भावात्। 'ग्रामं गच्छति'इत्यादौ कर्मणो द्वितीयार्थाश्रये अभेदेनान्वयः। तस्य फले संयोगादिरूपे स्वनिष्ठाश्रयतानिरूपितत्वसम्बन्धेनान्वयः। नचैवमाश्रयत्वं निरूपकभेदेन भिद्येतेति कथं तस्यासिद्धिरितिवाच्यम्? समवायस्य प्रतियोग्यनुयोगिभेदेऽप्येकत्ववन्निरूपकभेदेऽपि तद्भेदाकल्पनात्।न चैवं सति 'भूमिं गच्छति' "न महीरुहं विहगः" इत्यादौ द्वितीयार्थाश्रयस्य महीरुहाभिन्नस्य स्वनिष्ठाश्रयनिरूपकत्वसम्बन्धावच्छिन्नप्रतियोगिताकाभावो धात्वर्थमूले वाच्यः, स च न सम्भवति। शक्यनियामकसम्बन्धस्याभावप्रतियोगितानवच्छेदकत्वादिति वाच्यम्? स्वनिष्ठाश्रयतानिरूपकस्थले स्वस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभावश्च नैयायिकसम्मत्या शक्यसमनियताभावानामेकत्वमपि तन्मतेऽस्त्येवेति वृत्त्यनियामकसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य सत्वाद् वृत्त्यनियामकसम्बन्धाभावरूपतया—इतिरिक्ताभावकल्पनाविरहात्। वृत्त्यनियामकसम्बन्धावच्छिन्नातिरिक्ता प्रतियोगिता कल्पनीयेति गौरवं परमतिरिच्यतेः तच्च नास्माकं प्रतिकूलम्। सर्वस्य पदार्थस्य मायापरिणामरूपतया तस्य नियमाभावात् इति ध्येयम्। *कर्मतेति*। कर्मसंज्ञेत्यर्थः। एतेन प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वं कर्मसंज्ञा प्रयोजकमित्युक्तं भवति। 'अग्नेर्माणवकं वारयति' इत्यादौ वारयतेः उत्तरदेशसंयोगानुकूलव्यापाराभावानुकूलव्यापारार्थकतयाऽग्निवृत्तिसंयोगरूपफलस्य प्रधानीभूतव्यापारप्रयोज्यताविरहेण नाग्नेः कर्मसंज्ञाप्राप्तिरिति "वारणार्थानाम्" इति सूत्रस्य नानवकाशत्वम्। "चैत्रो ग्रामं गच्छति' इत्यादौ तु चैत्रादेः प्राप्ताऽपि कर्मसंज्ञा कर्तृसंज्ञया बाध्यते। 'माषेष्वश्वं

जानातीत्यत्र आवरणभङ्गरूपज्ञाधात्वर्थफलाऽऽश्रयत्वात् । अतीताऽनागतादिपरोक्षस्थलेऽपि ज्ञानजन्यस्य तस्यावश्यकत्वात् । अन्यथा यथापूर्वं न जानामीत्यापत्तेः । अतीतादेराश्रयता च विषयतया

---

दर्पणः

ङ्गतिरिति भावः । धात्वर्थत्वादित्युक्त्या क्नः केवलयत्नार्थकत्वे घटादीनां कर्मत्वानुपपत्तिरिति दोषत्वेन ध्वन्यते । *आवरणभङ्गेति* । प्राचीनमतानुसारेणेदम् । निष्कृष्टमते तु ज्ञानरूपफलस्यविषयतया घटादौ सत्त्वात्कर्मतेति बोध्यम् । न चाकर्मकतापत्तिः । फलतावच्छेदकसम्बन्धेन सामानाधिकरण्याभावात् । नैयायिकमते त्वेतादृशस्थले यथा घटादीनां कर्मत्वं तथोपपादितं धात्वर्थनिरूपणावसरे ।

ननु विद्यमानघटे ज्ञानजन्यावरणभङ्गस्य सम्भवेऽपि भाविविनष्टघटे निराश्रयस्य तस्यासंभवेन तस्य कर्मत्वानुपपत्तिरत आह-*अतीतानागतेति* । तत्राश्रयताङ्गीकारे युक्तिमाह—*अन्यथेति* । विनष्टे तत्रावरणभङ्गास्वीकारे इत्यर्थः ॥ यथापूर्वमिति जानातिक्रियाविशेषणम् । पदार्थानतिवृत्तावव्ययीभावः । पूर्वमनतिक्रम्येत्यर्थः । पूर्वज्ञानानतिक्रमो यस्मिंस्तदिति यावत् । घटस्य विद्यमानतादशायां तात्कालिकज्ञानस्य तद्घटे आवरणभङ्गजनकतयाऽतीतदशायामाधुनिकज्ञानस्य तदजनकत्वेन पूर्वातिक्रमस्य तत्वात् पूर्वानतिक्रान्तज्ञानाभावस्य विषयस्याऽबाधात्तादृशप्रयोगस्य प्रामाण्यापत्तेरित्यर्थः । अतीतघटे आधुनिकज्ञानेनावरणभङ्गोत्पादाभ्युपगमे तु तेन पूर्वज्ञानानतिक्रमात् तदभावस्य बाधाद्भवति तस्याप्रामाण्यमिति भावः ।

ननु विनष्टे घटे वास्तवतदाश्रयतैव कथमत आह—*अतीतादेरिति* । आदिना

परीक्षा

बध्नाति'इत्यादौ माषाणां प्रधानीभूतबन्धधात्वर्थव्यापारप्रयोज्यभक्षणाश्रयत्वेऽपि भक्षणस्य प्रकृतधात्वर्थफलाश्रयत्वाभावान्न कर्मत्वस्य प्राप्तिः, यदा कृतभोजनोऽपि पयो लाभेच्छया पुनः पयोभोजतात्पर्येणौदनभोजने प्रवर्तते तादृशस्थले—पयसा ओदनं भुङ्क्ते इति प्रयोगो दृश्यते ; तत्र पयसः प्राप्तावपि कर्मसंज्ञा न भवति, पयसः साधकतमत्वविवक्षया करणसंज्ञाप्रवृत्तेः । 'स्थाल्यां पच्यते' इत्यत्राधिकरणत्वाविवक्षावत् । *उत्पत्तेरिति* । उत्पत्तिरूपफलानुकूलव्यापारस्येत्यर्थः । *आवरणभङ्गेति* । आवरणमज्ञानं तस्य भङ्ग इत्यर्थः । न चाज्ञानस्य ज्ञानाभावरूपतयाऽभावस्य नित्यत्वेन तद्भङ्गानुपपत्तिरिति वाच्यम् । अज्ञानस्य मायापरिणामरूपतया तस्य भावरूपत्वात् । इदं प्राचां मतेन । वस्तुतस्तु ज्ञानानुकूलव्यापार एव जानातेरर्थः । विषयता च फलतावच्छेदकसम्बन्धः ; तेन सम्बन्धेन घटादेः फलाश्रयत्वात्कर्मता । नन्वसमानकालिकपदार्थयोराधाराधेयभावविरहेणातीतानागतकर्मणः फलाश्रयत्वविरहान्न कर्मसंज्ञाप्राप्तिरत आह-*अतीतेति* । *तस्य*-आवरणभङ्गरूपफलस्य । *अन्यथा*-तयोस्तादृशफलाश्रयत्वविरहे । *यथा पूर्वमिति* । पदार्थाऽनतिवृत्तावव्ययीभावः । जानातीति क्रियाया विशेषणमेतत् । यथा घटादेर्विद्यमानतादशायां तस्मिन्नावरणभङ्गस्य ज्ञानेनोत्पादनं सम्भवति ; तथा तस्यातीतत्वेऽनागतत्वे वा न सम्भवत्याश्रयाभावादिति पूर्वानतिक्रान्तज्ञानाभावसत्त्वेनैतादृशप्रयोगापत्तिरिति । तत्राप्यावरणभङ्गाभ्यु-

ज्ञानाश्रयताया नैयायिकानामिव सत्कार्य्यवादसिद्धान्ताद्वोपपद्यत इति। उक्तञ्च—

तिरोभावाभ्युपगमे भावानां सव नास्तिता।
लब्धक्रमे तिरोभावे नश्यतीति प्रतीयते॥ इति।

ननु चैत्रो ग्रामं गच्छतीत्यत्र ग्रामस्येव चैत्रस्यापि क्रियाजन्यग्रा-

---

दर्पणः

भाविपरिग्रहः। *नैयायिकानामिवेति*। यथाऽनुभवानुरोधेन तस्मिन् विषयतया ज्ञानाश्रयताङ्गीकारस्तेषां तथास्माकमपीति भावः। नन्वतीतो घटो ज्ञानविषय इति प्रतीतेरस्तु नाम; तादृशघटस्य विषयतया ज्ञानाश्रयता; आवरणभङ्गाश्रयतायां तु न तथा साधकोपलब्धिरत आह-*सत्कार्य्येति*। तमेव दर्शयति—*उक्तञ्चेति*। "सदेव सौम्येदमग्र आसीत्" इति श्रुतेः कार्य्यजातं सूक्ष्मरूपेण प्रागवस्थितमेव। परमते जनकत्वेनाभिमतसामग्रीसमवधानात्तु तदभिव्यक्तीभवति। कारणे सूक्ष्मरूपेणावस्थानमेव तत्प्रागभावः। तस्यामेवावस्थायां स भविष्यतीति व्यवह्रियते। ततः प्रच्युतमभिव्यक्तिलक्षणं धर्ममप्राप्तं जायत इति प्राप्ताभिव्यक्तिस्त्वस्तीति।

ननु सर्वदैव सति तस्मिन् कथं नाऽस्ति नश्यतीति व्यवहारोऽत आह—*तिरोभावाभ्युपगम इति*। तिरोभावाभिव्यञ्जकसामग्र्या तिरोभावेऽभिव्यञ्जिते सति, नाऽस्ति नष्ट इति व्यवहारः। लब्धक्रमायां तु तस्यां नश्यतीति सत्कार्यवादसिद्धान्तः; प्रकृते घटस्य तिरोधानेऽपि सूक्ष्मरूपेण सत्वात्तत्रावरणभङ्गरूपफलाश्रयत्वं सुलभमिति भावः। उक्तनिष्कृष्टकर्मत्वं विशदीकर्तुमाशङ्कते-*नन्विति*॥ विभागस्येत्यस्य क्रिया-

परीक्षा

पगमे तु पूर्वाऽनतिक्रान्तज्ञानस्यैव सत्वेन न तादृशप्रयोगापत्तिरिति भावः। *नैयायिकानामिवेति*। शास्त्रपुराणादिजन्यज्ञानानन्तरं नलं कलङ्किनं च जानामीत्यनुभवानुरोधेनासमानकालिकत्त्वेऽपि ज्ञानाश्रयत्वं तैर्यथा कल्प्यते। असमानकालिकयोर्नाधाराधेयभाव इत्येतद्विषयतासम्बन्धस्य यत्राधारतावच्छेदकत्वं तद्भिन्नस्थले इति वाङ्गीक्रियते; तथाऽनुभवानुरोधेनावरणभङ्गोऽप्यभ्युपेयत इति भावः। सांख्यमताश्रयणेनाह—*सत्कार्येति*। सत एव कार्यस्य सूक्ष्मरूपेण स्थितस्य सामग्रीवशात्स्थूलरूपेणाभिव्यक्तिरेवोत्पत्तिर्नाशोऽप्यभिव्यक्तस्य पुनः सूक्ष्मरूपेणाहङ्कारपरिणामे सत्वरूप इति हि तेषां मतम्। तन्मतेऽतीतानागतयोरपि सूक्ष्मरूपेण स्थितत्वात् नावरणभङ्गाश्रयत्वानुपपत्तिरिति भावः।

तमेव मतमुपदर्शयति—*उक्तञ्चेति*। *भावानाम्*-पदार्थानाम्। *सैव—*तिरोभावावस्थैव। *नास्तिता*—*नास्तीति व्यवहारविषयताश्रयः। *लब्धक्रमे*—तिरोभावस्य क्रमेण प्रारम्भे।

सत्कार्यवादश्च-"सदेव सौम्य इदमग्र आसीत्" इति श्रुतिप्रसिद्ध एव कारणेऽभिव्यक्तेः प्राक् सूक्ष्मरूपेणावस्थानमेव प्रागभावस्तमादाय भविष्यतीति व्यवहारः। तस्या अवस्थायाः प्रच्युतोऽभिव्यक्तिमप्राप्तो जायते इत्युच्यते। यदा तु सम्यगभिव्यक्तिस्तदाऽस्तीति कर्तृसंज्ञायाः कर्मसंज्ञावाचकत्वमजानन् शङ्कते—*नन्विति*। तस्याः संज्ञाया बाधकत्वप्रदर्शनेन समाधत्ते—*ग्रामस्येवेति*।

मसंयोगरूपफलाश्रयत्वात् कर्म्मतापत्तौ, चैत्रश्चैत्रं गच्छतीत्यापत्तिः। प्रयागतः काशीं गच्छति चत्रे प्रयागं गच्छतीत्यापत्तिश्च। क्रियाजन्यसंयोगस्य काश्यामिव विभागस्य प्रयागेऽपि सत्त्वादिति चेद् ? न।

ग्रामस्येव चत्रस्यापि फलाश्रयत्वेऽपि तदीयकर्त्तृसंज्ञया कर्म्मसंज्ञाया बाधेन, चैत्रश्चैत्रमिति प्रयोगासम्भवात्। द्वितीयोत्पत्तौ संज्ञाया एव नियामकत्वात्। अन्यथा 'गमयति कृष्णं गोकुलम्'इत्यत्रेव, पाचयति कृष्णेनेत्यत्रापि कृष्णपदाद् द्वितीयापत्तेः।

शाब्दबोधश्चत्रश्चैत्रमित्यत्र स्यादिति चेद् ? न। तथा व्युत्पन्नानामिष्टापत्तेः। उच्यतां वा प्रकारतासम्बन्धेन धात्वर्थफलविशेष्य-

दर्पणः

जन्येत्यादि। ननु कर्मसंज्ञायाः परया कर्तृसंज्ञया बाधनेऽपि वास्तवकर्मत्वस्य तत्राऽबाधात् स्यादेव तादृशप्रयोगोऽत आह-*द्वितीयोत्पत्ताविति*॥ इदं च प्रकृताऽभिप्रायेण। कारकविभक्त्युत्पत्तिमात्रस्यैव तन्नियम्यत्वात्। *अन्यथेति*॥ संज्ञाया अनियामकत्व इत्यर्थः॥

*द्वितीयोपत्तेरिति*॥ गम्यति कृष्णं गोकुलमित्यत्र णिच्प्रकृत्यऽर्थव्यापारजन्यसंयोगानुकूलव्यापाररूपधात्वर्थफलाश्रयत्वस्येव, पाचयति कृष्णेनौदनमित्यत्रापि तादृशव्यापारजन्यविक्लित्यनुकूलव्यापाराश्रयत्वस्य तत्र सत्वादिति भावः॥ *शाब्दबोध इति*॥ चैत्रनिष्ठसंयोगानुकूलश्चैत्रकर्तृको वर्त्तमानो व्यापार इति शाब्दबोध इत्यर्थः। तद्विषयस्याऽबाधादिति भावः॥ *तथा व्युत्पन्नानामिति*॥ सामान्यतो धात्वर्थफलविशेष्यतानिरूपितप्रकारतासम्बन्धेन शाब्दबोधे आश्रयोपस्थितेर्हेतुत्ववादिनामित्यर्थः। बोधस्य स्वस्वव्युत्पत्त्यनुसारित्वादिति भावः।

चत्रकर्मकचैत्रकर्तृकव्यापारशाब्दबोधस्य चैत्रो ग्रामं गच्छतीत्यादावननुभवादाह-

परीक्षा

ननु कर्तृसंज्ञाया नियामकत्वाऽकल्पने कर्मसंज्ञाबाधकत्वमस्तु; तथाऽपि वस्तुगत्योक्तकर्मत्वसत्वाद् द्वितीया स्यादेवेत्यत आह—*द्वितीयोत्पत्ताविति*। *अन्यथा*-संज्ञाया नियामकत्वाऽकल्पने। *द्वितीयोपत्तिरिति*। कृष्णस्योक्तरीत्या णिजन्तधातुप्रतिपाद्यप्रयोजकव्यापारजन्यफलाश्रयतया कर्मत्वापत्तौ द्वितीयापत्तिः। संज्ञाया नियामकत्वे तु "गतिबुद्धि" इति सूत्रस्य नियमार्थत्वान्न कर्मसंज्ञेति न द्वितीयापत्तिरिति भावः।

ननु विषयाबाधाच्चैत्रनिष्ठसंयोगानुकूलश्चैत्रनिष्ठो वर्तमानो व्यापार इत्याकारकः शाब्दबोधः स्यादित्याह-*शाब्दबोध इति*। तथाव्युत्पन्नानाम्*—व्युत्पत्तिः कार्यकारणभावग्रहस्तद्वताम्। समवायसम्बन्धेन धात्वर्थफलप्रकारतानिरूपितव्यापारनिष्ठविशेष्यताशालिबोधे—आश्रयोपस्थितिः कारणमिति कार्यकारणग्रहवताम्। 'चैत्रश्चैत्रं गच्छति' इति शब्दात्तादृशशाब्दबोधाननुभवादाह-*उच्यतामिति*। *फलविशेष्यकबोधं प्रतीति*। फलनिष्ठविशेष्यतानिरूपितप्रकारतासम्बन्धेन शाब्दबोधं प्रती-

कबोधं प्रति धात्वर्थव्यापारानधिकारणाश्रयोपस्थितिर्हेतुरिति कार्य्यकारणभावान्तरम् । प्रकृते चैत्रस्य व्यापारानधिकरणत्वाभावान्न दोषः । प्रयागस्य कर्मत्वन्तु सम्भावितमपि न । समभिव्याहृतधात्वर्थफलशालित्वस्यैव क्रियाजन्येत्यनेन विवक्षणस्य उक्तप्रायत्वात् ।

नैयायिकास्त्वाद्यदोषवारणाय परसमवेतत्वम्, द्वितीयदोषवारणाय धात्वर्थतावच्छेदकत्वं फले विशेषणम्; द्वितीयावाच्यमित्युपाददते । परसमवेतत्वं धात्वर्थक्रियायामन्वेति । तथैव कार्यकारणभावा-

---

दर्पणः

*उच्यतां वेति* ॥ *कार्य्यकारणभावान्तरमिति* । सामान्यतः कार्य्यकारणभावकल्पने उक्ताऽतिप्रसङ्गेनाश्रयं प्रकृतधात्वर्थव्यापारानधिकरणत्वेन विशेष्य तादृशाश्रयोपस्थितेर्हेतुत्वस्य कल्पनान्न तादृशशाब्दबोधापत्तिरिति भावः । *समभिव्याहृतेति* । प्रकृतेत्यर्थः । *उक्तप्रायत्वादिति* । धात्वर्थविक्लित्त्याश्रयात् कर्मतेत्यादिग्रन्थेनेत्यस्यादिः । गमेस्तत्र पार्थक्येनाऽनुपादानादुक्तम्— *प्रायेति* । वस्तुतस्तु, फलव्यापारयोरित्यत्र फलत्वस्य तद्धात्वर्थजन्यत्वे सति तद्धातुजन्योपस्थितिविषयत्वरूपस्य निर्वचनाद् व्यापारव्यधिकरणफलाश्रयत्वरूपकर्मत्वोक्त्यैवानति प्रसङ्गे नोक्तविशेषणस्य पार्थक्येन निवेश इति ध्येयम् ॥

नैयायिकमतं दूषयितुमुपन्यस्यति—*नैयायिकास्त्विति* । *आद्यदोषेति* । चैत्रश्चैत्रं गच्छतीति प्रयोगापत्तिरूपेत्यर्थः । *धात्वर्थतावच्छेदकत्वमिति* । फलावच्छिन्नव्यापारस्य धात्वर्थत्वमिति वादिनां मतेनेदम् । तथाच तन्मते धात्वर्थताऽवच्छेदकफलशालित्वं कर्मत्वं द्वितीयाऽर्थः पर्यवस्यति । *कार्य्यकारणभावेति* । द्वितीयाऽर्थपरसमवेतत्वस्य स्वनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धिं प्रति भावनात्वावच्छिन्नविशेष्यतासम्बन्धेन धातुजन्योपस्थितेर्हेतुत्वान्तरकल्पनादित्यर्थः ।

ननु भेदस्य केवलाऽन्वयितया सर्वस्यैव परत्वेन चैत्रक्रिया अपि मैत्राऽन्यसमवेतत्वात् तद्वाच्यताङ्गीकारेऽप्युक्तदोषतादवस्थ्यमत आह—*परत्वञ्चेति* । व्युत्पत्ति-

परीक्षा

त्यर्थः । *कार्यकारणभावान्तरम्*—विषयनिष्ठप्रत्यासत्त्या कार्यकारणभावान्तरम् । द्वितीयस्य दोषस्यापत्तिं वारयति—*प्रयागस्येति* । *उक्तप्रायत्वादिति* । विभागस्य फलस्य क्रियाजन्यत्वेऽपि तस्य गमधात्वर्थत्वाभावान्नापत्तिरिति भावः । अयं चार्थो धात्वर्थफलाश्रयत्वादिति पूर्वोपादानेन सूचितो न तूक्त इत्यतः प्रायपदम् ।

वस्तुतस्तु विभागस्य फलत्वमेव न । तस्य तद्धात्वर्थव्यापारजन्यत्वे सति तद्धात्वर्थरूपतया तस्याभावादिति नाधिकविशेषणनिर्देश इति बोध्यम् ।

नैयायिक मतं दूषयितुं तन्मतमुपन्यस्यति—*नैयायिकास्त्विति* । *आद्येति* । चैत्रश्चैत्रं गच्छतीति प्रयोगापत्तिरूपदोषेत्यर्थः । *द्वितीयेति* । प्रयागस्य कर्मत्वापत्तिरूपेत्यर्थः । *द्वितीयावाच्यमिति* । परसमवेतत्वं धात्वर्थतावच्छेदकत्वं च द्वितीयार्थं इति तेषां मतम् । ननु परसमवेतत्वं भेदाश्रयसमवेतत्वं भेदस्य च केवलान्वयितया मैत्रप्रतियोगिकभेदस्य चैत्रे सत्त्वादुक्तातिप्रसङ्गस्तदवस्थ इत्यत आह—*परत्व-

न्तरकल्पनात्। परत्वमपि द्वितीयया स्वप्रकृत्यर्थापेक्षया बोध्यते। तथाच चैत्रस्तण्डुलं पचतीत्यादौ तण्डुलान्यसमवेतव्यापारजन्यधात्वर्थतावच्छेदकविक्लित्तिशालित्वात् तण्डुलानां कर्म्मता। शाब्दबो-

दर्पणः

वैचित्र्यात्तु पदार्थैकदेशेऽपि प्रतियोगितया प्रकृत्यर्थाऽन्वयः, प्रकृते चैत्रसंयोगजनकक्रियायां चैत्रभिन्नसमवेतत्वबाधान्न चैत्रश्चैत्रं गच्छतीति प्रयोगः। यत्र चोभयकर्मभ्यां मल्लयोः संयोगस्तत्र मल्लान्तरक्रियायाः स्वनिष्ठसंयोगजनिकायाः स्वभिन्नसमवेतत्वेऽपि तादृशक्रियायाः स्वस्मिन् बाधान्न मल्लः स्वं गच्छतीति प्रयोगः। स्वनिष्ठसंयोगजनकस्वक्रियायां स्वभिन्नसमवेतत्वस्यायोग्यत्वेनाभानेऽप्यबाधितसंयोगजनकत्वं विषयीकृत्य, "अभिचरन् यजेत" इत्यादाविव शाब्दबोधसम्भवात् तदर्थतात्पर्येण 'स्वं गच्छति' इति प्रयोगो दुर्वार इति तु नाशङ्कनीयम्। परसमवेतत्वांशाऽविषयकस्य द्वितीयाधीनफलजनकत्वबोधस्य कुत्राप्यऽनभ्युपगमेन तादृशबोधे तज्ज्ञानसामग्र्या अप्यपेक्षणात् तस्याश्च प्रकृतेऽसत्त्वात्।

अथ स्वस्याऽपि द्वित्वाऽवच्छिन्नभिन्नत्वात् स्वं गच्छतीतिप्रयोगवारणाय द्वितीयाप्रकृत्यर्थस्य प्रकृत्यर्थतावच्छेदकावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनाऽन्वयो वाच्यः। तथाच—'चैत्रो द्रव्यं गच्छति,' 'मल्लो मल्लं गच्छति' इत्यादिवाक्यानामप्रामाण्यापत्तिः। चैत्रमल्लादिनिष्ठक्रियाया द्वितीयाप्रकृत्यर्थताऽवच्छेदकद्रव्यत्वमल्लत्वावच्छिन्नाभिन्नाऽसमवेतत्वात् तद्व्यक्तित्वानुपस्थितावपि शाब्दबोधस्याऽनुभवसिद्धतया तत्तद्व्यक्तित्वोपस्थापकत्वाऽवच्छिन्नप्रतियोगितयान्वयासम्भवात्, तद्व्यक्तित्वोपस्थापकपदाऽभावाच्च। एकधर्मावच्छिन्नप्रतियोगिताया अन्यधर्मावच्छिन्नसंसर्गत्वे मानाभावाच्च प्रतियोगिविशेषिताभावबुद्धेर्विशिष्टवैशिष्ट्याऽवगाहित्वनियमात्।

तदुक्तं दीधितिकृता—प्रतियोगिविशेषिताभावभानं तु विशिष्टवैशिष्ट्यमर्यादां नातिशेत इतीति चेत्? तर्हि क्रियान्वयिभेदप्रतियोगितावच्छेदकत्वं द्वितीयार्थः। भेदे

परीक्षा

मपीति*। ननु प्रकृत्यर्थस्य प्रत्ययार्थैकदेशे भेदे प्रतियोगितासम्बन्धेनान्वये चैत्रघटोभयभेदस्य चैत्रे सत्त्वादुक्तापत्तिस्तदवस्थैव। प्रकृत्यर्थतावच्छेदकावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनान्वय इत्यपि न, 'मल्लो मल्लं गच्छति' 'विहगः पृथिवीं गच्छति' इति प्रयोगानापत्तेः। प्रकृत्यर्थनिष्ठतत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताया अन्यधर्म्मावच्छिन्नसंसर्गत्वविरहादिति चेद्? न। भेदप्रतियोगितावच्छेदकत्वं द्वितीयार्थः। भेदे च प्रकृत्यर्थस्याधेयतासम्बन्धेनान्वयः भेदप्रतियोगितावच्छेदकत्वस्य तु धात्वर्थतावच्छेदकफलान्वितेऽन्वय इत्यत्र तात्पर्यात्। यदि तु—उभयनिष्ठक्रियाजन्यसंयोगस्यैकत्वात् तादृशसंयोगावच्छिन्नव्यापारनिष्ठावच्छेदकताकप्रतियोगिताकभेदस्य कर्मभूतमल्लेऽसत्त्वात् 'मल्लो मल्लं गच्छति'इत्यत्रानुपपत्तिरस्त्येवेति विभाव्यते; तदा द्वितीयार्थभेदप्रतियोगितावच्छेदकत्वस्य धात्वर्थप्रधानीभूते केवलव्यापारेऽन्वयाभ्युपगमान्नोक्तानुपपत्तिः; क्रियाया भेदादिति। नचैवमपि 'चैत्रश्चैत्रं न गच्छति'इत्यादौ नञ्समभिव्याहारे प्रथमान्तपदार्थे 'चैत्रो न पचति'इत्यत्रेव द्वितीयार्थान्वितत्वावच्छिन्नव्यापारान्विताख्यातार्थाभाव एव प्रतिपाद्यः। स च न सम्भवति; चैत्रवृत्तिभेद-

दर्पणः

प्रकृत्यर्थस्याधेयतयान्वयान्न पूर्वोक्तापत्त्यनुपपत्ती। नञ्समभिव्याहारे च नञा तात्पर्य्यवशाच्चैत्रश्चैत्रं न गच्छतीत्यादौ द्वितीयाप्रकृत्यर्थवृत्तित्वविशिष्टतदपरार्थभेदप्रतियोगितावच्छेदकत्वाभावः। क्वचिच्च चैत्रो ग्रामं न गच्छतीत्यादौ द्वितीयाऽर्थवृत्तित्वविशिष्टधात्वर्थसंयोगजनकत्वाभावः क्रियायां बोध्यते। ये तु प्रकृत्यर्थवृत्तित्वविशिष्टसंयोगादिरूपफलस्यैव जनकत्वस्वाश्रयनिष्ठभेदप्रतियोगितावच्छेदकत्वोभयसम्बन्धेन क्रियायामन्वयोपगमाद् भेदप्रतियोगितावच्छेदकत्वस्य द्वितीयार्थत्वमन्तरेणाप्युक्तापत्तिमुद्धरन्ति तन्मते वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितावच्छेदकतयोक्तस्थले उक्तसम्बन्धेन नञा संयोगाभावबोधाऽनुपपत्तिः। परसमवेतत्वं द्वितीयार्थ इति दीधितिविरोधश्च।

एवञ्च 'चैत्रो ग्रामं गच्छति' इत्यत्र ग्रामवृत्तिसंयोगजनिका ग्रामवृत्तिभेदप्रतियोगितावच्छेदिका च या क्रिया तदनुकूलकृतिमांश्चैत्र इति नैयायिकमतपरिष्कारः।

अत्र प्रत्यवतिष्ठन्ते। नञर्थप्रसज्यप्रतिषेधस्य प्रतियोगितया क्रियाऽन्वयित्वमिति व्यवस्थापनात् कथं चैत्रो ग्रामं न गच्छतीत्यादौ नञः संयोगजनकत्वाभावबोधकत्वम्। उक्तञ्च—

पर्य्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्।
प्रसज्ज्यप्रतिषेधस्तु क्रियया सह यत्र नञ्॥ इति।

यत्र नञर्थाभावः क्रियया धात्वर्थव्यापारेण प्रतियोगितया सम्बन्धो भवतीत्युत्तरार्द्धाऽर्थः। तस्मात् तिङन्ते नञ्समभिव्याहारे क्रियाप्रतियोगिकाऽभावबोध एव न्याय्यो न तु क्रियायां फलाभावस्य विभक्त्यर्थाभावस्य वा प्रथमान्तार्थे वा तिङर्थाऽभावस्य क्लृप्तकारणविरहादिति॥

अत्र वदन्ति—यद्धर्म्माऽवच्छिन्ने यद्धर्म्माऽवच्छिन्नत्वं येन संसर्गेण नञ्समभिव्याहारे प्रतीयते; तद्धर्म्मावच्छिन्ने तद्धर्मावच्छिन्नस्य तत्संसर्गावच्छिन्नप्रतियोगिता-

परीक्षा

प्रतियोगिताकत्वस्य व्यापारे विरहादिति चैत्रपदाद्द्वितीयानुपपत्तिरिति वाच्यम्। एतादृशे विषये तत्समभिव्याहारे धात्वर्थव्यापारे चैत्रवृत्तिभेदप्रतियोगितावच्छेदकत्वाभावस्य भावोपगमेन सामञ्जस्यात्। नचैवमपि 'विहगो भूमिं गच्छति; न महीरुहम्' इत्यादौ व्यापारे महीरुहवृत्तिभेदप्रतियोगितावच्छेदकत्वाभावस्य बाधादनुपपत्तिरिति वाच्यम्, अत्र संयोगजनकत्वविशिष्टव्यापारस्य धात्वर्थतयाऽनुरूपसमभिव्याहारवशात्संयोगजनकत्वस्याभावो धात्वर्थव्यापारे कल्प्यते इत्यनुपपत्तिपरिहारात्। यदि तु पदार्थैकदेशस्याभावो बोधयितुं न शक्यते इत्युच्यते; तदा संयोगजनकत्वं व्यापारश्च पृथगेव धातुवाच्यावित्याश्रयणीयम्।

केचित्तु फलव्यापारयोः पृथक् शक्तिः, फले च द्वितीयाप्रकृत्यर्थस्याधेयतासम्बन्धेन फलस्य च जनकत्वस्वाश्रयनिष्ठभेदप्रतियोगितावच्छेदकत्वोभयसम्बन्धेन व्यापारे ऽन्वयापगमान्न 'चैत्रश्चैत्रं गच्छति' इत्यादिप्रयोगापत्तिरित्याहुः, तन्न। 'प्रतियोग्यभावान्वयौ तुल्ययोगक्षेमौ' इति न्यायेन 'चैत्रश्चैत्रं गच्छति' इत्यादौ निरुक्तोभयसम्बन्धावच्छिन्नप्रतियोगिताकस्य फलाभावस्य व्यापारे भानमुपेयम्। स च

धस्तु तण्डुलसमवेतधात्वर्थतावच्छेदकविक्लित्त्यनुकूलतण्डुलान्यसमवेतक्रियाजनककृतिमांश्चैत्र इत्याहुः।

तन्न रोचयामहे; परसमवेतत्वादेर्गौरवेणावाच्यत्वात्। अतिप्रसङ्गः किं द्वितीयायाः, शाब्दबोधस्य वा। नाद्यः। तावद्वाच्यकथनेऽपि तत्तादवस्थ्यात्। गमयति कृष्णं गोकुलमितिवत् पाचयति कृष्णं

---

दर्पणः

काभावो नञ्समभिव्याहारे बुद्ध्यते; इति सकललोकानुभवसिद्धोऽयमर्थः। 'प्रतियोग्यभावाऽन्वयौ तुल्ययोगक्षेमौ' इति वदता दीधितिकृतोपनिबद्धः। एवञ्च—चैत्रो ग्रामं गच्छतीत्यत्र नञ्समभिव्याहारे क्रियायां द्वितीयाऽर्थवृत्तित्वविशिष्टसंयोगजनकत्वस्य बोधात् तत्समभिव्याहारे तत्र तदभावस्य बोधो जायमानः केन वारणीयः। न च कारणाभावः। नञर्थाभावप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधे प्रतियोग्यन्वययोग्याऽर्थोपस्थितेर्हेतुतया तस्याश्च क्रियायां सत्वात्। न तु नञर्थनिष्ठविशेष्यतानिरूपितप्रकारतासम्बन्धेन बोधे धातुजन्यभावनोपस्थितेर्हेतुता। चैत्रश्चैत्रं न गच्छतीत्यादिवाक्यानामप्रामाण्यापत्तेः। चैत्रकर्मकचैत्रकर्तृकगमनक्रियारूपप्रतियोगिनोऽप्रसिद्ध्या नञा तदभावस्य बोधयितुमशक्यत्वात्।

मन्मते तु चैत्रकर्तृकक्रियायाम् चैत्रवृत्तिसंयोगजनकत्वेऽपि चैत्रवृत्तिभेदप्रतियोगितावच्छेदकत्वस्य तस्यामसत्त्वेन नञा तदभावस्य प्रत्यायनात् प्रामाण्योपपत्तेः। अत एव परसमवेतत्वस्य द्वितीयोपपत्तिरुक्तस्थले इति वाच्यम्। 'मैत्रो गच्छति चैत्रं; न चैत्र' इत्यत्र मैत्रक्रियावच्छिन्नप्रतियोगिताकभेदवत्त्वतदीयसंयोगाश्रयत्वयोरुभयोर्द्वितीयार्थयोरबाधेन तदुपपत्तेः। अधिकमग्रे वक्ष्यते।

तस्मात् 'चैत्रो गच्छति' इत्यादौ चैत्रो न कर्मेति व्यवहाराच्च, सर्वथा कर्त्तृव्यावृत्तं धात्वर्थव्यापारप्रयोज्यतद्व्यधिकरणधात्वर्थफलाऽऽश्रयत्वं कर्मत्वं निर्वाच्यम्। तत्र फलव्यापारयोर्धातुलभ्यत्वेऽपि वृत्तित्वे भेदप्रतियोगितावच्छेदकत्वपर्य्यवसिते वैयधिकरण्ये च द्वितीयादेः शक्तिरनन्यलभ्यत्वात् स्वीकरणीयेति। प्रकृतमनुसरामः॥

*विक्लित्त्यनुकूलेति*। इदं तण्डुलाऽन्यसमवेतक्रियाऽन्वयि। यथाश्रुतं दूषयति—*तन्न रोचयामहे इत्यादिना*। ननु परसमवेतत्वस्य द्वितीयार्थत्वं विनाऽतिप्रसङ्गाऽनिरासाद् गौरवं न दोषायेत्यत आह—*अतिप्रसङ्गः किमिति*। *तावदिति*। परसमवेतक्रियाजन्यधात्वर्थताऽवच्छेदकफलशालित्वरूपकर्मत्वस्य द्वितीयार्थत्वस्वीकारेऽपि द्वितीयातिप्रसङ्गस्य तादवस्थ्यादित्यर्थः। तमेवाह—*गमयति कृष्णमित्यादि-

परीक्षा

न सम्भवति। वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगिताऽनवच्छेदकत्वमते तादृशप्रयोगानुपपत्तेरिति दिक्।

नैयायिकमतं खण्डयति—*तन्नेति*। ननु तस्यावाच्यत्वे कथमुक्तातिप्रसङ्गवारणमित्यत आह—*अतिप्रसङ्ग इति*। *तावदिति*। परसमवेतत्वघटितेत्यर्थः। *तत्तादवस्थ्यात्-*अतिप्रसङ्गतादवस्थ्यात्। तमेवातिप्रसङ्गमाह-*गमयतीति*। ननु "गतिबुद्धि"इतिसूत्रोपात्तधात्वतिरिक्तधातुविषयैतादृशकर्मत्वाविवक्षया बोधनान्नो-

गोपः इति द्वितीयापत्तेः। तण्डुलं पचति चैत्र इतिवत्, तण्डुलं पच्यते स्वयमेवेत्यापत्तेश्च। विक्लित्त्यनुकूलतण्डुलान्यसमवेताग्निसंयोगरूपधात्वर्थाश्रयत्वात्। शाब्दबोधातिप्रसङ्गोऽप्युक्तरीत्यैव निरस्तः। परसमवेतत्वस्य शक्यत्वेऽपि परत्वस्य परसमवेतत्वस्य च इष्टाऽन्वयलाभायाऽनेकशः कार्य्यकारणभावाऽभ्युपगमे गौरवा-

---

दर्पणः

ना*। *द्वितीयापत्तेरिति*। द्वितीयोत्पत्तावुक्तकर्मत्वस्य तन्त्रत्वे, गमयति गोकुलं कृष्णमित्यत्र णिजर्थनिरूपितनिरुक्तकर्मत्वस्येव पचिप्रकृतिकणिजर्थकर्मत्वस्य कृष्णे सत्त्वेन पाचयत्यादिप्रयोगेऽपि प्रयोज्यकर्तृवाचकाद् द्वितीयापत्तेः। अतः संज्ञाया एव द्वितीयोत्पत्तौ प्रयोजकताऽङ्गीकरणीया। एवञ्च तत एवातिप्रसङ्गभङ्गे, कृतं तत्र द्वितीयशक्त्येति भावः।

ननु तादृशकर्मत्वमेव द्वितीयानियामकम्। निरुक्तस्थले कृष्णे तत्सत्त्वेऽप्युपात्तगत्यर्थकाद्यतिरिक्तणिजन्तधातुयोगे "गतिबुद्धि" इति सूत्रेण तदविवक्षाबोधनान्नोक्तापत्तिः। विवक्षाया एव विभक्त्युत्पत्तौ नियामकताया वक्ष्यमाणत्वादत आह—*तण्डुलं पच्यत इति*। तण्डुले भवदुक्तद्वितीयानियामककर्मत्वस्य सत्त्वात्तदापत्तिः, मन्मते तु कर्तृसञ्ज्ञया बाधान्न तदापत्तिरिति भावः। तण्डुलान्यसमवेतेत्यनेन परसमवेतक्रियाजन्यत्वं विक्लित्तावस्तीति बोधितम्। धात्वर्थाश्रयादित्यनेन कर्तृसंज्ञासत्त्वमावेद्यते। *उक्तरीत्यैवेति*। तथा व्युत्पन्नानामित्याद्युक्तरीत्यैवेत्यर्थः। धात्वर्थव्यापाराऽनधिकरणाश्रयोपस्थितिरूपहेत्वभावादिति भावः। ननु नाऽस्मन्मतेऽप्युक्तप्रयोगापत्तिस्तत्र व्यापारत्वेन फलस्यैव भानाऽङ्गीकारेण तण्डुलस्य धात्वर्थतावच्छेदकफलशालित्वाऽभावात्। निष्कृष्टभवन्मतेऽपि व्यापारगतपौर्वापर्य्यारोपेण फलस्य व्यापारतायाः स्वीकाराच्चेत्यतो दूषणान्तरमाह—

*परसमेवतत्वस्येति*। *इष्टाऽन्वयेति*। इष्टस्य प्रकृत्यर्थस्य प्रतियोगितासम्बन्धेन परसमवेतत्वस्यैकदेशे परत्वे परसमवेतत्वस्य चाश्रयतया क्रियायामन्वयस्य लाभाय—भानायेत्यर्थः। *अनेकश इति*। प्रकृत्यर्थप्रकारकशाब्दबुद्धिं प्रति द्वितीयाऽ-

परीक्षा

कदोष इत्यत आह—*तण्डुलमिति*। *तण्डुलः* पच्यत इति*। अत्र तण्डुलमिति द्वितीयान्तपदघटितयादृच्छिकसमुदायरूपमेतत्। स्वमते तु न तादृशः प्रयोगः। आख्यातेन कर्मणा उक्ततया द्वितीयाया असाधुत्वात।*धात्वर्थाश्रयत्वादिति*। एतेन कर्तृसञ्ज्ञाऽप्यस्तीति कर्मवद्भावविषयता सूचिता। *उक्तरीत्येति*। विपरीतव्युत्पत्तिमतां भवत्येव। यदि न ज्ञायते; तदा विशेष्यतासम्बन्धेन द्वितीयाप्रकृत्यर्थप्रकारकशाब्दबुद्धिं प्रति विशेष्यतासम्बन्धेन धात्वर्थव्यापारानधिकरणाश्रयोपस्थितेः, सहकारिकारणत्वं स्वीकार्यमिति न शाब्दबोधापत्तिरितिरीत्येत्यर्थः। ननु 'तण्डुलं पच्यते, स्वयमेव'इत्यस्यानापत्तिः, तत्र कर्मण एव कर्तृत्वेन फलव्यधिकरणव्यापारस्य त्यागस्तत्समानाधिकरणव्यापारस्य धातुवाच्यत्वविवक्षा चास्ति फलव्यापारयोस्तु पृथग् धातुवाच्यताऽऽश्रीयते। एवं च धात्वर्थतावच्छेदकफलाश्रयत्वविरहान्न कर्मतापत्तिरिति कथं द्वितीयामापादयतीत्यत आह—*परसमवेतत्वस्येति*। *इष्टान्वयेति*।

न्तरत्वादिति स्पष्टं भूषणे।

एतच्च सप्तविधम्—

निर्वर्त्यश्च विकार्य्यश्च प्राप्यश्चेति त्रिधा मतम्।
तच्चेप्सिततमं कर्म्म चतुर्द्धान्यत्तु कल्पितम्॥
औदासीन्येन यत् प्राप्यं यच्च कर्त्तुरनीप्सितम्।
संज्ञान्तरैरनाख्यातं यद्यच्चाप्यन्यपूर्वकम्॥

इति वाक्यपदीयात्।

यदसज्जायते सद्वा जन्मना यत्प्रकाशते।

---

दर्पणः

धीनाधेयत्वोपस्थितेरिव तदधीनपरसमवेतत्वोपस्थितेः प्रकारतासम्बन्धेन। एवं परसमवेतत्वप्रकारकबुद्धिं प्रति धातुजन्योपस्थितेर्व्यापारत्वावच्छिन्नविशेष्यतासम्बन्धेन हेतुत्वकल्पने चातिगौरवादित्यर्थः। मन्मते तु फलप्रकारकशाब्दबोधक्लृप्तहेतुताकव्यापारोपस्थितिविषयव्यापारांशे द्वितीयाप्रकृत्यर्थावृत्तित्ववैशिष्ट्यनिवेशेनैव नातिप्रसङ्ग इति भावः।

ननु 'चैत्रो मैत्रश्च परस्परं गच्छतः' इत्यादौ धात्वर्थव्यापारस्य द्वितीयाप्रकृत्यर्थवृत्तित्वात्तत्फलानन्वयप्रसङ्गोऽत आह—*स्पष्टमिति*। तथाच द्वितीयाप्रकृत्यर्थावृत्तीत्यनेन द्वितीयाप्रकृत्यर्थवृत्तिभेदप्रतियोगिताऽवच्छेदकत्वस्याविवक्षणात्, 'परस्परं गच्छत' इत्यादौ क्रियायाः परस्परावृत्तित्वबाधेऽपि परस्परनिष्ठभेदप्रतियोगितावच्छेदकत्वस्याबाधान्न फलान्वयानुपपत्तिरित्यादि तत्रोक्तमिति। हरिक्तं कर्मविभागमाह—*तच्चेति*। क्रियाजन्यफलाऽश्रयरूपं कर्मेत्यर्थः॥

*यदसज्जायत इति*। असत्कार्य्यवादमवलम्ब्य। सद्वेत्यादि तु सांख्यमतेन। प्रकाशत इत्यनन्तरं—

"प्रकृतेस्तु विवक्षायां विकार्य्यं कैश्चिदन्यथा।

परीक्षा

द्वितीयार्थपरसमवेतत्वैकदेशभेदे प्रकृत्यर्थस्य तथा परसमवेतत्वस्य धात्वर्थप्रधानीभूत-व्यापारे विशेषणत्वस्य लाभायेत्यर्थः। *अनेकश इति*। प्रकृत्यर्थनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन बोधं प्रति द्वितीयाजन्यभेदोपस्थितिः द्वितीयार्थपरसमवेतत्वनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धिं प्रति धातुजन्यव्यापारोपस्थितिश्च कारणमिति कार्य्यकारणभाव इत्यर्थः। न च भवन्मते व्यापारांशे प्रकृत्यर्थस्याश्रयस्य च फले प्रकारतया तदनुरोधेन कार्य्यकारणभावस्य द्वैविध्यमस्त्येवेति वाच्यम्? भवन्मतेऽप्यपरद्वितीयार्थाधेयत्वांशे प्रकृत्यर्थस्य तस्य च फलांशे प्रकारतामादाय कार्य्यकारणभावान्तरस्य च कल्पनीयतया तेन साम्यादिति। हर्यादिसम्मतं कर्मणो विभागमाह—*एतच्चेति*। ईप्सिततमं कर्म निर्वर्त्यादिभेदेन त्रिधा। *अन्यत्*—ईप्सितमादन्यत् कर्म। औदासीन्यादिभेदेन चतुर्द्धेत्यर्थः। निर्वर्त्यस्य स्वरूपमाह—*यदसदिति*। इदं नैयायिकमतेन। *जन्मनेति*। साङ्ख्यमतेन निर्वर्त्यते निष्पाद्यते इति व्युत्पत्तिरुभयथा निर्बाधा। एवं च यत्नविशेषप्रयोज्योत्पत्ति-

तन्निर्वर्त्यं विकार्यं तु द्वेधा कर्म्म व्यवस्थितम् ॥

दर्पणः

तन्निर्वर्त्त्यम्'' इत्येव वाक्यपदीयपाठः । अन्यथा सामान्यधर्मेण अलक्षितस्य विकार्य्यस्य विशेष्यरूपेण प्रदर्शनेऽर्थान्तरतापत्तेः । तदर्थस्तु—कैश्चित् प्रसिद्धैराचार्य्यैः प्रकृतिविवक्षायां निष्पाद्यं विकार्य्यमित्युच्यते । अन्यथा तदविवक्षायां तन्निष्पाद्यं निर्वर्त्त्यमिति तदर्थः । तत्र घटं करोतीत्यादौ सत्या अपि मृदादिप्रकृतेः परिणामित्वेनाविवक्षा । 'भस्म करोति' इत्यादौ त्वसत्या एव तस्यास्तत्त्वेन सा ।

यद्यपि निर्वर्त्त्यते निष्पाद्यते इति व्युत्पत्या निर्वर्त्त्यत्वम् । तण्डुलानोदनं पचतीत्यादावोदनादौ विकार्य्यकर्म्मण्यप्यस्तिः तथापि प्रकृतिवाचकपदासमभिव्याहृतपदोपस्थाप्यत्वे सति निष्पाद्यत्वरूपपारिभाषिकनिर्वर्त्यत्वस्य विवक्षणान्न दोषः ॥

तदुक्तम्—सती वा विद्यमाना वा प्रकृतिः परिणामिनी ।
यस्य नाश्रीयते तस्य निर्वर्त्त्यत्वं प्रचक्षते ॥ इति ।

यस्य विकृतिकर्म्मणो नाश्रीयते—न प्रयुज्यते, न विवक्ष्यत इति यावत् । अन्यत्-उक्तार्थम् । *विकार्य्यं त्विति* । तल्लक्षणं तु प्रतीयमानप्रकृतिविकृतिभावकत्वे सति क्रियानिर्वाह्यविशिष्टासत्त्वोत्पत्यन्यतरफलवत्त्वम् । घटं करोतीत्यादिनिर्वर्त्यं क्रियानिर्वाह्योत्पत्तिमत्यपि प्रकृतिविकृतिभावाभानान्नातिप्रसङ्गः । प्रकृतिकर्मणस्तादृशविशिष्टासत्त्वाद् विकृतिकर्मणश्च तादृशोत्पत्त्याश्रयत्वाल्लक्षणसङ्गतिः। ईदृशस्थले फलद्वयप्रयोजकव्यापाराऽर्थकत्वं धातोरावश्यकम् । उक्तञ्च भाष्ये—'द्व्यर्थः पचिः' इति । अन्यथैकफलैकव्यापारार्थकत्वस्याकर्मकेष्वपि सत्त्वाद् विशेषोपादनानर्थक्यप्रसङ्गात् ॥

परे तु—"द्व्यर्थः पचिः" इति भाष्याद्, विक्लेदनं निर्वर्त्तनं च पचेरर्थः । 'तण्डुलानोदनं पचति'इत्यस्य तण्डुलान् विक्लेदयन्नोदनं निर्वर्त्तयतीति विवरणात् । तथाच प्रकृते तण्डुलाश्रयविक्लित्त्यनुकूलव्यापाराश्रयाश्रयक ओदनाश्रयकोत्पत्यनुकूलो व्यापार इति बोधः । एवं 'काष्ठं भस्म करोति' इत्यादावप्यूह्यमित्याहुः ॥

तदसत् । भावनाप्रकारकबोधे हेतुत्वेन क्लृप्तायाः कृद्धात्वन्यतरजन्योपस्थितेर्विशेष्यतासम्बन्धेनाख्याताथेंऽभावेन तादृशबोधासम्भवात् । एकयैव क्रियया फलद्वयोत्पत्तिसम्भवेन तद्वाक्यजन्यबोधस्य व्यापारद्वयविषयकत्वकल्पनानौचित्यादाख्यातश-

परीक्षा

मत्वं लब्धम् । नचैवं सति विकार्ये कर्मणि निर्वर्त्यकर्मणो लक्षणमव्याप्तम्, तस्यापि यत्नसाध्यत्वादिति वाच्यम् ? प्रकृतिवाचकपदसमभिव्याहृतपदोपस्थाप्यत्वस्यापि निवेशात् । तदुक्तम्—

सती वाऽविद्यमाना वा प्रकृतिः परिणामिनी ।
यस्य नाश्रीयते तस्य निर्वर्त्यत्वं प्रचक्षते ॥

इति सती विद्यमाना अविद्यमानाऽसती, यस्य विकृतिकर्मणः, प्रकृतिः—प्रकृतिवाचकः शब्दः, नाश्रीयते—न प्रयुज्यते । एवं चैकस्य विवक्षाभेदेनोभयरूपत्वेन व्यवहार इत्युक्तम्भवति । *विकार्यन्त्विति* । प्रकृत्युच्छेदसम्भूतम् । यत्नप्रयोज्यो यः प्रकृतेरुच्छेदो-नाशः, तज्जन्यनाशश्चात्रात्यन्ताप्रतीयमानपूर्वकालिकस्वस्वरूपफल-

प्रकृत्युच्छेदसम्भूतं किञ्चित् काष्ठादिभस्मवत्।

दर्पणः

न्दान्निवृत्तभेदाया एव क्रियया अवगमादिति रूपस्सूत्रीयकैयटाच्च। किञ्च पचेर्व्यापार-द्वयार्थकत्वे नव्यमते क्रियायां द्वित्वाश्रयेन द्विवचनापत्तिर्दुर्वारा।

वस्तुतस्तु विक्लेदनं विक्लित्तिर्निर्वर्त्तनमुत्पत्तिरेवोक्तपदयोर्भावल्युडन्तत्वात्। तथाच–फलद्वयाऽनुकूल एक एव व्यापारो धात्वर्थतया भाष्यकृत्सम्मतः। व्यापारद्व-यार्थकत्वोक्तिस्तु केषाञ्चित् तत्पदयोर्णिजन्तप्रकृतिकल्युडन्तत्वभ्रमनिबन्धनैवेत्यव-धेयम्। यद्यपि विकार्य्यं द्वेधा—प्रकृतिर्विकृतिश्चेत्येव वक्तुमुचितम्, तथापि विकृ-तिद्वैविध्येऽवगते प्रकृतावपि विकार्यत्वं ज्ञातप्रायं भवतीत्याशयेन तदनुक्त्वैव विकृ-तिकर्म विभजते–*प्रकृत्युच्छेदेति*। एतेन क्रियानिर्वाह्याऽभावः प्रतियोगिताऽवच्छेद-कधर्मवत्वं प्रकृतिकर्मत्वमिति ध्वनितम्।

'काशान् कटं करोति, कुसुमानि स्रजं करोति, सुवर्णं कुण्डलं करोति, मृदं घटं करोति, काष्ठं भस्म करोति, तण्डुलानोदनं पचति'इत्यादौ क्रियानिर्वाह्यो यः पूर्वभाव-विशिष्टकाष्ठकाशादिप्रतियोगिकाभावो विशिष्टाऽसत्त्वरूपस्तत्प्रतियोगितावच्छेदकवै-शिष्ट्यवत्वं काशकाष्ठादेरिति तत्तत्प्रकृतौ लक्षणसङ्गतिः। सर्वत्र विशिष्टाभावप्रतियो-गिनि तादृशप्रतियोगितावच्छेदकवैशिष्ट्यसत्वादतिप्रसङ्गवारणाय क्रियानिर्वाह्येति प्रकृ-तधात्वर्थव्यापारनिर्वाह्यार्थकम्। क्वचित् काष्ठतण्डुलादिधर्मिनाशादेव विशिष्टाऽभावो भस्मौदनादिसम्पादकः। क्वचिद्धर्मिणः सत्त्वेऽपि कटस्रगादिसन्दर्भविशेषविरहरूपपूर्व-भावविशिष्टाऽसत्त्वं कटसन्दर्भादिनिष्पादकं क्रियातो निर्वहति॥

*सम्भूतमिति*॥ प्रकृतिनाशप्रयोज्योत्पत्तिमदित्यर्थः। इदं च भस्मवदित्यन्वयि। काष्ठादीति पृथक् पदम्, अन्यथा काष्ठसुवर्णादेस्तुरीयतापत्तेः॥ *भस्मवदिति*॥ तत्तौल्येन वर्त्तमानमन्यदपि विकारजातमित्यर्थः। सादृश्यं च प्रकृतिनाशप्रयोज्योत्प-त्तिमत्त्वेनैव। एवमग्रेऽपि। तथाच प्रकृतिविकृतिभावापन्नकाष्ठभस्मादिविकार्य्यमि-त्यर्थः पर्य्यवस्यति। एवञ्च–'काष्ठं भस्म करोति'इत्यत्र करोतेः प्रतियोगित्वविशिष्टनाश उत्पत्तिश्च फलद्वयम्, तदनुकूलव्यापारश्चाऽर्थः। नाशे प्रतियोगितया काष्ठस्योत्पत्ता भस्मन आधेयतया काष्ठप्रतियोगिकनाशानुकूलो भस्मोत्पादको वर्त्तमानो व्यापार इति बोधः। एवं तण्डुलानोदनं पचतीत्यादावपि।

नैयायिकास्तु–'तण्डुलानोदनं पचति'इति विकार्य्यस्थले प्रकृतिकर्मोत्तरद्वितीयाया नाशकत्वमर्थः। विकृतिकर्मोत्तरद्वितीयायाश्चोत्पादकत्वम्। तण्डुलाद्यन्वितं नाशकत्वं च पाकेऽन्वेति। ओदनाऽन्वितोत्पादकत्वस्य नाशकत्वविशिष्टे पाकेऽन्वयः। नाशे चोत्पत्तेः प्रयोजकत्वमुद्देश्यविधेयभावमहिम्ना भासते। तेन पाकस्य तण्डुलारम्भक-संयोगनाशकत्वेऽपि 'संयोगमोदनं पचति'इति न प्रयोगः। तण्डुलारम्भकसंयोगनाश-स्यौदनोत्पत्तौ तण्डुलनाशेनाऽन्यथासिद्धतया अप्रयोजकत्वात्।

परीक्षा

कः, किञ्चिद्गुणान्तरोत्पत्या पूर्वकालस्थितावयवसंस्थानविजातीयावयवसंस्थानविशि-ष्टासत्वं विलक्षणोत्पत्तिमत्वान्यतरत्वं सामान्यलक्षणं द्रष्टव्यम्। 'काष्ठं भस्म करोति' 'सुवर्णं कुण्डलं करोति'इत्यादौ प्रकृतिविकृत्योरुभयोरपि सत्वाल्लक्षणानुगतिः। प्राप्यस्य

## किञ्चिद् गुणान्तरोत्पत्या सुवर्णादिविकारवत् ॥

दर्पणः

वस्तुतस्तु विकृतिकर्माऽसमभिव्याहृते, 'तण्डुलं पचति'इतिवत् संयोगं पचतीति प्रयोगवारणाय नाशद्वारा नाशकत्वमेव द्वितीयाऽर्थो वाच्य इति प्रकृते प्रयोज्यप्रयोजकभावाऽभानेऽपि न क्षतिः। तथाच तण्डुलनाशक ओदनोत्पादको यो व्यापारस्तदनुकूलकृतिमानिति बोधः। ईदृशस्थले च कर्माख्यातेन प्रकृतं कर्मत्वमेवाऽभिधीयते। अत एव काष्ठानि भस्मराशिः क्रियन्ते इत्यादौ काष्ठपदसमानवचनत्वमाख्यतस्य, न तु भस्मादिविकारवाचकपदसमानवचनत्वम्। भावनाऽन्वयिनि संख्यान्वयनियमात्।

ननु प्रधानाऽप्रधानकर्मवाचककर्मपदसमभिव्याहृत-नी-वहादि-दुहादिप्रकृतिककर्माख्यातस्यैवाप्रधाने दुहादीनां 'प्रधाने नीहृकृष्वहाम्'इत्यनुशासनात् कर्मत्वद्वयाऽनभिधायकत्वाऽनियमेन प्रकृते कर्मत्वद्वयस्यैव तुल्यतया विकृतिगतकर्मत्वस्यापि लकारेणाभिधाने बाधकाभावः। आख्यातस्य विकृतिसमानवचनत्वप्रसङ्गस्तु—

"गृह्णाति वाचकः संख्यां प्रकृतेर्विकृतेर्न हि"।

इत्यनुशासनसिद्धविकृतिसंख्यान्वयबुद्धिं प्रति प्रकृतिसंख्यान्वयपरत्वेनाऽगृह्यमाणाख्यातजन्योपस्थितेर्हेतुत्वकल्पनया निरसनीयः। कथमन्यथा "भस्मीभवन्ति काष्ठानि" इत्यादिप्रयोगा इति चेद् ? न।

'घटपटौ दृश्येते' इत्यत्र द्वित्वस्यैवोभयसाधारणविशेष्यतावच्छेदकाऽपरिचयेन विकारविकारिणोर्द्वयोरेवाख्याताऽर्थविशेष्यत्वे वा वाक्यभेदापत्तेः। न चेष्टाऽपत्तिः। तथा सति 'काष्ठं नाश्यते भस्म क्रियत' इति वाक्यजबोधस्येव 'काष्ठं भस्म क्रियत' इति वाक्यजबोधस्यापि भस्म काष्ठविकृतिरन्यविकृतिर्वेति संशयनिवर्त्तकत्वानुपपत्तेः। समूहालम्बनजनकत्वाविशेषेण काष्ठभस्मनोः प्रकृतिविकृतिभावस्योक्तवाक्यादलाभात्। सत्यामेवैकवाक्यतायां कर्तृप्रत्यये प्रयोज्यप्रयोजकभावस्य विशिष्टाऽन्वयविवक्षानियमेन लाभ इव कर्मप्रत्ययस्थलेऽपि तथा विवक्षाया नियमवशादेव कर्माऽऽत्मनेपदेन भस्मनि काष्ठोच्छेदप्रयोज्योत्पत्तिकत्वरूपकाष्ठविकृतित्वस्य लाभात्।

न च विकृतिवाचकाद् द्वितीयापत्तिः। लकारेण विकृतिकर्मत्वस्यानभिधानेऽपि कर्मत्वान्तरविशेषणतापन्नक्रियायां तस्य विकृत्यर्थसंसर्गत्वाऽभ्युपगमेनैव द्वितीयापत्त्यसम्भवात्। प्रातिपदिकार्थविशेष्यतया कर्मत्वादिविवक्षायामेव द्वितीयाद्यवसरात्॥

न चैवं घटः करोतीत्यापत्तिः। कर्मत्वान्तरविशेषणतानापन्नक्रियायां क्रियान्तरकर्त्तृत्वविशेष्यतापन्नाऽर्थकस्यैव कर्मतासंसर्गेण भानाभ्युपगमात्। अत एव 'काष्ठं भस्मराशिः करोति' इति न प्रयोगः। भस्मराशेः क्रियान्तरकर्त्तृत्वविशेष्यतानापन्नत्वात्। उपपद्यते च 'पश्य मृगो धावति' इत्यादिः।

प्रकृते च 'नीलो घटो भवति'इत्यादावसाधारणधर्मरूपभवने नीलादेराधेयत्वरूपकर्त्तृतासम्बन्धेनाऽन्वयवद्व्युत्पत्तिवैचित्र्येण प्रकृतिकर्मत्वविशेषणतापन्नायां कृधात्वर्थकृतौ भस्मादिरूपविकृतिकर्मणः कर्मतासम्बन्धेनान्वयोपगमेन एकवाक्यत्वोपपत्त्योक्तसंशयनिवर्त्तकत्वोपपत्तेः। तथाचोत्पादकत्वेन भस्मसम्बन्धिकृतिप्रयोज्यनाशप्रतियोगीनि काष्ठानीति 'काष्ठं भस्मराशिः क्रियत' इति वाक्यजो बोधः। सम्बन्धस्य प्रातिपदिकार्थविशेष्यतया अविवक्षणादेव न तत्र षष्ठ्यपि।

अतिरिक्तशक्तिग्रहोपायमाह—

**सम्बन्धिशब्दे सम्बन्धो योग्यतां प्रति योग्यता ॥**

---

दर्पणः

ननु शक्तिग्राहकयोः कोशव्याकरणयोर्विद्यामानत्वाच्छक्तिग्रहोपायकथनं व्यर्थमत आह—*अतिरिक्तेति* ॥ कोशव्याकरणाभ्यामतिरिक्तो यः शक्तिग्रहोपायस्तमित्यर्थः ।

परीक्षा

व्यक्तिपदेन 'अक्ताः शर्करा उपदधाति । इत्यादौ अक्ता इत्यनेन घृतसाधनाञ्जनपरत्वम् । तेजो वै घृतमिति स्तुतिरूपाल्लिङ्गाद् घृतसाधनाञ्जनप्रतिपादनम् । शब्दस्यान्यस्य सन्निधिः—शब्दान्तरसमभिव्याहारः । यथा—'रामो जामदग्न्यः' इत्यत्र जामदग्न्यपदसन्निधानेन रामः परशुरामः । सामर्थ्यम्—कारणत्वम् । तेन यथा—मधुना मत्तः कोकिल' इत्यत्र मधुशब्दस्य वसन्ते । अन्यस्य मधुशब्दार्थस्य कोकिलार्थो न । सामर्थ्याभावात् । औचिती–अर्हता । यथा—

यश्च निम्बं परशुना यश्चनं मधुसर्पिषा ।
यश्चैनं गन्धमाल्याभ्यां सर्वस्य कटुरेव सः ॥

इत्यत्र परशुना इत्यस्य परशुकरणकछेदनपरत्वम् । मधुसर्पिःशब्दस्य तत्करणकसेचनपरत्वम् । गन्धमाल्याभ्यामित्यस्य तत्करणकपूजनार्थत्वम् । देशेन यथा—भात्यत्र परमेश्वर इत्यत्र यथा । अत्र परमेश्वरपदस्य राजधानीरूपाद्देशाद्राजपरत्वम् । कालेन यथा—चित्रभानुर्विभातीत्यत्र चित्रभानुशब्दस्य द्विप्रयुज्यमानस्य दिवाकरे, निशि तु वह्नौ । व्यक्तिर्लिगं पुंस्त्वादि । तेन यथा मित्रं भाति, मित्रो भातीति । अत्र नपुंसकत्वेन सुहृद्, पुंस्त्वेन–आदित्यः । अत्र विकसितमुकुलिताभिनयविशेषसाहित्येन स्तनस्य मुकुलितत्वपीनत्वाद्यर्थविशेषे बुद्धिविशेषविषयत्वेनानुगतीकृतानेकधर्मावच्छिन्नशक्तैतच्छब्दस्याभिधा नियम्यते । अपदेशो नाम—हृदयनिहितहस्तादिनाऽभिमतनिर्देशः ।

इतः सदैतः प्राप्तश्रीनेंत एवार्हति क्षयम् ।
विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम् ॥

अस्मिन्पद्ये इत इत्यत्र य इदं शब्दस्तस्यादेशेनाभिधावक्तुरिति नियम्यते । एतैः संयोगादिभिरेकत्राभिधानियमनानन्तरमनेकार्थशब्देन यदन्यार्थस्य प्रतिपादनं तद्वद्व्यञ्जनयैव । न च श्लेषेण यत्रार्थप्रतिपादनं तत्रोभयत्र तात्पर्यादेवोभयप्रतीतिसम्भवे किं व्यञ्जनयेति वाच्यम् । यत्रोभयमर्थप्रतिपादने तात्पर्यं तत्र श्लेषः । यथा—हरिहरतात्पर्येण—'सर्वतोमाधवः पायात्संयोगङ्गामहीधरौ' इत्यादौ ।

यत्र तु नोभयप्रातिपादने तात्पर्यं किन्त्वेकत्रैव यथा—

भद्रात्मनो दुरधिरोहतनोर्विशालवंशोन्नतेः कृतशिखोमुखसंग्रहस्य ।
यस्यानुपप्लुतगतेः परवारणस्य दानाम्बुसेकसुभगः सततङ्करोभूत् ।

इत्यत्र राज्ञि तदन्वययोग्ये चार्थे प्रकरणेनाभिधानियमेऽपि गजस्य तदन्यप्रयोज्यस्य चार्थस्य या प्रतीतिः सा व्यञ्जनैवेत्याशयात् । अधिकमर्थतोऽवधेयम् ॥३८॥

ननु पुण्यजननयोग्यत्वं साधुत्वम् , तद्व्यञ्जकं च कोशव्याकरणादिति प्रागुक्तम् ।

**समयाद् योग्यतासंविन्मातापुत्रादि योगवत् ॥३९॥**

**सम्बन्धो-विषयः। योग्यतां प्रति योग्यता-सम्बन्धिशब्दं प्रति योग्यता विषय इति। समयाद्-व्यवहारात्, योग्यतासंवित् शक्तिग्रहः। घटपदमत्र योग्यमेतत्सम्बन्धीति व्यवहारात्, सा ग्राह्येत्यर्थः ॥३९॥**

**इति वैयाकरणभूषणसारे शक्तिनिर्णयः ॥ ६ ॥**

---

दर्पणः

तथाचाऽनधीतव्याकरणानां तेन शक्तिग्रहाऽसम्भवात् तदर्थं व्यवहाररूपमप्युपायमाहेतिपर्य्यवसानान्न वैयर्थ्यमिति भावः। एतेन ग्रन्थकृताऽतिरिक्तशक्तेरनङ्गीकारेण तद्ग्रहोपायप्रदर्शनं व्यर्थमित्याशङ्कापि समाहिता। विषयपदाध्याहारेण मूलं व्याचष्टे—*सम्बन्धो विषय इति* ॥

तथाचाऽयमेतत्सम्बन्धीति व्यवहारे सम्बन्धो विषयः। योग्यतां प्रति इदमत्रयोग्यमिति योग्यताव्यवहारे योग्यताविषयो यतोऽतः समयात् तद्व्यवहाराद्योग्यतायां बोधकतारूपशक्तेः। *संवित्*। ज्ञानं भवतीत्यर्थः।

तत्र दृष्टान्तो—*मातापुत्रादियोगवदिति* ॥ यथाऽयमेतत्सम्बन्धीति व्यवहारस्तयोर्जन्यजनकभावनिश्चायकस्तद्वदित्यर्थः।

अन्ये त्विदं हरिपद्यमित्थं व्याचक्षते। सम्बन्धिशब्दे अयमेतत्सम्बन्धीति व्यवहारे योग्यतां प्रति अर्थबोधजनकताऽवच्छेदकधर्मवत्त्वरूपयोग्यताव्यवहारनिरूपितो यस्तादात्म्यलक्षणो अन्यो वा सम्बन्धः; स एव योग्यताऽपरपर्य्यायो विषय इति शेषः। स चानादिर्वृद्धव्यवहारापरपर्य्यायोऽस्मदादिसमयान्निश्चीयते, न तु बोधजनकत्वमेव शक्तिरेतद्बोधजननेऽयं योग्य इति व्यवहारात्। अत एवैतच्छेषे—

सति प्रत्ययहेतुत्वं सम्बन्धे उपपद्यते।
शब्दस्याऽर्थे यतस्तस्मात् सम्बन्धोऽस्तीति गम्यते॥

इत्यन्तेनोक्ताऽर्थः स्पष्टीकृत इति। अधिकमन्यतोऽवधार्यम् ॥ ३९ ॥

इति भूषणसारदर्पणे शक्तिस्वरूपनिरूपणम् ॥ ६ ॥

परीक्षा

एवं च येषां कथनं व्याकरणेन कोशेन वा तेषामसाधुतापत्तिरत आह—*अतिरिक्तेति*। अत्र हि अतिरिक्तेति शक्तिग्रहोपायस्य विशेषणम्। एतेनातिरिक्तवादस्य स्वमतेऽभावादिदमसङ्गतमित्यपास्तम्। तदुदाहरणम्—*सम्बन्धिशब्द इति*। इदं च विषयपदाध्याहरेण व्याचष्टे—*सम्बन्धो विषय इति*। सप्तम्यर्थो निरूपितत्वम्। तस्य विषयपदार्थैकदेशविषयतायामन्वयः। योग्यताशब्दः शक्तिपर्यायः। योग्यताशब्दस्य शक्तिपरत्वे लौकिकव्यवहार एव साधक इत्याशयेनाह—*घटपदमत्रेति*। तत्र दृष्टान्तोपादानम्–मातापुत्रादियोगवदिति। केचित्तु योग्यवदिति पाठः। यथा—अयमेतत्सम्बन्धीदं च तथाव्यवहारात्तयोर्जन्यजनकभावनिश्चयस्तद्वत् ॥ ३९ ॥

इति भूषणसारटीकायां शक्तिनिर्णयः।

## ॥ अथ नञर्थनिर्णयः ॥

नञर्थमाह—

**नञ्समासे चापरस्य प्राधान्यात् सर्वनामता ।**
**आरोपितत्वं नञ्द्योत्यं न ह्यसोऽप्यतिसर्ववत् ॥४०॥**

नञ्समासे अपरस्य-उत्तरपदार्थस्य प्राधान्यात् सर्व्वनामता सिद्ध्यतीति शेषः । अत एव आरोपितत्वमेव नञ्द्योत्यमिति । अभ्युपेयमिति शेषः ।

अयम्भावः—असर्व्वं इत्यादावारोपितः सर्व्वं इत्यर्थे सर्वशब्दस्य

---

### दर्पणः

अथ नञर्थनिर्णयः ।

"समासे खलु भिन्नैव" इत्यत्र पङ्कजशब्दवदिति वदता समासे तद्घटकप्रत्येकशक्तिसहकृतसमुदायशक्तेर्व्यपेक्षात्वमङ्गीकृतम् । तच्चाऽनुपपन्नम् । यत्र समासघटकप्रत्येकपदस्याऽनर्थकत्वं तत्र प्रत्येकशक्तिसाचिव्याऽसंभवात् यथा नञ्समासघटकनञः ।

द्वयोरर्थाऽभिधाने हि व्यापारो नैव विद्यते । इत्युक्तेः ॥

एवञ्च जहत्स्वार्थावाद इवेदृशस्थले उत्तरपदार्थाऽदिप्राधान्यस्य स्वरसतोऽनुपपत्तिरपीतीमां शङ्कां परिहर्त्तुं नञर्थनिरूपणमित्याह-*नञर्थमिति* ॥ मूले ॥ *नञ्समास इति* ॥

अयम्भावः-'घटो न पटो' 'घटो नाऽस्ति' इत्यादावभावशाब्दबोधस्य सार्वजनीनप्रसिद्धिसिद्धत्त्वान्नञोऽभावार्थकत्वमावश्यकम् । तथाचोत्तरपदार्थप्राधान्यादिव्यवस्था सुलभा । यद्यपि घटो नेत्यादावभावविशेष्यक एव बोधस्तथाप्यऽसर्वं इत्याद्यनुरोधेनारोपितत्वार्थकत्वमपि नञोऽङ्गीकरणीयमिति शेषपूरणेन व्याचष्टे सारे-*सिद्ध्यतीति* ॥ *अत एवेति* ॥ प्राधान्यानुपपत्तेरेवेत्यर्थः ॥

ननु नञस्तत्राभावार्थकत्वे कथं प्राधान्यानुपपत्तिरित्यतोऽभावार्थमाह—*अयम्भाव इति* ॥ अन्यथा आरोपितत्वार्थकत्वानभ्युपगमे भेदार्थकत्व इति यावत् ॥

### परीक्षा

अथ नञर्थनिर्णयः ।

अथ "समासे खलु भिन्नैव शक्तिः"इत्यादिना अतिरिक्त एकार्थीभावो व्यवस्थापितः, एवं च जहत्स्वार्थायामेव पर्यवसानम् । उत्तरपदार्थप्रधानोऽयं समास इत्यादयो व्यवहाराश्चानुपपन्ना इत्याशङ्कापनोदाय नञर्थकथनमित्याह—*नञर्थमिति* । 'नञ्समास' इति कथनेन यत्र न समासस्य प्रयोगः, किन्तु 'घटो न पटः' 'घटो नास्ति' इत्यादौ तत्र नञोऽभावार्थकत्वेनापि निर्वाहो भवति । यस्त्वस इत्यत्राप्यभावस्य प्राधान्यस्वीकारे सर्वनामकार्यन्न स्यादतो नञ्समासे 'आरोपितत्वन्नञ् द्योत्यम्' इत्यावश्यकमित्याशयः प्रकटीकृतः ।

तदेवोपपादयति-*अयम्भाव इत्यादिना* । अन्यथा पूर्वपदार्थप्राधान्ये तस्य नञ-

प्राधान्याऽबाधात् सर्वनामता सिद्ध्यति । अन्यथा अतिसर्व्व इत्यत्रेव सा न स्यात् । घटो नास्तीत्यादावभावविषयकबोधे तस्य विशेष्यताया एव दर्शनात् । अस्मद्रीत्या च स आर्थो बोधो मानसः ।

तथाचासर्व्वस्मै इत्याद्यसिद्धिप्रसङ्गो नेति । अत्र चारोपितत्वमारोपविषयत्वम् । आरोपमात्रमर्थो; विषयत्वं संसर्ग्ग इति निष्कर्षः । द्योत्यत्वोक्तिर्निपातानां द्योतकत्वमभिप्रेत्य ॥ ४० ॥

'घटो नास्ति' 'अब्राह्मण' इत्यादावारोपबोधस्य सर्वानुभवावि-

---

दर्पणः

*सा*—सर्वनामसंज्ञा ॥ *न स्यादिति* । असर्वं इत्यत्र नञोऽभेदार्थकत्वे तत्र प्रतियोगितया सर्वपदार्थस्योपसर्जनत्वेन संज्ञोपसर्जनानां सर्वादिवहिर्भूतत्वेनाऽतिसर्वं इत्यादाविव तदप्रवृत्तेरिति भावः । ननु भेदप्रतियोगी सर्वं इति तत्र बोधाभ्युपगमान्नोत्तरपदार्थस्य प्राधान्यहानिरत आह—*घटो नास्तीत्यादाविति* ॥ *तस्य*—नञर्थस्य ॥ नञर्थाऽभाववत्त्वस्य विशेष्यतायां तन्त्रत्वादिति भावः ।

ननु तवाप्यघटः पट इत्यतो घटभिन्नः पट इति सर्वसिद्धप्रतीत्यनुपपत्तिरत आह-*अस्मद्रीत्येति* ॥ *स*-भेदबोधः ॥ *आर्थं इति* ॥ अर्थादुपस्थितिविषयादागत इत्यर्थः ॥ *मानस इति* । तत्र शाब्दत्वप्रत्ययत्वसिद्ध एवेति भावः । नन्वसर्वशब्दस्य सर्वनामत्वाभावे का क्षतिरत आह-*तथाचेति* ॥ *अत्र चेति* ॥ आरोपितत्वं नञ्वाच्यमिति कल्पे चेत्यर्थः ॥ *निष्कर्ष इति* ॥ विषयत्वस्य संसर्गमर्य्यादयैव लाभादनन्यलभ्यारोपस्यैव नञर्थत्वं न त्वारोपविषयत्वस्य गौरवादिति भावः । नन्वारोपस्य वाच्यत्वाभ्युपगमे द्योतकताप्रतिपादकमूलविरोधोऽत आह-*द्योत्यत्वोक्तिरिति*॥ वाच्यस्याऽपि तस्य विशेषणतैव नाभाववद्विशेष्यतेति सूचयितुमेव तथोक्तिरिति भावः ॥ ४० ॥

*घटो नास्तीति* ॥ यद्यपि समासयोग्यनञ एवारोपाऽर्थकत्वं मूले उक्तम्, तथापि घटो नाऽस्तीत्युक्तिरत्रेव तत्राऽप्यारोपाननुभव इति दृष्टान्तार्थत्यवधेयम् । नञ्द्यो-

परीक्षा

र्थाभावस्य दर्शनादिति । घटो नास्तीतिशब्दस्य स्वमते घटाभावः कालसम्बन्धीति बोधः । स्वमते तु घटाभिन्नैककर्तृकवर्तमानकालिकसत्ताभाव इति उभयथाप्यभावस्य प्रतियोगिनिरूपितप्राधान्येनैव भानम् । *स*-अभावविशेष्यकबोधः । *आर्थं इति* । अर्थादागत उपस्थितिविषयादागत इति यावत् ।

*इत्याद्यसिद्धिरिति* । "संज्ञोपसर्जनप्रतिषेधः" इति वार्तिकात्सर्वनामेति महासंज्ञाकरणाद्वाऽसिद्धिरित्यर्थः । अत्र 'आरोपितत्वन्नञ् द्योत्यम्' इतिकल्पे लाघवादाह-*आरोपमात्रमिति* । नन्वारोपितत्वन्नञ्वाच्यमित्येवास्त्वित्यत आह—*द्योत्यत्वोक्तिरिति* । एवञ्च द्योत्यार्थस्य विशेषणताया अन्यत्र सिद्धान्तित्वाद् । अतः 'असर्वस्माद्'इत्यादौ सर्वनामकार्यं सिध्यतीति भावः ॥ ४० ॥

घटो नास्तीतिवदित्यसङ्गतम्, समासयोग्यस्य नञ एवारोपितत्वद्योतकतायामूलकृतोक्तत्वादत आह-*अनुभवविरुद्धत्वादिति* । तथाचारोपितत्वाननुभव एव तस्य

रुद्धत्वात्पक्षान्तरमाह—

**अभावो वा तदर्थोऽस्तु भाष्यस्य हि तदाशयात्।**
**विशेषणं विशेष्यो वा न्यायतस्त्ववधार्यताम् ॥४१॥**

तदर्थो नञर्थः। अर्थपदं द्योत्यत्ववाच्यत्वपक्षयोः साधारण्येन कीर्त्तनाय ॥ *भाष्यस्येति* ॥ तथाच नञ्सूत्रे महाभाष्यम्—"निवृत्तपदार्थकः" इति। निवृत्तं पदार्थो यस्य, "नपुंसके भावे क्तः" (पा० सू० ३।१।११४) इति क्तः। अभावार्थक इत्यर्थः।

यत्तु—निवृत्तः पदार्थो यस्मिन्नित्यर्थः। सादृश्यादिनाऽध्यारोपितब्राह्मण्याः क्षत्रियादयोऽर्थाः यस्येत्यर्थ इति कैय्यटः, तन्न। आरोपितब्राह्मण्यस्य क्षत्रियादेर्नञ्वाच्यत्वात्।

---

दर्पणः

त्यमित्यत्र नञो विशेषणतया व्यवधानेन चोपस्थितत्वेऽपि तत्पदादीनां बुद्धिस्थपरामर्शकत्वात्तदा तत्परामर्शो नाऽनुचित इत्याह—*तदर्थो नञर्थ इति* ॥ *साधारण्येनेति* ॥ प्रकृतेऽर्थपदस्य तज्जन्यबोधविषयपरतया पक्षद्वयसंग्रहः। तत्रासति बाधके वाचकत्वमेव सति तु तस्मिन् द्योतकतापीति भावः ॥ *नञ्वाच्यत्वादिति* ॥

परीक्षा

दृष्टान्ततयोपादानमिति भावः। *साधारण्येनेति*। अर्थपदस्य तज्जन्यबोधविषयार्थकत्वात्। एवञ्चासति बाधकेऽभावो वाच्य एव। यदि बाधकावतारस्तदा द्योत्यत्वं तस्येति साधारण्येन व्याख्यानमावश्यकम्। *भाष्यस्येति*। नञ्तत्पुरुषस्य पूर्वपदार्थप्राधान्ये 'अस' इत्यादौ सर्वनामकार्यन्न प्राप्नोतीति दोषे सत्युत्तरपदार्थप्रधानोऽयं समास इति पक्ष उक्तः। अत्र पक्षे भेदस्य नञ्वाच्यस्य प्रातियोगितासम्बन्धेनोत्तरपदार्थे विशेषणत्वे भेदप्रतियोगी ब्राह्मण इत्यर्थः स्यात्। तथाच 'अब्राह्मणमानय'इत्युक्ते ब्राह्मणमात्रस्यानयनं प्राप्नोति नञः प्रयोगान्नञर्थविशिष्टस्यानयनं भविष्यति कः पुनरसौ नञर्थः। निवृत्तः पदार्थः ब्राह्मणदृष्टस्य गोत्रादेर्दर्शनादृष्टोपदेशाद्वा पूर्वं ब्राह्मणोऽयमित्यध्यस्यति। ततः पश्चादयं लभते 'नायं ब्राह्मण' इति। ततोऽब्राह्मणोऽयमिति प्रयुङ्क्ते। आतश्च तद्दृष्टगुणदर्शनादृष्टोपदेशाद्वा ब्राह्मणत्वाध्यवसायपूर्वकमेव 'नायं ब्राह्मण' इति ज्ञानं तद्वेङ्गालवर्णमापणे आसीनं दृष्ट्वा ब्राह्मणोऽयमित्यध्यवस्यति। यथास्थितं वस्तु तत्वतस्तस्य निर्ज्ञातं भवतीति भाष्यस्येत्यर्थः। *तदाशयात्*—अभावस्य तदर्थत्वमित्याशयात्। भाष्याशयम्प्रकटयति—*तथाचेति*।

कैय्यटमतं दूषयितुमादौ कैयटोक्तव्याख्यानमनुवदति-*यत्त्विति*। अध्यारोपितब्राह्मण्या इत्यत्र बहुव्रीहिः। अध्यारोपितं ब्राह्मण्यं येष्वित्यर्थेनान्यपदार्थस्य ब्राह्मणत्वप्रकारकाध्यारोपविशेष्यस्य लाभे तस्य नञ्वाच्यत्वमनुभवविरुद्धमित्याशयेन दूषयति—*नञ्वाच्यत्वादिति* । ननु तद्भाष्येण सदृशस्तद्वेयं कालवर्णमित्यादि-

दर्पणः

यद्यप्युत्तरपदार्थप्राधान्येन नञ्तत्पुरुषस्य ब्राह्मणमात्रस्याऽऽनयनं प्राप्नोति। नञः प्रयोगान्नञर्थविशिष्टस्यानयनं भविष्यति। "कः पुनरसौ नञर्थो? निवृत्तपदार्थकः। ब्राह्मणदृष्टस्य गौरत्वादेदर्शनाद् दृष्टोपदेशाद्वा पूर्वमब्राह्मणोऽयमित्यध्यवस्यति। ततः पश्चादुपलभते नाऽयं ब्राह्मण इति। ततोऽब्राह्मणोऽयमिति प्रयुङ्क्ते। अतश्च तद्दृष्टगुणदर्शनाद् दृष्टोपदेशाद्वा ब्राह्मणत्वाद्यध्यवसायपूर्वकमेव नाऽयं ब्राह्मण इति ज्ञानम्। नह्ययं कालवर्णमापणे दृष्ट्वाऽध्यवस्यति ब्राह्मणोऽयमिति। यथास्थितं वस्तुतत्त्वं तस्य निर्ज्ञातं भवति" इति नञ् सूत्रभाष्यपर्यालोचनया कैयटोक्ताऽर्थस्यैव साधुत्वं लभ्यते। तथापि तद्भाष्यस्याऽभेदप्रत्यक्षे क्वचिद् योग्याऽनुपलब्धेर्हेतुत्वप्रदर्शनपरतयैवोपपत्तेर्नञ आरोपवाचकत्वे तदुपष्टम्भकत्वाऽभावात्। अन्यथाऽत्यन्ताऽसदृशे उक्तयुक्त्या तदारोपासम्भवेन तत्र नञर्थस्तदर्थकत्वासम्भवादघटः पट इत्यनापत्तेः। 'प्रतियोग्यभावाऽन्वयौ तुल्ययोगक्षेमौ'इति तान्त्रिकोक्तेर्नीलो घट इत्यादौ तादात्म्येन घटांऽशे नीलपदार्थभानान्नञ्समभिव्याहारे तादात्म्यसम्बन्धावच्छिन्ननीलाभावबोधस्य सर्वानुभवसिद्धस्य नञोऽभावार्थकत्वं विनाऽनुपपत्तेर्नेदं रजतमिदं रजतमिति वाक्यजन्यबोधयोस्तत्तदभावानवगाहितया परस्परप्रतिवध्यप्रतिबन्धकभावाऽनापत्तेश्च नञो भेदार्थकत्वमावश्यकम्।

नच नञो भेदार्थकत्वेऽब्राह्मणमानयेत्यादितो ब्राह्मणभिन्नलोष्टादेरपि बोधाऽऽपत्तिः। न चेष्टापत्तिः। "न ह्यब्राह्मणमानयेत्युक्ते लोष्टमानीय कृती भवति" इति भाष्यविरोधादिति वाच्यम्। घटत्वेन घटार्थकघटपदात् सन्निहितव्यक्तिबोधवत् प्रकरणादिना ब्राह्मणभिन्नमात्रार्थकाद् ब्राह्मणपदात् क्षत्रियादेरेव बोधसम्भवात्। तस्मादघटो न पट इत्याद्यसमस्ते नञोऽभेद एव शक्तिर्भेदत्वस्याखण्डोपाधितया तस्य शक्यताऽवच्छेदकत्वे लाघवात्। समासघटकस्य तस्य तूत्तरपदस्य तद्भिन्ने लक्षणायां तात्पर्यग्राहकत्वमेव॥

नच "न ब्राह्मणै रेतैरुपद्रुतम्"इत्यादौ नञो भेदार्थकत्वे तत्प्रतियोग्यनुयोगिवाचकपदयोः समानविभक्तिकत्वाऽनुपपत्तिः। सामानाधिकरण्याभावादिति वाच्यम्। प्रतियोग्यनुयोगिनोरभेदाऽन्वयबोधौपयिकाकाङ्क्षायां सत्यामेव नञा भेदबोधनेन तयोः समानविभक्तिकत्वस्य तदुपजीव्यत्वात्। एवञ्च नञा भेदबोधनं प्रतियोग्यनुयोगिवाचकपदयोः समानविभक्तिवाचकत्वनियामकम्। अत एव 'भूतले न घट' इत्यादौ न भेदबोधः।

परीक्षा

नोक्तप्रकारेण ब्राह्मणोऽयमिति प्रयोगात्कैयटोक्त एवार्थो युक्त इति चेद्? न। अभावप्रत्यक्षे प्रतियोग्यारोपः कारणमिति प्राचीनोक्तस्याभावप्रत्यक्षकारणस्य प्रदर्शकं तद्भाष्यमिति कल्पनासम्भवात्।

वस्तुतस्तु सादृश्याद्यत्राभेदेनोपादानन्तत्रैव भेदप्रतीतिरिति न नियमः। 'घटो न पटः' 'नीलो न रक्त' इति रीत्याऽत्यन्तासदृशेऽपि नञः प्रयोगदर्शनात्। नचाभावस्य भेदरूपस्य वाच्यत्वे तस्य भेदस्य विशेषणत्वपक्षे ब्राह्मणमात्रस्य 'अब्राह्मणमानय' इति वाक्यजन्यबोधानन्तरमानयनमप्राप्नोतीति दूषणमस्त्येवेति वाच्यम्। यथेदं 'नीलम्फलमानय'इत्युक्ते तद्घटकफलपदस्य सन्निहितफलपरत्वमेव। व्यक्ति-

दर्पणः

दृश्यते च—"यजतिषु येयजामहं करोति नानुयाजेषु" इत्यत्र नञा पर्य्युदासबोधः। उक्तवाक्ये यजतिशब्दो यागस्वरूपवचनः। तथाचाऽनुयाजभिन्नेषु यागेषु येयजामहशब्दवन्मन्त्रं करोति = उच्चारयतीत्यर्थः। अत एवात्रानुयाजभिन्नेषु यजतिषु येजजामहपदवन्मन्त्रप्रयोगरूपैकाऽर्थविधानादेकविधेयार्थकत्वरूपैकवाक्यत्वमुपपद्यते। अन्यथा यागेषु येयजामहपदवन्मन्त्रविधानमनुयाजेषु निषेधविधानमिति विधेयद्वयार्थकत्वरूपवाक्यभेदापत्तेर्येयजामहपदानुषङ्गकल्पने गौरवाच्चेति भावः॥

अन्येतु शास्त्रविहितप्रतिषिद्धत्वात्, षोडशिग्रहणाग्रहणवद्विकल्पापत्तेर्नाऽनुयाजेष्वित्यत्र नञः प्रतिषेधार्थकत्वम्। तथाहि–क्रियायाः कारकसाकाङ्क्षत्वाद् विनिगमनाविरहेण सकलकारकविशिष्टां प्रतियोगिभूतां भावनामुद्दिश्याऽभावविधिस्तत्र वाच्यः। एवञ्चोद्देश्यस्य प्रसिद्ध्यर्थं तत्प्राप्तिरपेक्षिता। प्राप्तिसापेक्षत्वात् प्रतिषेधस्य। प्राप्तिश्च–क्वचिद्रागतो, यथा "न कलञ्जं भक्षयेत्" इति। तत्र कलञ्जभक्षणादे रागत इष्टसाधनत्वाऽवगत्या प्रसक्तायाः कलञ्जभक्षणभावनाया निषेधशास्त्रेण निवृत्तिविषयत्वेऽवगतेऽर्थात् तद्विषयकलञ्जभक्षणस्यानिष्टसाधनत्वाक्षेपात् ततो निवृत्तिः॥ प्रकृते तु 'येयजामहङ्करोति, इति शास्त्रादेव सा। एवञ्च निषेधस्य शास्त्रविषयत्वेन प्राबल्यवद् विधिशास्त्रस्याऽप्युपजीव्यत्वेन प्राबल्यान्निषेधेन विधेरत्यन्तबाधायोगाद् विकल्प एव प्राप्नोति

विकल्पे च 'व्रीहिभिर्जुहोति' 'यवैर्वा जुहोति' इत्यादौ प्रथमं व्रीह्यनुष्ठाने वेदस्य विपर्य्यासरूपमितिजनकत्वासम्भवाद्यवशास्त्रस्याप्राप्ताप्रामाण्यस्वीकारः, प्रतीताप्रामाण्यपरित्यागश्चेति दोषद्वयम्। प्रयोगान्तरे यवोपादाने यवशास्त्रस्य स्वीकृताप्रामाण्यपरित्यागः परित्यक्तप्रामाण्योपादानञ्चेति दोषद्वयमिति चत्वारो दोषाः। पुनस्तृ-

परीक्षा

वचनानां सन्निहितपदार्थबोधकत्वमसति बाधके इत्यस्य स्वीकारात्तथा प्रकरणादिना 'अब्राह्मणमानय' इति वाक्यघटकस्याब्राह्मणपदस्य "नह्यब्राह्मणमानयेत्युक्ते लोष्टमानीय कृती भवति' इति भाष्याद्ब्राह्मणविशिष्टभेदाश्रये लक्षणा निरूढा अस्तीति कल्पनात्। साऽपि लक्षणा न समुदायस्य; किन्तु नञ एवोत्तरपदार्थविशिष्टभेदाश्रये लक्षणा, प्रतियोगिवाचकमुत्तरपदं तात्पर्य्यग्राहकमितिस्वीकारात्। नच नञ्समासाभावे नञो भेदार्थकत्वे प्रतियोग्यनुयोगिनोरभेदेनान्वयाभावात् तद्वाचकपदयोः समानविभक्तित्वानुपपत्तिरिति वाच्यम्। यत्र नञ्समभिव्याहाराभावे प्रतियोग्यनुयोगिनोरभेदान्वयबोधौपयिकाकाङ्क्षातत्रैव नञो भेदार्थकत्वम्। तादृशी चाकाङ्क्षाप्रतियोगिनोः समानविभक्तिकत्व एव भवति। अत एव 'भूतले न घट' इत्यत्र नञो भेदार्थकत्वम्, किन्त्वत्यन्ताभावार्थकत्वमितिप्रवादः साधुरेव। एवञ्च प्रतियोग्यनुयोगिनोः समानविभक्तिकत्वे भेदार्थकत्वोपजीव्यम्। अत एव "प्रतियोग्यभावान्वयौ तुल्ययोगक्षेमौ" इत्यस्यापि प्रवादस्य नानुपपत्तिरित्याशयात्। तदर्थश्च नञोऽभावे यद्धर्मावच्छिन्ने येन सम्बन्धेन प्रतियोगिनः प्रकारतया भानम्, नञ्समभिव्याहारे तत्र तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य प्रकारतेति। अत एव 'यजतिषु येयजामहे; 'करोतिनानुयाजेषु' इत्यत्र नञः पर्य्युदासपरतया एकवाक्यतेति सिद्धान्तोपपत्तिः। अत्र जयतिशब्दो यागपरः। येयजामहशब्दो येयजा-

दर्पणः

तीये प्रयोगे व्रीह्युपादाने व्रीहिशास्त्रस्य स्वीकृताऽप्रामाण्यपरित्यागस्त्यक्तप्रामाण्यस्वीकारश्चेति दोषद्वयम्। चतुर्थे यवोपादाने व्रीहिशास्त्रस्यास्वीकृताप्रामाण्यस्वीकारः; स्वीकृतप्रामाण्यत्यागश्चेति दोषद्वयमिति चत्वारोऽन्येऽपीत्यष्टदोषविकल्पापत्त्या नञनुयाजपदाभ्यामनुयाजभेदो बोध्यते। सोऽयं पर्य्युदासः। अस्मिंश्च पक्षे येयजामहो न कर्त्तव्यतया विधीयते। 'यजतिषु येयजामहङ्करोति' इत्यनेनैव तद्विधानात्। किन्तु सामान्यशास्त्रविहितयेयजामहमनूद्य तस्याऽनुयाजव्यतिरिक्तविषयता बोध्यते।

तथाच सामान्यशास्त्रस्य विशेषविधिसापेक्षत्वान्नानुयाजेष्वित्यनेनानुयाजव्यतिरिक्तविषयसमर्पणादनुयाजव्यतिरिक्तेषु येयजामहः कर्त्तव्यतया प्रतीयतेऽनुयाजेषु तु न कर्त्तव्यतया प्राप्तो, नाऽपि प्रतिषिद्धः स इति न विकल्पः। नच नञा निषेधबोधनेऽपि पदशास्त्रेणाऽऽहवनीयशास्त्रस्येव, नाऽनुयाजेष्विति विशेषशास्त्रेण 'यजतिषु येयजामहङ्करोति'इतिसामान्यशास्त्रस्य बाधान्न विकल्प इति वाच्यम्।

परस्परनिरपेक्षयोर्हि बाध्यबाधकभावः। पदशास्त्रेणाऽऽहवनीयशास्त्रस्यानपेक्षणात् स उचितः। निषेधशास्त्रस्य तु प्रतियोगिप्रसिद्ध्यर्थमस्त्यपेक्षा विध्यर्थस्य। "प्रसक्तं हि प्रतिषिद्ध्यते"इति न्यायात्तेन तद्बाधाऽसम्भवात्; किन्तूक्तयुक्त्या विकल्प एव। तथा च द्विरदृष्टकल्पनाप्रसङ्गोऽपि। विधेर्ह्येवं ज्ञायते। यदनुयाजेषु येयजामहकरणेन कश्चनोपकारो भवति; निषेधाच्च तदकरणादनृतवदनाकरणादिव दर्शपूर्णमासयोः। स चोपकारो दृष्टरूप एवेत्यतोऽपि विकल्पो न युक्त इत्याहुः॥

अत्र केचित्-निषेधशास्त्राऽनालोचनेन सामान्यशास्त्रालोचनमात्रेण भ्रमात्मकप्रतियोगिप्रसिद्ध्याऽभावबोधनसम्भवेन विकल्पाऽप्रसक्तेः। विशेषनिषेधे समान्यविधेस्तदितरपरत्वस्य 'ब्राह्मणेभ्यो दधि दातव्यं,कौण्डिन्याय न दातव्यम्'इत्यादौ व्युत्पत्तिसिद्धत्वाच्च।

न च तत्रापि पर्य्युदास एव नञा बोध्यते। नञा पर्य्युदासबोधने विशेष्यविशेषण-

परीक्षा

महशब्दवन्मन्त्रप्रयोगपरः। अनुयाजभिन्नेषु यागेषु येयजामहशब्दवन्मन्त्रप्रयोगं कुर्य्यादित्यर्थः। एवञ्चोभयोरेकविधेयकोद्देश्यकान्वयबोधजनकत्वरूपैकार्थकत्वस्योपपत्तिः। यद्यत्र नञोऽत्यन्ताभावार्थकत्वं स्यात्तदा यजतिषु येयजामहशब्दवन्मन्त्रप्रयोगङ्कुर्यात्। अनुयाजेषु येयजामहशब्दवन्मन्त्रप्रयोगन्न कुर्यादित्यर्थे वाक्याभेदापत्तिः। किञ्चात्यन्ताभावार्थकत्वे प्रसक्तं हि प्रतिषिध्यते इति न्यायेन 'यजतिषु येयजामहं करोति'इति वाक्यस्य यागत्वावच्छेदेन येयजामहशब्दवन्मन्त्रप्रयोगविधायकत्वं कल्पनीयम्। नानुयाजेष्वित्यनेनचानुयाजाधिकरणकयेयजामहशब्दवन्मन्त्रप्रयोगोत्पत्त्यनुकूलभावनाया निषेधविधानमिति वाच्यमित्यनुयाजाधिकरणकनिषेधे यजतिष्विति वाक्यबोध्यार्थस्योपजीव्यत्वात्तस्य सर्वथा बाधो न सम्भवतीति निषेधविषये विकल्पस्यापत्तिः स्यात्। षोडशिग्रहणाग्रहणयोर्भवत्यपरोऽपि दोषश्चेति पर्युदास एव। एतेन न नञो भेदबोधकत्वेऽनुयोगिवाचकपदोत्तरप्रथमाऽपेक्षितेति वदन्तः परास्ताः। विकल्पे सत्यपि नक्षतिरिति तु न; 'व्रीहिभिर्यजेत' 'यवैर्वा यजेत'इत्यत्रेवाष्टदोषापत्तेः। पर्य्युदासेन सामान्यशास्त्रस्य निषेधविषयातिरिक्तस्यैव विधायकत्वमिति न विकल्पः। न च निषेधस्य विध्युन्मूलकत्वेन प्राबल्याद्विधिशास्त्रविषयातिरिक्त एव विधे-

अन्यथा सादृश्यादेरपि वाच्यतापत्तेः। यत्तु—

तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः॥

इति पठित्वा, अब्राह्मणः, अपापम्, अनश्वः, अनुदरा कन्या, अपशवो वा अन्ये गोऽश्वेभ्यः, अधर्म इत्युदाहरन्ति। तत्त्वार्थिकार्थमभिप्रेत्येतिस्पष्टमन्यत्र।

विशेषणमिति प्रतियोगिनीति शेषः। तथाचासर्वपदे सर्वनाम-

---

दर्पणः

वाचकपदयोः समानविभक्तिकत्वस्येव तयोः समानवचनस्यापि तन्त्रत्वात्, तस्य प्रकृतेऽभावात्। अन्यथा 'न महतो राज्ञ' इत्यादाविव न महतां राज्ञः इत्यादावपि महद्भेदप्रतीत्यापत्तिः। 'एको न द्वौ' इतिवत् कथञ्चित् समर्थनेऽपि द्वितीयस्य दातव्यमित्यस्य नैरर्थक्यप्रसङ्गश्च 'ब्राह्मणेभ्यो दधि दातव्यं कौण्डिन्याय न' इत्यादौ। अत एव कौण्डिन्यभिन्नब्राह्मणोद्देश्यकदधिदानबोधसम्भवादित्याहुः।

विकल्पप्रसक्तिरूपदोषाऽभावेऽपि वाक्यभेदाऽऽपत्तेर्जागरूकतया समानविभक्तिकत्वादेस्तद्बोधनियामकस्य सत्त्वेन च नञः पर्य्युदासाऽर्थकत्वमेव, नाऽनुयाजेष्वित्यत्रोचितमिति तु परे॥

प्रकृतमनुसरामः॥ *अन्यथेति*। लाघवाऽनादरेणाऽऽरोपितत्वस्य नञ् वाच्यत्वाऽभ्युपगमे इत्यर्थः। सादृश्यादेरित्यादिना पठिष्यमाणाऽल्पत्वादेः सङ्ग्रहः; अब्राह्मण इत्यादेर्ब्राह्मणसदृशः, पाकाभावोऽश्वभिन्नोऽल्पोदरा गवाश्वेतरा पशवोऽप्रशस्ता धर्मविरुद्ध इत्यादिक्रमेणाऽर्थः। ननु सादृश्यादेरवाच्यत्वे कथं ततस्तद्बोधोऽत आह—*तत्त्विति*। तत्पठनं त्वित्यर्थः॥ *अभिप्रेत्येति*। भेदप्रतियोगित्वप्रकारकब्राह्मणादिबोधाऽनन्तरभाविमानसबोधमभिप्रेत्येत्यर्थः॥

ब्राह्मणादिबोधस्य तत्तत्पदादेव सम्भवाद्भेदप्रतियोगित्वेन ब्राह्मणादिबोधनाय यद् ब्राह्मणादिपदोपादानं तत्सादृश्यादिना क्षत्रियादिबोधनार्थमित्यूहमूलकक्षत्रियादिबोधस्य भेदप्रतियोगी ब्राह्मण इत्यादिशक्याऽर्थबोधोत्तरमेव सम्भवादिति भावः। तद्बोधे शाब्दत्वप्रत्ययस्याऽनुभवाल्लक्षणयैव सादृश्यादिना ब्राह्मणादिबोध इति त्वन्ये। विशेषणस्य विशेष्यस्याकाङ्क्षत्वादाह—*प्रतियोगिनीति*। एवं चाऽब्राह्मण इत्यादेः प्रतियोगितया भेदविशिष्टो ब्राह्मण इत्याद्याकारको बोध इति भावः। भेद-

परीक्षा

यबोधकतेति वाच्यम्। अस्याः कल्पनाया वाक्यद्वयजन्यबोधानन्तरमेव सम्भव इति वाक्यस्य विधिबोधकस्योद्देश्यतावच्छेदेन विधेयबोधकता स्यादेवेति विकल्पापत्तेः। तावतापि वाक्यभेदापत्तेश्चेति दिक्। अन्यथा यथाकथञ्चित् प्रतीयमानस्यापि वाच्यत्वे वाच्यत्वापत्तेरिति। इष्टापत्तिस्तु न। शक्यतावच्छेदकगौरवापत्तेः।

ननु नञर्थभेदस्य प्रतियोगितासम्बन्धेन प्रतियोगिनि विशेषणत्वे घटप्रतियोगिकभेदस्य प्रतियोगितासम्बन्धेन घटे सत्वात्तद्विशिष्टस्य घटस्याघटान् नयेतिवाक्याद् बोधापत्तिरत आह—मूले—*विशेष्यो वेति*। प्रथमपक्षे नञर्थाभावस्य प्रतियोगिविशेष-

संज्ञा। "अनेकमन्यपदार्थे," "सेव्यतेऽनेकया सन्नतापाङ्ग्या" इत्यादावेकशब्दार्थप्राधान्यादेकवचननियमः। 'अब्राह्मण' इत्यादावुत्तरपदार्थप्राधान्यात् तत्पुरुषत्वम्। 'अत्वं भवसि' 'अनहं भवामि'इत्यादौ पुरुषवचनादिव्यवस्था चोपपद्यते।

अन्यथा त्वदभावो मदभाव इतिवदभावांशे युष्मदस्मदोरन्वयेन युष्मत्सामानाधिकरण्यस्य तिङ्क्ष्वसत्त्वात् पुरुषव्यवस्था न स्यात्। अस्मन्मते च भेदप्रतियोगित्वदभिन्नाश्रयिका भवनक्रियेत्यन्वयात् सामानाधिकरण्यं नानुपपन्नमिति भावः।

*विशेष्यो वेति*। प्रतियोगिनीति शेषः। अयम्भावः—गौणत्वेऽपि

---

दर्पणः

स्य प्रतियोगितयोत्तरपदार्थान्वये उपपत्तिमाह—*तथाचेति*।

सर्वनामता चेत्यादि—प्रथमान्तचतुष्टयस्योपपद्यते इत्यनेनाऽन्वयः। *सर्वनामता*—सर्वनामसंज्ञा। तदन्तविधिनेति शेषः। अन्यथा संज्ञोपसर्जनानां सर्वादित्वाभावे तदर्थस्य नञर्थविशेषणत्वे तत्संज्ञानुपपत्तिरिति भावः। अनेकमित्यादावेकभिन्नमिति बोधे स्वीक्रियमाणे एकप्रतियोगिकभेदवति द्वित्वस्य बहुत्वस्य वाऽवश्यम्भावे ततस्तद्बोधकद्विवचनबहुवचनयोरापत्तिरेकत्वार्थस्य तत्र बाधात्तद्बोधकैकवचनस्यानुपपत्तिश्चेति भावः॥

*तत्पुरुषत्वमिति*। भेदविशेषणत्वे तदनुपपत्तिः स्यात्। *पुरुषेति*। तिबादित्रिकसङ्केतिततत्पुरुषेत्यर्थः। *वचनेति*। एकवचनत्वादिरूपेत्यर्थः। "अयुवां भवथ" इत्यादौ युष्मदस्मदर्थाभावविशेष्यकबोधे अभावे द्वित्वाद्यर्थस्य बाधाद् द्विवचनाद्यनुपपत्तिः। भावनाऽन्वयिन्येव सङ्ख्याऽन्वय इति त्वदभ्युपगमेनाऽन्याऽर्थगतसङ्ख्यामादाय द्विवचनाद्युपपादनस्य कर्तुमशक्यत्वादिति भावः।

*अन्यथेति*। नञर्थाभावस्योत्तरपदार्थाऽविशेषणत्वे तद्विशेष्यत्व इति यावद्। *पुरुषव्यवस्थेति*। "युष्मद्युपपदे" (पा० सू० ४।१।१०५) इति सूत्रद्वयाऽविषयतया, "शेषे प्रथमः" (पा० सू० ४।१।१०८) इत्यस्य प्रवृत्त्या प्रथमपुरुषस्यैवापत्तेरित्यर्थः। *नानुपपन्नमिति*। तथाचोक्तव्यवस्था सुलभेति भावः। ननु नञर्थभेदस्य प्रतियोगितयोत्तरपदार्थाऽन्वये अघटमानयेत्यत्र स्वभेदप्रतियोगित्वस्य घटे सत्त्वात्तद्बोधानन्तरं घटानयनस्याऽऽप्यापत्तिरत आह—मूले—*विशेष्यो वेति*। विशेषणाकाङ्क्षायामाह—सारे—*प्रतियोगिनीति*। उत्तरपदार्थरूपप्रतियोगिनीत्यर्थः।

परीक्षा

णत्वस्वीकारस्य प्रयोजनान्याह—*तथाचेत्यादिना*। *तत्पुरुषत्वमिति*। उत्तरपदार्थप्रधान एव तत्पुरुष' इति वादिमताभिप्रायेणेदम्। *पुरुषवचनव्यवस्थेति*। युष्मदर्थस्य भेदविशिष्टस्य कर्तृतया युष्मदर्थेन सामानाधिकरण्यस्य सत्त्वात्पुरुषव्यवस्थाया आदिपदग्राह्ये 'युवां भवथः' इत्यादौ द्विवचनादिव्यवस्थायाश्चोपपत्तिरित्यर्थः।

*अन्यथा*—नञर्थाभावस्योत्तरपदार्थाविशेषणत्वे। मूलोक्तविशेष्यत्वपक्षे विशेष्यत्वस्य विशेषणतानिरूपकत्वनियमाद्विशेषणाकाङ्क्षाशान्तये आह—*प्रतियोगिनीतीति*। एवञ्चास इति शब्दात्तद्भिन्नाश्रय इति बोधः। *गौणत्वेऽपीति*। उपसर्जन-

नञ्समासे, "एतत्तदोः सुलोपोऽकोरनञ्समासे हलि" (पा०-सू० ३६।१।३२) इति ज्ञापकात् सर्वनामसंज्ञा नानुपपन्ना । 'असः शिव' इत्यत्र सुलोपवारणायाऽनञ्समास इति हि विशेषणम् । नच तत्र तच्छब्दस्य सर्वनामताऽस्ति । गौणत्वात् । अकोरित्यकच्सहितव्यावृत्त्या सर्वनाम्नोरेव तत्र ग्रहणलाभात् । तथाचानञ्समास इति ज्ञापकं सुवचम् ।

"अनेकमन्यपदार्थे" इत्यादावेकवचनं विशेष्यानुरोधात् । "सुबामन्त्रिते पराङ्गवत् स्वरे" (पा० सू० २।१।२) इत्यतोऽनुवर्त-

---

दर्पणः

निरूपितत्वं सप्तम्यर्थः । उत्तरपदार्थरूपप्रतियोगिनिष्ठविशेषणतानिरूपितविशेष्यताश्रयो नञर्थ इति यावत् । ननु तर्ह्युत्तरपदार्थाऽप्राधान्ये पूर्वोक्तदूषणगणो दुष्परिहारोऽत आह-*अयम्भाव इति* । *गौणत्वेऽपीति* । नञ्समासघटकैतदाद्यर्थस्य नञर्थविशेषणत्वेऽपीत्यर्थः । *ज्ञापकादिति* । तत्सूत्रस्थानञ्समासग्रहणाज्ज्ञापकादित्यर्थः । ज्ञापकतामेव प्रपञ्चयति-*अस शिव इति ।

"एतत्तदोः" (पा० सू० ६।१।१३२) इत्यनेन परस्परसाहचर्य्यात् सर्वनामैतत्तद्भ्यां परस्य सोर्हलि लोपो विधीयते । नञ्तत्पुरुषाऽन्तर्गततत्तदोरुपसर्जनतया सर्वनामत्वाभावादेवानतिप्रसङ्गे व्यर्थं सदनञ्समासग्रहणं नञ्समासे गुणीभूतार्थस्यापि सर्वादेः सर्वनामताज्ञापनेन चरितार्थमिति भावः । साहचर्य्यज्ञापकत्वस्यासार्वत्रिकत्वं सूचयन् सूत्रे सर्वनाम्नोरेव ग्रहणे मानान्तरमाह—*अकोरिति* ।

असर्वनाम्नः सर्वनामविहिताकजसम्भवेन तत्पर्युदासात् सर्वनाम्नोरेव तयोर्ग्रहणं निश्चीयत इत्यर्थः । एतत्कल्पे एतत्तदुत्तरस्य सोर्हलि लोप इति सूत्रार्थः । अर्थद्वारकसम्बन्धाश्रयणेन व्याख्यानं तु पूर्वकल्पाभिप्रायेणोत्तरपदलक्षणाभिप्रायेण वेति भावः । *विशेष्यानुरोधादिति* । असति विशेषानुशासने विशेषणवाचकपदस्य विशेष्यवाचकपदसमानवचनकत्वानियमादिति भावः ।

ननु विशेषणस्य विशेष्यसङ्ख्याविरुद्धसंख्यावत्त्वेऽपि विशेषणवाचकपदात्तद्वचन-

परीक्षा

त्वेऽपीत्यर्थः । प्रतियोगिनिष्ठप्रकारतानिरूपिताभावनिष्ठविशेष्यताकबोधजनकत्वस्यास इत्यत्रा सत्वादिति भावः । ज्ञापकमुपपादयति—*अस इत्यादिना* । *गौणत्वात्* । उपसर्जनत्वात् । एवञ्च त्यदाद्यत्वानापत्त्या हल्ङ्यादिलोपो दुर्वारः । ननु सर्वनाम्न एव "एतत्तदोः" इति सूत्रे ग्रहणमित्यत्र किम्मानमत आह—*अक इति* । विप्रयोगस्यापि विशेषावगतिहेतुत्वमन्यत्र दृष्टं तद्रीत्याऽत्रैवम्प्रतीतिरिति भावः । *ज्ञापकमिति* । नञ्समासे उपसर्जनत्वेऽपि सर्वनामकार्यम्भवतीत्यर्थं इत्यादिः ।

*विशेष्यानुरोधादिति* । 'असति विशेषणविवक्षणे विशेषणवाचकम्पदं विशेष्यवाचकपदसमानवचनकमेव'इति नियमस्य सर्वत्र दर्शनात् । ननु तत्र विशेष्यवाचकम्पदन्न श्रूयत एवेत्यत आह—*सुबामन्त्रित इति* । ननु विशेष्यविशेषणयोर्विरुद्धसं-

मानं सुब्ग्रहणं विशेष्यमेकवचनान्तमेव। किञ्चाऽनेकशब्दाद् द्विवचनोपादाने, बहूनां बहुवचनोपादाने द्वयोर्बहुव्रीहिर्न सिद्ध्येदित्युभयसंग्रहायैकवचनं जात्यभिप्रायमौत्सर्गिकं वा।

"सेव्यतेऽनेकया" इत्यत्रापि योषयेति विशेष्यानुरोधात् प्रत्येकं

---

दर्पणः

मित्यत्र प्रमाणाभावोऽत आह—*किञ्चेति*। नन्वनेकशब्दोपादानादेव द्वयोर्बहूनां वा तत्सिद्धेर्द्विवचनबहुवचनयोरपि समयपरिपालनार्थत्वसम्भवादेकवचनोपादानं व्यर्थमेवेत्यत आह—*औत्सर्गिकं वेति*। "एकवचनमुत्सर्गतः करिष्यते" इति, "न केवला" इतिनियममूलकवचनविहितमित्यर्थः। सति तात्पर्य्ये क्वचित् सार्थकमप्येकवचनमिष्यत एवेत्याह—*प्रत्येकमिति*। एकभिन्नत्वेनोपस्थितासु योषासु प्रत्येकं सेव-

परीक्षा

ख्यावत्वेऽपि वचनं समानमेवेत्यत्र सूत्रकारानुग्रह इति यदि ब्रूयात्तत्राप्याह—*किञ्चेति*। *बहूनामिति*। अस्य बहुव्रीहिर्न सिध्येदित्यत्रानन्वयः। *जात्यभिप्रायम्*। एकभिन्नरूपसामान्यधर्माभिप्रायम्। यथा 'सम्पन्नो व्रीहिः' इति प्रयोगो बहुषु व्रीहिषु सम्पन्नेष्वेव जायते, तत्रैकवचनार्थस्यैकत्वस्य स्वाश्रयप्रकृत्यर्थतावच्छेदकत्वसम्बन्धेन विशेष्येऽन्वयः स्वीक्रियते; तथैकभेदस्य द्विबहुसाधारणस्यैकत्वादेकवचनमिति भावः। न च विशेष्यवृत्तिप्रतियोगिताकस्य व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकाभावस्यानुपगमेन कथमेतदिति वाच्यम्? स्वसजातीयद्वितीयरहितत्वरूपैकत्वस्य तत्रासत्वे न तदवच्छिन्नप्रतियोगिताकभेदस्य सम्भवात् सम्पन्नो व्रीहिरिति वाक्यं यत्र सम्मतिः-सन्तोषसम्पादिका; तत्रैव प्रयुज्यत इति तत्रास्तु तथा, प्रकृते तु किं साधकम्, द्वयोर्बहूनां च समाससिद्धिरूपं प्रयोजकत्वेनैकशब्दापादानं सामर्थ्यादेव भविष्यतीत्यत आह—*औत्सर्गिकमिति*। 'एकवचनमुत्सर्गतः करिष्यत' इति भाष्यीयसिद्धान्तमाश्रित्यैकवचनङ्कृतम्। अन्यथा प्रातिपदिकमात्रोपादानेन "केवला प्रकृतिः प्रयोक्तव्या" इति वचनविरोधः स्यादिति भावः।

न केवलं विशेष्यानुरोध एव; किन्तु सार्थकमपि तदित्याह—*प्रत्येकमिति*। एकभिन्नत्वेनोपस्थितासु योषासु पृथक् पृथक् सेवनान्वय विवक्षयेत्यर्थः। अत एव अनेकशब्दस्यैकभिन्नार्थकत्वादेव। यदि प्रतियोगितासम्बन्धेन भेदविशिष्टमेकमित्यर्थः स्यात्तदोर्मय इत्यनेन विशेष्यस्य बहुत्ववत्त्वेनोपस्थितत्वात्तत्र भेदविशिष्टैकाभेदस्य बाधादनन्वयापत्तिः। नचैवमप्यन्वयानुपपत्तिः। नञर्थे भेदेऽन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनैवान्वयो व्युत्पत्तिसिद्धः। अन्यथा ब्राह्मणेऽपि व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकब्राह्मणभेदस्य सत्वादब्राह्मण इति प्रयोगापत्तिः स्यात्। तथाचैकत्वावच्छिन्नप्रतियोगिताको भेदो वाच्यः, सचाप्रसिद्ध एवेति वाच्यम्। स्वसामानाधिकरण्यस्वप्रतियोगिवृत्तित्वोभयसम्बन्धेन व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगित्वानिरूपकभेदविशिष्टविशेष्यतावच्छेदकत्वमेवानेकत्वमित्यर्थस्य विवक्षितत्वात्। स च भेदस्तत्तद्व्यक्तिप्रयोगिको बोध्यः। गगनघटोभयभेदमादाय गगनमनेकमिति व्यवहारापत्तिवारणाय व्यासज्यवृत्तीत्यादि। क्वचित्त्वनेके इत्यत्रैकशेषेण बहुवचनमित्यु-

सेवनान्वयबोधनाय चैकवचनं, न तूत्तरपदाऽर्थप्राधान्यप्रयुक्तम्। अत एव "पतन्त्यनेके जलधेरिवोर्मयः" इत्यादिकमपि सूपपादम्। अत्वं भवसीत्यादौ युष्मदस्मदोस्तद्भिन्ने लक्षणा। नञ् द्योतकः। तथा च भिन्नेन युष्मदर्थेन तिङः सामानाधिकरण्यात् पुरुषव्यवस्था। त्वद्भिन्नाभिन्नाश्रयिका भवनक्रियेति शाब्दबोधः।

एवं 'न त्वं पचसि'इत्यत्र त्वदभिन्नाश्रयक-पाकानुकूलभावनाऽभावः। घटो नास्तीत्यत्र घटाभिन्नाश्रयकास्तित्वाभाव इति रीत्या बोधः।

---

दर्पणः

नाऽन्वयबोधायेत्यर्थः। उपसंहरति—*न त्विति*। *अत एवेति*। अनेकशब्दस्यैकभिन्नाऽर्थकत्वादेवेत्यर्थः।

*सूपपादमिति*। भेदप्रतियोग्येकाऽर्थकत्वे तु तद् दुरुपपादं स्याद्। एकशेषेण समर्थनं त्वगतिकगतिरिति भावः। भाष्योदाहृते "नैकस्तिष्ठति" इति प्रयोगे जन इत्यध्याहार्यम्। प्रत्येकं स्थित्यन्वयबोधार्थं च तत्रैकवचनम्। अनेको जना इति त्वसाध्वेव। उत्तरपदार्थप्राधान्यादिव्यपदेशस्तु प्रायिक इत्याद्यपि बोध्यम्। अत्वं भवसीत्यादिनाऽनहम्भवामीत्यादिर्गृह्यते। युष्मद इत्यस्मदोऽप्युपलक्षणम्। एवं त्वद्भिन्न इत्यत्रापि लक्षणेति तु नैयायिकाद्यनुसारेण। स्वमते तदनभ्युपगमात्। अत्वम्भवसीत्यादावारोपादिबोधस्य सर्वानुभवविरुद्धत्वान्नञ्समासे सर्वत्रोत्तरपदस्य स्वाऽर्थभिन्नलाक्षणिकत्वमेव युक्तमिति भावः॥

प्रसज्ज्यप्रतिषेधार्थकनञो व्यवस्थामाह-*एवं न त्वं पचसीत्यादि**॥ नञर्थे युष्मदर्थान्वये तु प्रकृते पुरुषव्यवस्था न सिद्ध्येदितिसूचयितुं पचसीति मध्यमपुरुषनिर्देशः। अधिकं त्वादावेवोक्तम्। इदमुपलक्षणं 'घटौ न स्त' इत्यादौ द्विवचनाद्यनुपपत्तेः। क्रियाप्रतियोगिकाभावविशेष्यकबोधे हेतुमाह-*असमस्तेति*॥ व्याख्यानात् नञस्तदर्थस्य प्रसज्ज्यप्रतिषेधस्य तादृशनञर्थाऽभावनिष्ठविशेष्यतानिरूपितप्रकारतासम्बन्धेन बोधो, धातुजन्योपस्थितेर्भावनात्वावच्छिन्नविशेष्यतासम्बन्धेन हेतुत्वस्य पूर्वमुक्तत्वादिति भावः।

नन्वभावस्य केन रूपेण शक्यता। न तावदभावत्वेन। चैत्रो न पचतीत्यादावपि भेदबोधापत्तेः। प्रसज्ज्यप्रतिषेधत्वेन शक्यत्वेऽपि स एव दोषः। भेदस्याऽपि योग्याऽनुपलब्धिजन्यप्रत्यक्षविषयत्वात्। तदनुपस्थितावपि नञोऽभावबोधाच्चेत्यत आह-

परीक्षा

क्तं तत्त्विष्टमिति भावः। यत्र तु प्रामाणिकोऽनेकशब्द एकवचनान्तोऽस्ति; विशेष्यवाचकन्तु पदन्न श्रूयते, तत्र तात्पर्यानुरोधेन विशेष्यवाचकम्पदमध्याहार्य्यम्। उत्तरपदार्थप्रधानस्तत्पुरुष इति तु व्यवहार औत्सर्गिक इत्युक्तमेव। प्रागुक्तामनुपपत्तिम्परिहरति—*अत्वमित्यादिना*। *लक्षणा*—उत्तरपदस्य लक्षणा।

ननु यत्र नञः क्रियान्वय्यर्थप्रतिपादकता; तत्र कथम्बोध इत्यत आह—*नत्वम्पसीति*। ननु मूले अभावो वेत्येवोक्तम्। शाब्दबोधेऽभावस्य तु भेदत्वादिना भानमि-

**असमस्तनञः क्रियायामेवान्वयबोधात्। स चाभावोऽन्त्यन्ताभा-**

दर्पणः

*स चेति* ॥ अभावश्चेत्यर्थः ॥ तथाच नञोऽन्योन्याभावत्वेनात्यन्ताभावत्वेन वाऽभावे शक्तिकल्पनान्न दोषः।

*अत्यन्ताभावत्वेति*। अन्तं=स्वप्रतियोगिनिष्ठाभावप्रतियोगित्वमतिक्रान्तो व्यभिचरितोऽत्यन्तः। सचासावभावश्चेति विग्रहः। तस्य भावस्तत्वम्। स्वप्रतियोगिनिष्ठस्वदृशाभावप्रतियोगित्वव्यभिचारीतियावत्। "अन्त्यो जघन्यं चरमम्" इत्यमरेणाऽन्त्यशब्दस्य जघन्ये वृत्तिबोधनाज्जघन्यत्वं चोक्तार्थस्य जघनवृत्तिबोध्यत्वात्। घटात्यन्ताभावस्य स्वप्रतियोगिनिष्ठात्यन्ताभावप्रतियोगित्वाभाववति घटवृत्तिधर्मे सत्त्वात्तत्त्वं तत्राऽक्षतम्। घटान्योन्याभावस्य तु स्वप्रतियोगिनिष्ठान्योन्याभावप्रतियोगीत्वव्यापकत्वात्तद्व्यावृत्तिः। व्युत्पत्तिप्रदर्शनं चेदम्। लक्षणं त्वत्यन्ताभावस्य तादात्म्येतरसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वम् ॥ *अन्योन्याभावेति* ॥ अन्योन्यस्मिँस्तादात्म्येनाभावोऽभवनमिति व्युत्पत्त्या तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वमन्योन्याभावत्वम्। ताभ्यां शक्य इत्यर्थः।

वस्तुतस्तु अत्यन्ताभावस्याभावत्वेनैव शक्यता, न तूक्तरूपेण, गौरवात्। तेन रूपेण बोधस्यानुभवाच्च। अत एव "तत्सादृश्यमभावश्च" इत्यत्राभावत्वेनैवात्यन्ताभावोपादानम्।

नच नञः संयोगादिसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वादिनाऽभावे शक्त्यनभ्युपगमे 'भूतले न घट' इति वाक्यजबोधस्य संयोगसम्बन्धेन भूतलविशेष्यकघटविशिष्टबुद्धेर्विरोधित्वानापत्तिस्तत्संसर्गावच्छिन्नतद्विशिष्टबुद्धौ तत्संसर्गावच्छिन्नप्रतियोगिताकत्वावगाहिन्या एव तदभावबुद्धेः प्रतिबन्धकत्वादिति वाच्यम्।

निरुक्ताभावत्वेन शक्तावपि संयोगादीनां लक्षणे तादात्म्येतरसम्बन्धत्वेनानुगतरूपेणैव निवेशनीयतया नञ्पदशक्त्याऽप्यभावे विशिष्यसंयोगाऽवच्छिन्नप्रतियोगिताकत्वभानासम्भवात् प्रतिबन्धकत्वाऽनुपपत्तितादवस्थ्यात्। तादृशविशिष्टबुद्धिविरो-

परीक्षा

त्यनुपपन्नमत।आह—*स चेति*। अत एव 'न पचति मैत्र' इति शब्दान्न भेदस्याभावत्वेन बोधः। *अत्यन्ताभावत्वेनैवेति* । अत्यन्ताभावत्वेनैवेत्यपि न 'अयं चैत्रो न मैत्र' इति शब्दाद्भेदत्वेन बोधान्यापत्तेः। अत्यन्ताभावत्वम्—नित्यत्वे सति संसर्गाभावत्वम्। तादात्म्यत्वेन तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वमन्योन्याभावत्वम्। वस्तुतस्त्वभावत्वमेव शक्यतावच्छेदकम्। नत्वत्यन्ताभावत्वादिकं 'चैत्रो न पचति' इति शब्दाच्चैत्रकर्तृकपचिक्रियाभाव इति प्रतीतेरनुभवसिद्धत्वात्। नचैवं सति 'न पचति चैत्र' इति शब्दादभेदबोधस्यापत्तिरिति वाच्यम्। 'प्रतियोग्यनुयोगिभावान्वयौ तुल्ययोगक्षेमौ' इति न्यायेनोक्तार्थकेन तत्तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावबोधस्यैव सम्भवेनोक्तस्थले तदसम्भवात्। न च 'चैत्रो न पचति' इति वाक्यघटकस्य नञोऽत्यन्ताभावबोधकतया तदसमभिव्याहारमते क्रियाविशेष्यकबोधस्यैव

दर्पणः

धित्वाऽनुरोधेनाकाङ्क्षाबलादेव तादृशप्रतियोगिताकत्वस्य विशिष्यप्रतियोग्यभावयोः सम्बन्धविधया भानस्योपगन्तव्यत्वात्।

नन्वन्योन्याभावसाधारणाभावत्वस्य नञ्पदप्रवृत्तिनिमित्तत्वेऽन्योन्याभावे पृथक्शक्तिकल्पनानर्थक्यम्। नचाऽन्योन्याभावत्वप्रकारकबोधानुरोधात्तस्यापि शक्यतावच्छेदकत्वकल्पनमावश्यकत्वम्। अन्यथा तादात्म्यसम्बन्धेन प्रतियोगिप्रकारकोऽयं घट इति बोधे, नाऽयं घट इति वाक्यजबुद्धेरप्रतिबन्धकत्वापत्तेः। अन्योन्याभावत्वावगाह्यभावबुद्धेरेव तादृशबुद्धिविरोधित्वात्। घटाभाववानिति बुद्धेरपि तद्विरोधित्वापत्तेश्चेति वाच्यम्।

तत्राभावत्वस्य नञ्पदशक्त्या तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकत्वस्य समानविभक्तिकप्रतियोग्यनुयोगिवाचकपदयोः समभिव्याहाररूपाकाङ्क्षाबलेन लाभेन तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वस्याऽन्योन्याभावत्वावगाहितयैव तत्तद्बुद्धेः प्रतिबन्धकत्वोपपत्तौ तेन रूपेण शक्तिकल्पनस्याऽकिञ्चित्करत्वात्।

न च नास्त्येव तदवच्छिन्ने शक्तिः; पृथगुपादानं त्वभावसामान्यस्य नञर्थत्वालाभायैवेति वाच्यम्। तथा सति "नञर्थाः षट् प्रकीर्त्तिताः" इत्यस्यासङ्गत्यापत्तेरिति चेत्? स्यादेवम्। यद्यन्योन्याभावत्वं तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वरूपं निर्वक्तुं शक्येत, तदेव न; संयोगितादात्म्यस्य संयोगरूपतया संयोगात्यन्ताभावेऽतिव्याप्तिः। सम्बन्धविधया तादात्म्यनिष्ठावच्छेदकतानिवेशेऽपि संयोगसंबन्धावच्छिन्नसंयोगधर्मावच्छिन्नप्रतियोगिताकाऽत्यन्ताभावातिव्याप्तितादवस्थ्यात्, किन्त्वनुयोगिताविशेष एव। एवञ्च तादात्म्यस्याप्यन्योन्याभावप्रतियोगितावच्छेदकसम्बन्धत्वमपि प्रामाणिकम्। इह संयोगेन घटो नास्तीतिवदयं तादात्म्येन घट इत्यादिप्रत्ययात्। एवञ्च तादृशानुयोगिताविशेषप्रकारताकत्वमेवाभेदसम्बन्धेन प्रतियोगिप्रकारकधीविरोधित्वे तन्त्रमिति तदनुरोधेन नञः पृथगन्योन्याऽभावे शक्तिरावश्यिकेति।

ननु नञोऽविशेषेणात्यन्ताभावबोधकत्वे 'भूतले न घट' इत्यादिवाक्यजबोधेऽत्यन्ताभावभानापत्तिः। न च नञ्पदजन्यात्यन्ताभावबोधेऽनुयोगिवाचकपदोत्तरसप्तमीसमभिव्याहारज्ञानस्य हेतुत्वान्नोक्तापत्तिरिति वाच्यम्। 'चैत्रो न पचति' इत्यादिवाक्यजभावनात्यन्ताभावबोधे व्यभिचारेणोक्तकार्यकारणभावस्यैवासम्भवादिति चेत्?

परीक्षा

सिद्धान्तितत्वेन चैत्रकर्तृकपचिक्रियेत्येव बोध इति, चैत्रविशेष्यकसामवायसंसर्गकक्रियाप्रकारकबोधस्याभावेन कथमुक्तन्यायेन समवायसम्बन्धावच्छिन्नक्रियाभावभानमिति वाच्यम्। चैत्रकर्तृकत्वञ्चैत्राश्रयकत्वम्। आश्रयता च–किञ्चित्सम्बन्धावच्छिन्नैवेति, प्रकृते समवायसम्बन्धावच्छिन्नाश्रयतायाश्चैत्रनिष्ठायाः क्रियानिष्ठविशेष्यतानिरूपितप्रकारतावच्छेदकतया भानेन नञ्समभिव्याहारे तत्सम्बन्धावच्छिन्नप्रतियोगिताकक्रियाभावभानस्याप्यङ्गीकारात्। एवम् 'घटो न पट' इति शब्दादप्यन्योन्याभावस्य बोधः सम्भवति। अभावत्वावच्छिन्नस्य नञा तत्र तादात्म्यसम्बन्धावच्छिन्नप्रति-

दर्पणः

अत्र वदन्ति–यत्र नञ्समभिव्याहारे प्रतियोग्यनुयोगिनोराधाराधेयभावसंसर्गबोधोपयिकाकाङ्क्षा; तत्रैव नञोऽत्यन्ताभावार्थकत्वोपगमेन नोक्तस्थले तद्बोधापत्तिः। तत्र नञ्समभिव्याहारे तादृशबोधौपयिकाङ्क्षाविरहात्। 'न पचति चैत्रो' 'नेदं चैत्रस्य' इत्यादौ नञ्समभिव्याहारे तिङर्थस्य कृत्यादेः प्रथमान्तपदोपस्थापितचैत्रादा षष्ठ्यर्थस्वत्वस्येदंपदार्थे आधाराधेयभावबोधौपयिकप्रथमान्तपदादिसमभिव्याहाररूपाकाङ्क्षायाः सत्त्वेन तत्र नञा कृत्याद्यभावबोधनसम्भवात्।

एवञ्च यत्र प्रतियोग्यनुयोगिनोराधाराधेयभावः सप्तमीं विनाऽनुपपन्नस्तत्राऽनुयोगिवाचकपदात् सप्तम्यपेक्ष्यते। यथा 'भूतले न घट' इत्यादौ। तदुक्तं दीधितिकृता–'वस्तुतो न पचति चैत्रो नेदं मैत्रस्येत्यादा विभक्त्यर्थकृतिसम्बन्धादेरभावस्य बोधने नञा सप्तमी नापेक्ष्यते, अपेक्ष्यते च प्रातिपदिकार्थस्येति'' इति।

न च 'चैत्रो न पचति' इत्यादौ नञाख्यातार्थभावनाभावबोधने, चैत्रौ न पचतश्चैत्रा न पचन्तीत्यादौ द्विवचनाद्यनुपपत्तिः। भवन्मते भावनाऽन्वयिनि संख्यान्वयनियमेन भावनान्वयिन्यभावे द्वित्वाद्यभावेन द्विवचनादिना तस्य बोधयितुमशक्यत्वात्। वैयाकरणमते तु तत्र धात्वर्थक्रियाभावस्यैव नञा बोधनेन द्वित्वादिविशिष्टचैत्रकर्तृकक्रियाभाव इति बोधाऽभ्युपगमेन तादृशानुपपत्त्यभावादिति वाच्यम्।

नञ्समभिव्याहारे भावनाभावान्वयिनि तिङर्थसङ्ख्यान्वय इति व्युत्पत्त्यन्तराभ्युपगमेन द्विवचनाद्युपपत्तेः। त्वन्मन्तेऽपि यच्चैत्रकर्तृकः पाकोऽप्रसिद्धस्तत्र चत्रो न पचतीति प्रयोगानुपपत्त्या क्रियाप्रतियोगिकाभावस्य नञा प्रत्याययितुमशक्यत्वाच्च।

न च तत्र नञा भेद एव बोध्यते। प्रतियोगितया चैत्रादिविशिष्टस्य तस्याऽऽख्यातार्थकर्त्तर्य्येवाऽन्वयान्न तादृशप्रयोगानुपपत्तिरिति वाच्यम्। तथा सति प्रतियोगितासम्बन्धावच्छिन्नधात्वर्थप्रकारकबोधे असमस्तनञ्पदजन्योऽपस्थितेर्हेतुत्वस्यात्रैव व्यभिचारेण त्वत्सिद्धान्तव्याघातात्। नञ्समभिव्याहारे आख्यातार्थभावनाऽन्वय्यर्थकत्ववत् तत्समभिव्याहारे भावनान्वय्यर्थकत्वरूपसामानाधिकरण्यस्य युष्मदादौ सत्त्वान्न न त्वं पचसीत्यादौ मध्यमादिपुरुषानुपपत्तिः।

यद्वा—नञ्समभिव्याहारे स्वबोधकर्तृत्वबोधकत्वम्, तत्समभिव्याहारे तु भूतपूर्वं तदादाय पुरुषोपपत्तिरित्याहुः।

इदं त्ववधेयम्—नञ्समभिव्याहारे प्रतियोग्यनुयोगिनोर्यः सम्बन्धो भासते तत्समभिव्याहारे तत्सम्बन्धावच्छिन्नतदभावस्तदनुयोगिनि भासत इति व्युत्पत्तेर्न 'भूतले

परीक्षा

योगिताकत्वस्य समानविभक्तिकप्रतियोग्यनुयोगिवाचकपदसमभिव्याहारवशाद् भानेन निर्वाहात् 'प्रतियोग्यनुयोगिभावान्वयौ तुल्ययोगक्षेमौ' इति नियमस्य नञ्समभिव्याहारे प्रतियोग्यनुयोगिनोर्यत्सम्बन्धावच्छिन्नाश्रयत्वप्रकारकबोधौपयिकाकाङ्क्षा तत्सम्बन्धावच्छिन्नप्रतियोगिताकाधेयाभावास्यापि भानमित्यप्यर्थः। न च जले समवायेन नीलरूपन्नास्ति' इतिशब्दान्नीलरूपाश्रयतायां समवायसम्बन्धावच्छिन्नत्वस्य पृथग्भानाभ्युपगमो भवता कार्य्यः। स च न सम्भवति। उक्तनियमेनैव सम्बन्धाव-

वत्वान्योन्याभावत्वादिरूपेण शक्यस्तत्तद्रूपेण बोधादित्याद्यन्यत्र विस्तरः ॥ ४१ ॥

इति वैयाकरणभूषणसारे नञर्थनिर्णयः ॥ ७ ॥

---

दर्पणः

न घटः' इत्यादावन्योन्याभावबोधस्तन्नियामकं त्वादावेवोक्तम्। परन्तु घटत्वादिविशिष्टोपस्थापकपदसमभिव्याहृतनञादिपदस्य घटत्वावच्छिन्नप्रतियोगितासम्बन्धेन घटप्रकारकाभावशाब्दत्वस्य, तथा नीलादिसाकाङ्क्षघटाद्युपस्थापकपदसमभिव्याहृतनञ्पदस्य नीलघटत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन नीलघटादिप्रकारकशाब्दबुद्धित्वस्य च कार्य्यतावच्छेदकत्वोपगमान्न'नीलघटो न घट' इत्यादिप्रयोगप्रसक्तिः, भवति च 'पीतो घटो न नीलघट' इत्यादिप्रयोगोपपत्तिरित्याद्यन्यतोऽवधार्य्यमित्याशयवानाह—*इत्याद्यन्यत्र विस्तर इति* ॥ ४१ ॥

इति भूषणसारदर्पणे नञर्थनिरूपणम् ॥ ७ ॥

परीक्षा

च्छिन्नत्वलाभेन समवायेनेति शब्दात्पुनस्तद्भानस्वीकारे पौनरुक्त्यादिति वाच्यम्। उक्तनियमवशाद्यत्र समवायेनेत्यादिपदसमभिव्याहारो नास्ति; तत्र तत्तत्सम्बन्धावच्छिन्नत्वं प्रतियोगितायामेव भासते, यत्र तु समवायेनेत्यादिसमभिव्याहारस्तत्राभावांशे समवायसम्बन्धावच्छिन्नप्रतियोगिताकत्वस्य प्रकारतया भानमित्यङ्गीकारादिति दिक् ॥ ४१ ॥

इति श्रीभूषणसारे नञर्थविवरणम् ॥ ७ ॥

# अथ निपातार्थनिर्णयः ।

प्रादयो द्योतकाश्चादयो वाचका इति नैयायिकमतमयुक्तम् । वैष-

---

दर्पणः

अथ निपातार्थनिर्णयः ।

प्रासङ्गिकं निपातोपसर्गार्थनिरूपणमित्याशयेन मूलमवतारयति—*प्रादयो द्योतका इति* । द्योतकतारूपशक्तिमन्त इत्यर्थः । अत एव 'प्रजयति' इत्यादौ न प्रकर्षाद्यर्थस्य विशेष्यतेति भावः । मतान्तरे तु तात्पर्य्यग्राहकत्वं द्योतकत्वं वक्ष्यति । तत्र येनेत्यत्र यच्छब्दो नोत्तरार्द्धपठितहेतुमात्रपरामर्शकः; किन्तु हेत्वन्तरपरामर्शकोऽपी-

परीक्षा

अथ निपातार्थनिर्णयः ।

शक्त्यर्थनिरूपणप्रसङ्गात् द्योत्यार्थमपि निरूपयति—*प्रादय इत्यादिना* । *द्योतका इति* । न च द्योतकताव्यञ्जनैव, सा च न नैयायिकसम्मतेति कथमेतदिति वाच्यम् । तन्मते द्योतकत्वेन समभिव्याहृतगता या वृत्तिस्तद्बोधकत्वमेव । तस्य च प्रजयतीत्यादौ प्रशब्देऽपि सम्भवः । धातोः प्रकर्षविशिष्टजपे लक्षणायाः स्वीकारात् । प्रशब्दस्तु तत्र तात्पर्यग्राहकः । अन्ये तु प्रकर्षः प्रशब्दार्थस्तस्य समभिव्याहृतधात्वर्थे प्रकारतया भानम् । नामार्थधात्वर्थयोर्भेदेन नान्वयबोध इति नियमो निपातातिरिक्तविषयकः । अत एव मीमांसकमते 'न कलञ्जम्भक्षयेत्' इति वाक्यात् कलञ्जभक्षणाभावविषयकं कार्यमिति बोधः । तस्मादेव धात्वर्थे कलञ्जभक्षणे लिङर्थस्य बलवदनिष्टाननुबन्धित्वस्याभावविषयकबोधो नैयायिकमते । नचोपसर्गस्य वाचकत्वे प्रतिष्ठत इति यत्र प्रयोगस्तत्रापि स्थितिप्रकर्षप्रत्ययः स्यादिति वाच्यम् । द्योतकत्ववादिनाऽत्रस्थधातुर्गतिवाची 'धातूनामनेकार्थत्वात्' । प्रशब्दस्तद्गतादित्वस्य द्योतक इति वाच्यम् । तद्वन्मयापि धातोः स्थितेः प्रशब्दाद्गतादित्वस्य प्रतीतेः स्वीकारात् । निपातानामनेकार्थतया प्रकर्षवदादित्वेऽपि शक्तिरित्यभ्युपगमात् । आदित्वञ्च—तद्विषयककृतिध्वंसासमानकालिकत्वम् । तादृशानुपूर्व्याः प्रकर्षविशिष्टगतिनिवृत्तिविषयकबोधजनने निराकाङ्क्षत्वमिति तूभयमतेऽपि कल्पनीयमित्याहुः । तदपेशलम् । धातूनामनेकार्थत्वस्य सर्वसम्मतत्वेन धातुभ्य एव प्रजपति प्रणमतीत्यादौ प्रकर्षविशिष्टजपनत्योः प्रतीतिनिर्वाहे प्रशब्दस्य पृथक्शक्तिकल्पनस्य गौरवपराहतत्वात् । अनेकार्थशब्दादेकस्यार्थस्यैव प्रतीतौ तात्पर्यग्राहकस्यावश्यमपेक्षेति प्रशब्दस्य तात्पर्यग्राहकतयोपयोगात् । किञ्च प्रशब्दस्य प्रकर्षे शक्तिरित्यनुचितम् । धातुं विना केवलात्तस्मात् प्रकर्षप्रतीतेरनुभवविरुद्धत्वात् । शक्याभावेन लक्षणापि न । एतेन प्रजपतिप्रणमतीत्यादौ प्रशब्दस्यैव प्रकर्षविशिष्टजपनत्योर्लक्षणा; धातुस्तत्र तात्पर्यग्राहक इति परास्तम् । प्रत्ययानाम्प्रकृत्यर्थान्वितस्वार्थबोधकतया प्रशब्दलक्ष्यार्थे प्रत्ययार्थानन्वयप्रसङ्गाच्च ।

स्ये बीजाभावादिति ध्वनयन्निपातानां द्योतकत्वं समर्थयते—

**द्योतकाः प्रादयो येन निपाताश्चादयस्तथा ॥**
**उपास्येते हरिहरौ लकारो दृश्यते यथा ॥ ४२ ॥**

येन हेतुना प्रादयो द्योतकास्तेनैव हेतुना चादयो निपातास्तथा = द्योतका इत्यर्थः। अयम्भावः—ईश्वरमनुभवतीत्यादावनुभवादिः प्रतीयमानो न धात्वर्थः। भवतीत्यत्राप्यापत्तेः। नोपसर्गार्थः। तथा सत्यप्रकृत्यर्थतया तत्राख्यातार्थानन्वयापत्तेः। प्रत्ययानां प्रकृत्यर्थान्वित-

---

दर्पणः

त्याह—*अयम्भाव इति*। *न धात्वर्थ इति*। न तत्प्रयोगाऽन्तर्गतधातुशक्य इत्यर्थः। *आपत्तेरिति*। अनुभवादिप्रतीत्यापत्तेरित्यर्थः। *नोपसर्गार्थ इति*। न तद्धातुसमभिव्याहृतप्रादिशक्य इत्यर्थः। *अनन्वयापत्तरिति*। एतच्चानुभवादिमात्रप्रतीतिमभ्युपेत्य। वस्तुतस्तथा स्वीकारेऽक्रियार्थकत्वेन अनुभवादेर्धातुत्वानापत्तेरिति बोध्यम्।

नन्वनुभवार्थकत्वेऽपि तस्य फलस्थानीयत्वेन तदन्वयिव्यापारसामान्याऽर्थकान्वा-

परीक्षा

नचैवं घटमानयतीत्यादौ घटादिशब्दस्यैव घटकर्मत्वे लक्षणास्वीकारेण घटकर्मकानयनादिप्रतीतिसम्भवे प्रत्ययस्यापि शक्तिविलोपापत्तिरिति वाच्यम्। कर्मत्वपर्यन्तस्य प्रातिपदिकार्थत्वस्यानयने भेदसम्बन्धेनान्वयो न स्यात्। नामार्थधात्वर्थयोर्भेदसम्बन्धेनान्वयबोधस्याव्युत्पन्नत्वात्। नचैवं घटकर्मके लक्षणास्त्विति वाच्यम्। व्याकरणे—"कर्मणि द्वितीया" इत्यादेः शक्तिग्राहकत्वसिद्धान्तव्याकोपापत्तेः। न च तथापि घटमानयतीत्यादौ प्रतीयमानैकत्वे घटादिपदस्य स्वार्थसम्बन्धे लक्षणास्तु द्वितीयायाः कर्मत्वमात्रे शक्तिरस्त्विति वाच्यम्। क्लृप्तशक्तिकत्वस्योभयत्राविशिष्टत्वस्य घटादिपदस्य तत्र लक्षणा द्वितीयाया वेत्यत्र विनिगमकाभावात्। तस्मादुपसर्गाणां द्योतकत्वमेव। उपसर्गसंज्ञा तु क्रियायोग एवेति क्रियावाचकधातुप्रयोगे तेभ्य एव द्योत्यार्थविशिष्टक्रियाबोधः। यत्र न क्रियावाचकधातोः प्रयोगस्तत्र तेषामुपसर्गत्वाभावेनास्तु शक्तत्वम्। अत एव निविशत इत्यत्र द्योतकस्यापि निर्मक्षिकमित्यत्र ध्वंसवाचकता; उपकरणमित्यत्रोपसर्गस्य द्योतकत्वेऽप्युपकुम्भमित्यत्र समीपवाचकत्वेऽव्ययीभावः सङ्गच्छते।

*चादय इति*। घटः पटश्चेत्यादिभ्यः पटसमुदितो घट इत्याद्यर्थप्रतीतेरनुभवसिद्धतयाऽन्वयव्यतिरेकाभ्यां वाचकत्वस्य सिद्धेः। वैषम्ये प्राद्यपेक्षया चादिषु वैषम्ये यथा प्रादिद्योत्यार्थस्य धात्वर्थे विशेषणता, तथाचादिद्योत्यार्थस्यापीति न वैषम्यम्। तथा द्योतका इत्यनेन द्योतकत्वस्य समर्थनेऽपि येनेति तृतीया तस्य नोत्तरार्धोपात्तानुरोधेनैव चादीनां द्योतकत्वमिति। किञ्च यदपि तत्र साधकमस्तीत्याशयेनाह—*अयम्भाव इत्यादिना*। *न धात्वर्थः*—नैतत्प्रयोगघटकस्य धातोरर्थः।

स्वार्थबोधकत्वव्युत्पत्तेः। अनुगच्छतीत्यादौ–अनुभवादिप्रत्ययापत्ते-श्च। न विशिष्टार्थः, गौरवात्। तथाच धातोरेव विद्यमानत्वादि-वाचकस्यास्तु लक्षणा, उपसर्गस्तात्पर्य्यग्राहक इत्यस्तु। तथा च तात्पर्यग्राहकत्वमेव द्योतकत्वमिति।

तच्च चादिष्वपि तुल्यम्। चैत्रमिव पश्यतीत्यादौ सादृश्यविशिष्टं चैत्रपदं लक्ष्यम्। इवशब्दस्तात्पर्य्यग्राहक इत्यस्य सुवचत्वादिति।

---

दर्पणः

देर्न धातुत्वानुपपत्तिरत आह—*अनुगच्छतीत्यादाविति*। अत्रानोरनुभवाऽर्थकत्वे तदनुरोधेन गमेरपि व्यापारसामान्याऽर्थकताया एवाऽभ्युपेयतया तथा प्रतीतिदुर्वारा स्यादित्यर्थः।

वस्तुतस्तु संयोगाऽवरुद्धव्यापारेऽन्वर्थानुभवस्य बाधेनाऽन्वयासम्भवान्नाऽनोरनु-भवाऽर्थकत्वसम्भावनेति भावः। *गौरवादिति*। विशिष्टानुपूर्व्याः शक्ततावच्छेदकत्वे गारवादित्यर्थः। *तथाचेति*। धातूपसर्गविशिष्टानां प्रत्येकं प्रतीयमानानुभवार्थप्रति-पादकत्वासम्भवादिति समुदितार्थः। विद्यमानत्वादीत्यादिनोत्पत्तिर्गृह्यते। लक्षणे-त्यस्यानुभवादिरूपेऽर्थे इति शेषः। लक्षणाकल्पिकायास्तात्पर्य्यानुपपत्तेस्तात्पर्य्यग्रहा-ऽधीनतया तस्य चोपसर्गसमभिव्याहाराद्यायत्तत्वादित्यर्थः।

नन्वेतावतोपसर्गस्य तात्पर्य्यग्राहकत्वमेव समायातं, न द्योतकत्वमत आह–*तथा-चेति*॥ तात्पर्य्यग्राहकत्वमेवेत्येवकारेण द्योतकत्वस्य वृत्त्यन्तरव्यवच्छेदः। अनुभवा-

परीक्षा

*व्युत्पत्तेरिति*। इदमुपलक्षणम्। यद्यनुभव उपसर्गार्थस्तदा तस्मिन्नर्थे भ्वादेर्धातुसं-ज्ञा न स्यात्; क्रियावाचकत्वाभावादिति। दूषणान्तरमाह–*अन्विति*। एतेनानुभव-तीत्यादावनुभवः। फलन्तदनुकूलव्यापारो धात्वर्थ इत्यपास्तम्। अनुगच्छतीत्यत्र गमेर्गतिवाचकतया गते स्वव्यापाररूपतयाऽनुभवानुकूलव्यापारस्य बोधापत्तिः। यदि तु 'ग्रामं गच्छति' इत्यत्र गमधातोः संयोगावच्छिन्नव्यापारे शक्तेस्तया प्रकृतेऽपि स एव धात्वर्थो भविष्यति, तत्र चानुकूलतासम्बन्धेनानुभववैशिष्ट्यम्बाधितमिति नानुभवानुकूलव्यापारप्रत्ययापत्तिरिति विभाव्यते, तदाऽनन्वयापत्तिर्दोषो बोध्यः। नन्वीश्वरमनुभवतीत्यत्रानुभू इतिविशिष्टस्य समुदायस्य सोऽर्थ इति चेत्तत्राप्याह— *गौरवादिति*। विशिष्टानुपूर्व्याः शक्ततावच्छेदकत्वे गौरवादित्यर्थः। एवं समुदा-यार्थस्य प्रकृत्यर्थत्वाभावेन प्रत्ययार्थानन्वयापत्तिरित्यपि बोध्या। एवञ्च यत्सिद्धन्त-दाह—*तथा चेति*। नन्वेतावतोपसर्गस्य तात्पर्यग्राहकत्वसिद्धावपि न द्योतकत्व-सिद्धिरत आह—*तथाच तात्पर्येति*। एवकारेणान्याग्रह यस्य न, तस्य व्यवच्छेदः। ननूपर्युक्तद्योतकत्वन्तदा प्रादीनामपि क्रियायोगाभावादुपसर्गसंज्ञा न स्यादितिचेद् ? न, क्रियायोगस्य यस्य क्रियाविशेषणीभूतार्थतात्पर्यग्राहकत्वरूपमेवार्थं इति यत्र यस्य फलस्य धात्वर्थव्यापारविशेषणतया प्रतीतिर्यदुपसर्गसमभिव्याहाराधीनात्तत्र तादृशार्थयोजकत्वमादायैवोपसर्गसंज्ञाप्रवृत्तेः।

*तत्*। निरुक्तं द्योतकत्वम्। उक्तस्य द्योतकत्वस्याङ्गीकारे युक्त्यन्तरमाह—

तत्र स्वयं युक्त्यन्तरमाह—*उपास्येते हरिहरौ इति* ॥

तत्र ह्युपासनाकिमुपसर्गार्थो ? विशिष्टस्य ? धातुमात्रस्य वा ? नाद्यः। तथा सति स्वार्थफलव्यधिकरणव्यापारवाचकत्वरूपसकर्मकत्वस्यासूधातोरुपासनारूपफलवाचकत्वाभावादनापत्तेस्ततः कर्मणि लकारो न स्यात्। न द्वितीयो, गौरवात्। तृतीये त्वागतं द्योतकत्वम्। तात्पर्य्यग्राहकत्वलाभादिति भावः। दृश्यते इत्यत्र कर्म्मणीति शेषः ॥ ४२ ॥

तच्चादिष्वपि तुल्यमित्याह—

तथान्यत्र निपातेऽपि लकारः कर्म्मवाचकः ॥
विशेषणाद्ययोगोऽपि प्रादिवच्चादिके समः ॥४३॥

अन्यत्र=साक्षात्क्रियते अलङ्क्रियते, ऊरीक्रियते शिव इत्यादौ। अत्रापि धातोस्तत्तदर्थे कर्मणि लकारसिद्ध्यर्थं तत्तदर्थवाचकत्वं वाच्यमित्युपसर्गवत् द्योतकत्वममीषामपीत्यर्थः। यद्यपि कृधातोः

---

दर्पणः

दिफले धातोस्तात्पर्य्यग्राहकत्वस्योपसर्गसमभिव्याहाराऽधीनत्वात् "उपसर्गाः क्रियायोगे" (पा० सू० १।४।५९) इत्यत्रापि क्रियाविशेषणीभूताऽर्थतात्पर्य्यग्राहकत्वमेव "उपसर्गाः क्रियायोगे" इत्यनेन विवक्षितमिति भावः। एतत्तत्त्वमग्रे वक्ष्यते। *तत्रेति*। द्योतकत्व इत्यर्थः। सकर्मकत्वस्येत्यनापत्तेरित्यनेनाऽन्वितम् ॥

ननु माऽस्तु सकर्मकत्वमत आह—*तत इति*। उपोपसृष्टासूधातोरित्यर्थः। तथाचोपास्यते हरिरित्यादिप्रयोगानुपपत्तिरिति भावः। *तृतीये त्विति*। धातुमात्रार्थ इति कल्पे त्वित्यर्थः। आगतमिति कर्त्तृक्तान्तम्। उपाद्यऽसमभिव्याहारे विना शक्तिं गमूधातोस्तादृशबोधादर्शनात्तस्येतरार्थपरतायामुपसर्गस्य नियामकत्वलाभादिति भावः ॥ ४२ ॥

*तच्चादिष्विति*। तद्—द्योतकत्वम् ॥ *तत्तदर्थेति*। तत्तदर्थबोधकत्वमि-

परीक्षा

*स्वयमिति*। अत्र उपास्येत इत्यत्र सकर्मकत्वस्येति अस्यानापत्तेरित्यत्रानन्वयः। तृतीये धातुमात्रार्थकत्वकल्पे आगतमिति उपशब्दासमभिव्याहारे धातुमात्रस्यारिक्तस्य प्रयोगे उपासना न प्रतीयते इति तस्याम् धातोस्तादृशार्थपरताया तात्पयग्राहकत्वमुपन्यस्य कल्प्यमिति द्योतकत्वसिद्धिरिति भावः ॥ ४२ ॥

*तत्*—निरुक्तन्द्योतकत्वम्। *निपातेऽपीति*। समभिव्याहृत इति शेषः। धातोस्तत्तदर्थबोधकत्वपक्षे यथेष्टसिद्धिस्तथाह—*अत्रापीति*। *अमीषाम्*—चादीनाम्।

ननु भूधातुरिव न कृधातुरकर्मकः; किन्तु सकर्मक एव, क्रियते कट इति दर्शनात्।

सकर्म्मकत्वमस्त्येव, तथाप्येष्वर्थेषु सकर्म्मकता न स्यात्। अन्यथा वायुर्विकुरुते, सैन्धवा विकुर्व्वते इत्यत्रापि स्यादिति भावः।

अथोपासनासाक्षात्कारादिर्निपातार्थोऽस्तु, "साक्षात्प्रत्यक्षतुल्ययोः" इति कोशस्वरसात्। तदनुकूलो व्यापार एव धात्वर्थोऽस्तु। स्वस्वयुक्तनिपातान्यतरार्थफलव्यधिकरणव्यापारवत्त्वं सकर्म्मकत्वमपि सुवचमिति दृष्टान्तदार्ष्टान्तिकावयुक्ताविति नेदं साधकमिति चेद्? न।

नामाऽर्थधात्वर्थयोर्भेदेन साक्षादन्वयाऽसम्भवेन निपातार्थधात्वर्थयोरन्वयस्यैवासम्भवात्। अन्यथा तण्डुलः पचतीत्यत्रापि कर्म्मतया तण्डुलानां धात्वर्थेऽन्वयापत्तेरिति।

किञ्च प्रादीनां वाचकत्वे 'भूयान् प्रकर्षः' 'कीदृशो निश्चय' इतिवद्, भूयान् प्रः कीदृशो निरित्यपि स्यात्। अस्मन्मते प्रादेरनर्थकत्वान्न तदन्वय इत्यतो द्योतकता तेषां स्यादिति। साधकान्तरमभिप्रेत्याह—*विशेषणेति*॥ शोभनः समुच्चयो द्रष्टव्य इतिवच्छोभ-

दर्पणः

त्यर्थः। *अमीषामिति*। चादिनिपातानामपीत्यर्थः। *अस्त्येवेति*। घटः क्रियत इत्यादौ कर्म्मणि लकारदर्शनात् कृञः सकर्मकत्वानुपपत्त्या साक्षात्कारे लक्षणेति भावः। *एष्विति*। साक्षात्कारादिरूपार्थेष्वित्यर्थः। *अन्यथेति*। क्वचिदर्थान्तरमादाय कृञः सकर्मकस्य सर्वत्र तत्त्वाङ्गीकारे इत्यर्थः।

*वायुर्विकुरुत इति*। विकारानुकूलव्यापारवाचकस्याऽपि सकर्मकतापत्त्या "अकर्मकाच्च" (पा० सू० १।३।३९) इति विहितात्मनेपदानुपपत्तिरिति भावः। 'उपास्यते गुरुः' इत्यादावुपाद्युपसर्गाणामुपासनाद्यर्थवाचकत्वेऽपि पूर्वोक्तसकर्मकत्वानुपपत्तिं परिहरति—*इदमिति*। सकर्मकत्वाऽनुपपत्तिरूपमित्यर्थः॥ *साधकम्*—द्योतकत्वसाधकम्। व्युत्पत्तौ निपातातिरिक्तत्वविशेषणान्नेयमापत्तिरत आह—*किञ्चेति*। *इत्यपि स्यादिति*। अभ्युच्चयवादोऽयं चाद्युपस्थाप्यसमुच्चयस्य नित्यं समुच्चेयसाकाङ्क्षतया समुच्चयार्थकपदप्रयोगं विना चादिप्रयोगासम्भवात्। शब्दशक्तिस्वाभाव्येन नित्यं धातुपरतन्त्रोपसर्गः स्वार्थस्य धात्वर्थविशेषणतयैव बोधनेन तदसमभि-

परीक्षा

एवञ्च न कर्मार्थकलकारानुपपत्तिरत आह-*यद्यपीति*। *एष्वर्थेषु*-साक्षात्कारादिष्वर्थेषु। अन्यथा-यत्र कुत्रचित्सकर्मकत्वदर्शनेन सर्वत्रैव सकर्मकत्वे इत्यत्रापि स्यादिति विकारानुकूलव्यापारवाचकस्यापि सकर्मकत्वे सति विशब्दसमभिव्याहारेऽकर्मकद्योत्यात्मनेपदम्, सकर्मकत्वानुपपत्तिरूपं न स्यादिति भावः। *साधकम्*। द्योतकत्वस्य साधकम्। *साक्षात्*-विभक्त्यर्थमुररीकृत्य। *अन्यथा*-नामार्थधात्वर्थयोर्भेदसम्बन्धेनान्वयस्वीकारे। *इत्यपि स्यादिति*। अभ्युपगम्यवादेनैषोक्तिः, न निपातार्थस्य नित्यत्वम्, न तन्त्रतया केवलानान्तदर्थे प्रयोगाभावात्। *साधकान्तरमिति*।

स्यापि वाच्यता स्यादित्यत्रेष्टापत्तिमाह—*धर्ममात्रमिति* ॥ न त्वत्र लघुगुरुविचार इत्यभिप्रायः ॥ तत्तद्व्यक्तिविशिष्टब्रह्मसत्ताया एव घटत्वघटत्वत्वादिरूपत्वात् ।

सम्बन्धिभेदात् सत्तैव भिद्यमाना गवादिषु ।
जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः ॥
तां प्रातिपदिकार्थञ्च धात्वर्थञ्च प्रचक्षते ।
सा नित्या सा महानात्मा तामाहुस्त्वतलादयः ॥

इति वाक्यपदीयात् । उक्तञ्च 'तस्य भावस्त्वतलौ" ( पा०सू०५। १।११९ ) इति सूत्रे वार्त्तिककारैः-'यस्य गुणस्य भावाद् द्रव्ये शब्द-निवेशस्तदभिधाने त्वतलौ' इति । यस्य गुणस्य=विशेषणतया भास-मानस्य, भावाद् =आश्रयत्वाद्, द्रव्ये=विशेष्ये, शब्दनिवेशः=शब्द-प्रवृत्तिः, तस्मिन् वाच्ये त्वतलावित्यर्थः ।

तथाच रूपादिशब्देभ्यो जातौ, शुक्लाणुदीर्घमहदादिभ्यो गुणे,

---

दर्पणः

णधर्मत्वादित्यर्थः । *लघुगुर्विति* ।

अयम्भावः—धर्मस्यासाधारणधर्मत्वेन वाच्यत्वेऽप्येकत्वमित्यादौ परिमाणादे-र्भानापत्तिः । उक्तासाधारण्यस्य परिमाणे सत्वात् । नच प्रकृत्यर्थतावच्छेदकनिरूपि-तत्वविशिष्टसमवायसम्बन्धेन तदितरावृत्तित्वं तद्वृत्तित्वं च विवक्षितम् । न च तेन सम्बन्धेन परिमाणं तत्र वृत्तीति नोक्तदोष इति वाच्यम् । तथा सत्यनन्तशक्तिकल्प-नावश्यकत्वे तत्तद्धर्मत्वेनैव धर्मे शक्तिरस्तु, किमितरावृतित्वादिगौरवसहिष्णुतया ।

अत एव पृथक्त्वमित्यादौ प्रकृत्यर्थतावच्छेदकगुणान् भावप्रत्ययः प्रतिपादयति । प्रतीतिस्तु ताद्रूप्येण धर्मत्वेन वेत्यन्यदिति गुणदीधितावुक्तं सङ्गच्छत इति । एतेन भावशक्तत्वादिप्रत्ययेन कम्बुग्रीवादिमत्वमित्यादौ गुरोरपि धर्मस्य कम्बुग्रीवादिमत्व-स्य बोधनेन तद्वद् घटत्वत्वमित्यादावपि गुरोर्धर्मस्य त्वप्रत्ययेन बोधनसम्भवादाशङ्का निःसारेत्यपास्तम् । धर्मस्य भावप्रत्ययवाच्यत्वे सम्मतिमाह—*सम्बन्धिभेदादिति*। जातिः पदार्थ इति कल्पे साधकमिदम् । *सम्बन्धिभेदाद्*—अनुयोगिभेदाद्, *भिद्यमाना*=गवेतरासमवेतत्वे सति सकलगोसमवेतत्वादिना तद्व्यक्त्युपरागेण वा पार्थक्येन प्रतीयमाना गवादिनिष्ठा ब्रह्मसत्तैव जातिरित्युच्यते; तस्यां सर्वे शब्दा वाचकत्वेन व्यवस्थिता इत्यर्थः । तदेव व्यक्तीकरोति—*तामिति* । ताम्–तत्तद्व्य-क्त्युपरक्तां सत्तामित्यर्थः ॥

*धात्वर्थमिति* । आकृत्यधिकरणन्यायेन "जातिमन्ये क्रियामाहुः" इति पक्षाभिप्रायेण वा । महानित्यात्मविशेषणम् । क्वचिज्जात्यादिः, क्वचित् सम्बन्ध इत्युक्ताऽर्थे वार्त्तिकं प्रमाणयति—*उक्तञ्चेति* । गुणशब्दस्य वैशेषिकाणां रूपादि-ष्वेव प्रसिद्धेः प्रकृतोपयुक्तार्थपरतामाह—*विशेषणतयेति* । तथाच प्रकृते गुणपदमुपसर्ज्जनीभूतार्थपरमिति भावः । पर्य्यवसितमाह—*तथाचेति* । रूपादी

पाचकादिशब्देभ्यः क्रियायां, घटादिशब्देभ्यो जातौ प्रत्ययः। रूपादिशब्दानां जातिप्रकारकबोधजनकत्वात्। पाचकादिशब्दानां क्रियाप्रकारकबोधजनकत्वे तस्यां प्रत्ययः, संसर्गप्रकारकबोधजनकत्वमिति मते च संसर्गे इति व्यवस्था सूपपादेति भावः।

तत्र जातिवाचकानां व्यक्तय एव शक्यतावच्छेदिकाः। तथाच घटत्वमित्यत्र घटवृत्तिरसाधारणो धर्म्म इति बोध इत्यादि द्रष्टव्यम्।

पक्षान्तरमाह-*यद्वेति*॥ यद्वा "सर्व्वे भावाः स्वेनार्थेन भवन्ति, स तेषां भावः" इति वार्त्तिकोक्तेः-यद्वाशब्दस्तत्सूचनप्रयोजनकोऽपि। भवन्ति वाचकत्वेन प्रवर्त्तन्त इति भावाः=शब्दाः। स्वेन=स्वरूपेण=अर्थेन। भवन्ति=प्रवर्त्तन्ते; अतः स तेषां भावः=प्रवृत्तिनिमित्तमित्यर्थः।

अयम्भावः—अर्थवच्छब्दोऽपि द्रव्ये प्रकारः। हरिहरनलेक्ष्वाकुयु-

---

दर्पणः

त्यादिना रसादेर्गुणपरशुक्लादेश्च सङ्ग्रहः। *बोधजनकत्व इति*। बोधजनकत्वमत इत्यर्थः। व्यपेक्षावादे क्रियाकारकभावसम्बन्धेन कृदर्थकर्त्रादौ धात्वर्थस्यैव प्रकारतया भानोपगमादिति भावः। स्वसिद्धान्तमनुसृत्याह—*संसर्गप्रकारकेति*। *सूपपादेति*। भावप्रत्ययो जातावेवेत्याद्यनियमादिति भावः। *तत्रेति*। जात्यादिवाचकभावप्रत्ययेषु मध्ये इत्यर्थः। *जातिवाचकानामिति*। अर्थनिष्ठशक्तेरितिशेषः।

गुणाद्यात्मकभाववचनानां शुक्लत्वादिशब्दानां जातेः शक्यताऽवच्छेदकत्वसम्भवादाह-*जातिवाचकानामिति*। भावप्रत्ययानामिति शेषः। *अवच्छेदिका इति*। उपस्थितत्वाद् घटत्वादिजातिनिष्ठशक्तेः स्वेतरावृत्तित्वावच्छिन्ननिखिलस्ववृत्तिरूपाधेयत्वादिसम्बन्धेनाऽवच्छेदिका इत्यर्थः। तेन न द्रव्यत्वादिनिष्ठशक्तेर्घटावच्छिन्नत्वम्। अवच्छेदकानुगमकं च गोत्वादिकमेवेति भावः। पर्य्यवसितबोधमाह—*घटवृत्तिरिति*। *पक्षान्तरमिति*। 'तच्छब्द एव भावप्रत्ययवाच्य' इति मतान्तरमित्यर्थः। "अथ कस्माद्गौरित्युच्यते ? गौरित्येव हि गौर्गवि वर्त्तते" इत्यौक्थिका इति निरुक्तमप्येतत्कल्पे उपष्टम्भकम्बोध्यम्। *तत्सूचनप्रयोजनकोऽपीति*। यद्वा शब्दघटितोक्तवार्त्तिकसूचनप्रयोजनकोऽपीत्यर्थः। अपिना पक्षान्तरसङ्ग्रहः। वार्त्तिके-"स्वेनाऽर्थेन भवन्ति" इत्यत्र स्वशब्दस्यात्मीयवचनतयात्मीयाऽर्थेन जात्यादिना प्रवर्त्तन्ते इत्यर्थात् कथं पक्षान्तरपरता कथं वार्थावृत्तेर्धर्मस्य शब्दस्य भावत्वं चेत्यत आशयं प्रकाशयति—*अयम्भाव इति*।

जात्याद्यर्थस्य द्रव्यांशे विशेषणतायाः प्रसिद्धत्वात्तद्दृष्टान्तेन शब्दस्यापि तां साधयति-*अर्थवदिति*। जात्यादिवदित्यर्थः। शब्दस्यार्थविशेषणतायामसाधारणस्थलमाह—*हरिहरेति*। कश्चिदासीदित्यनेन जात्यादिप्रकारकबोधासम्भवो ध्व-

परीक्षा

............(१)ततः स्वरूपतो न सत्वादिप्रकारकः शाब्दबोध इतिरीत्या तस्योप-

---

(१) अत्र पूर्वतः पाठः खण्डितोऽस्ति।

धिष्ठिरवसिष्ठादिशब्देभ्यस्तत्तद्वाच्यः कश्चिदासीदिति शब्दप्रकारक-बोधस्य सर्वसिद्धत्वात्। अन्यथा वनौषधिवर्गादेर्नागरिकान् प्रत्य-बोधकत्वापत्तेश्च। एवमेवाप्रसिद्धार्थकपदेष्वनुभवः सर्वसिद्धो, न तु घटादिपदेष्विव तत्तज्जात्यादिरूपेण। तथाचोभयमवच्छेदकम्। यस्य तथा शक्तिग्रहस्तस्य जात्यादिरूपेणैवोपस्थितिः।

पदप्रकारकः शक्तिग्रहस्तु विशिष्य नापेक्षितः। किन्तु इदं पदं क्वचिच्छक्तं, साधुपदत्वादित्यादिरूप एवापेक्ष्यते इति विशिष्याग्रही-

दर्पणः

न्यते। हर्य्यादौ सन्निकर्षाभावेनानुपस्थितहरित्वाद्यवच्छेदेन शक्तिग्रहाभावेन तद्धर्म-प्रकारकशाब्दबोधासम्भवादुपस्थितपदस्यैव विशेषणत्वमभ्युपगम्यशाब्दबोध उप-पादनीयः। यथाच वृत्त्याद्युपस्थितिस्तथोपपादितं नामार्थनिरूपण इति भावः॥

*अन्यथेति*। अर्थांशे शब्दस्य प्रकारत्वानभ्युपगम इत्यर्थः। आरण्यकानां सन्निकर्षेण जातिधर्मितावच्छेदकशक्तिग्रहसम्भवादुक्तम्—*नागरिकानिति*। *एव-मेवेति*। पदप्रकारेणैवेत्यर्थः। *अप्रसिद्धेति*। अगृहीतजात्यादिविशिष्टशक्तिक-पदेष्वित्यर्थः। *जात्यादिभेदेनेति*। तद्विशेषेणेत्यर्थः। क्वचित्तु जात्यादिरूपेणैवेत्येव पाठः। *उभयमिति*। जात्यादिरूपं पदं चेत्यर्थः॥ *अवच्छेदकमिति*। शक्त्य-वच्छेदकमित्यर्थः।

ननु जात्याद्यनुपस्थितिदशायामयमर्थ एतत्पदवानिति शक्तिग्रहोऽप्यसम्भवदुक्ति-कोऽत आह—*पदप्रकारक इति*॥ *विशिष्येति*। घटपदत्वादिरूपेणेत्यर्थः। यद्यपि 'सर्वे भावाः' इति सर्वशब्दोपादानादेतत्कल्पे शब्दस्यैव सर्वशब्दप्रवृत्तिनिमित्तत्वमव-गम्यते, तथापि घटत्वादिना गृहीतशक्तिकघटादिपदाद् घटत्वप्रकारकबोधस्य सार्वज-नीनप्रसिद्धिसिद्धस्यापह्नोतुमशक्यतया प्रायशः प्रसिद्धार्थकस्थले शब्दाप्रकारकबोध-स्याननुभवेन चैतत्कल्पेऽपि जात्यादीनां शब्दप्रवृत्तिनिमित्तत्वमङ्गीकरणीयमेव।

वार्त्तिकं तु भावशब्दस्याप्रसिद्धार्थकशब्दपरतया योज्यम्। तत्र निमित्तान्तराभावेन वार्त्तिकबलाच्छब्दस्यैव शब्दप्रवृत्तिनिमित्तत्वावधारणात्। यथा कादिपञ्चकशक्त-ङुपदे। अत एव "अनुदात्तङित" (पा० सू० १।३।१२) इति सूत्रेऽनुदात्तङिता द्वावात्मनेपद-मित्यस्य "तङानौ द्वावर्थ" इति तत्र "सङ्ख्यातानुदेशः प्राप्नोति" इति यथासङ्ख्य-सूत्रे भाष्यकृदुक्तं सङ्गच्छते। अन्यथा नवानां तङर्थत्वेनात्मनेपदवत्त्वेन बोधे सर्वेषा-मेकत्वेन तत्र च द्वावित्यास्यानुपपत्तिः स्पष्टैव। अत एव सारकृताऽप्युभयमवच्छेद-कमित्युपसंहृतम्। क्वचिच्छब्दोऽपीति तदाशय इति।

कथं तर्हि तत्र शक्तिग्रहोऽत आह—*किन्त्विति*। *क्वचिच्छक्तमिति*॥ किञ्चि-न्निष्ठशक्तिनिरूपकमित्यर्थः। तथाच नृपादिवर्णनप्रस्तावे नृपत्वादिनोपस्थितनलादीनां

परीक्षा

पत्तिः कार्य्या। अपि च तदंशेऽप्युद्बोधककल्पनमेव नहि, यद्यत्पदार्थविषयक-संस्कार एकस्तस्मात्सर्वपदार्थविषयिकैव स्मृतिर्जायत इति नियमः। कुण्डवदन-विम्बानीत्यनुभवजन्यसंस्कारस्यैकस्य सद्भावेऽपि तत्र तत्तत्सहस्त्रपदार्थमात्रस्य

तशक्तिकेभ्यस्तथैव बोधः। तथाच शब्दोऽपि त्वप्रत्ययार्थ इति प्रपञ्चितं भूषणे ॥ ५१ ॥

इति वैयाकरणभूषणसारे त्वादिभावप्रत्ययार्थविचारः ॥ ६ ॥

---

दर्पणः

शक्त्यंशे भाने उपस्थितत्वान्नलादिपदानामपि तदर्थं भानमविरुद्धम्। इदमेतच्छक्यमित्याकारकार्थशक्तिग्रह एव विशेषरूपेणोपस्थितेस्तन्त्रत्वादिति भावः। *तथैव बोध इति* ॥ पदवाच्यत्वप्रकारक एवेत्यर्थः। एवकारेण जात्यादिप्रकारकबोधव्यवच्छेदः। इदञ्च कश्चिदर्थो नलादिपदशक्योऽर्थत्वादित्यानुमानिकशक्तिग्रहाभिप्रायेण। उक्तोपनीतपदशक्तिग्रहे त्वर्थविशेष्यकबोधानुपपत्तिरेव। शक्तिज्ञानपदार्थोपस्थितिशाब्दबोधानां समानप्रकारकत्वनियमादित्यवधेयम्।

नैयायिकास्तु—नलादिपदानामपि विशिष्यशक्तिग्रहो नानुपपन्नः। यत्र नलत्वादिसम्बन्धेन यत्किञ्चिद्धर्मवत्वधीस्तद्विषयीभूतनलत्वादेः शक्तिग्रहे धर्मितावच्छेदकतया भाने बाधकाभावात्। यद्वा यत्र प्रमेयत्वेन प्रमेयवानित्याकारा नलत्वादिविशिष्टबुद्धिः, ततश्च प्रमेयत्वांशे मोषदशायां स्वरूपतो नलत्वादिप्रकारकनलविशेष्यकस्मरणे बोधकाऽभावात्तद्विषयनलत्वादिना विशिष्य नलादौ नलादिपदशक्तिग्रहेण तत्तद्रूपेण नलादिपदान्नलादिबोधस्य सुलभत्वात्।

न च प्रमेयत्वांशे मोषकल्पने मानाभावः। अनूभूयमानतत्तद्धर्मप्रकारकशाब्दबोधानुपपत्तेरेव मानत्वात्। कथमन्यथानुभवात्मकसमूहालम्बनादेकपदार्थोद्बोधकाऽसमवधानेऽन्यपदार्थस्मृतिः। अक्लृप्तस्यार्थांऽशे पदविशेषणत्वस्य कल्पनापेक्षया तादृशस्मृतौ प्रमेयत्वांशे मोषकल्पनस्यैव न्याय्यत्वात्। पदस्यार्थधर्मत्वाभावेन तस्य पदांशे विशेषणत्वासम्भवाच्च। तस्य पदस्य तस्मिन् पदे शक्तिरित्यर्थस्य लौकिकत्वेन पदप्रकारकबोधस्य सार्वत्रिकत्वासम्भवाच्चेत्याहुः ॥ ५१ ॥

इति भूषणसारदर्पणे भावप्रत्ययार्थनिरूपणम् ॥ ९ ॥

परीक्षा

दर्शनरूपोद्बोधकदर्शनेन सादृश्यात्कुण्डमात्रस्य स्मृतिर्जन्यत इत्यस्य लोकप्रसिद्धत्वात्। नचैवं सति 'जातिमान् घटपदशक्यः' इति ग्रहानन्तरं स्वरूपतो घटत्वस्य स्मृतिरपि स्यादिति वाच्यम्। उद्बोधकस्य फलबलकल्प्यतया तादृशस्थले मोक्षस्याकल्पनादिति।

वस्तुतस्तु—भाष्ये "यस्य गुणस्य भावाद्द्रव्ये शब्दनिवेशस्तदभिधाने त्वतलौ" इति प्रथमत उक्तम्। तत्र गुणशब्दश्चानाश्रयस्य भेदकधर्मस्य बोधकः। तथा च सौत्रात् भावपदम्प्रवृत्तिनिमित्तपरम्। घटत्वमित्यादौ प्रवृत्तिनिमित्तत्वावच्छिन्नस्त्वाद्यर्थः। षष्ठ्यर्थः—आधेयता। बोधस्तु समभिव्याहाराद्विशेष्यैव। यद्वा—सर्वस्मिन् पक्षे—प्रकृतिः शब्दपरा, प्रवृत्तिनिमित्तं त्वाद्यर्थः। घटस्य भाव इत्यादौ षष्ठ्यर्थो वाच्यत्वम्। एवञ्चोभयपक्षेऽपि तत्तच्छब्दप्रवृत्तिनिमित्तस्यैव भावप्रत्ययार्थत्वमिति दिक् ॥ ५१ ॥

इति श्रीभूषणसारटीकायां परीक्षायाम्भावप्रत्ययार्थनिरूपणम् ॥ ९ ॥

## ॥ अथ देवताप्रत्ययार्थनिर्णयः ॥

"सास्य देवता" (पा० सू० ४।२।२४) इत्यत्र देवताविशिष्टं देयं प्रत्ययार्थः। ऐन्द्री वैश्वदेवीत्यादाविन्द्रादेर्देवतात्वोपस्थापकान्तराभावात्। तेन रूपेणोपस्थितये शक्तिकल्पनावश्यकत्वात्। अत एव-

आमिक्षां देवतायुक्तां वदत्येवैष तद्धितः।
अमिक्षापदसान्निध्यात्तस्यैव विषयार्पणम् ॥ इति।

---

दर्पणः

अथ देवताप्रत्ययार्थनिर्णयः।

ननु देवताया इन्द्रादिपदाल्लाभेन तदन्तर्भावेण तद्धितशक्तिकल्पनमनर्थकमत आह—*देवतात्वोपस्थापकेति* ॥ इन्द्रत्वेन रूपेण देवतोपस्थितावपि देवतात्वेन रूपेण तदुपस्थापकाभावादित्यर्थः। *तेन रूपेणेति* ॥ देवतात्वेन रूपेणेन्द्रोपस्थितये इत्यर्थः। अन्यथा—

तद्धितेन चतुर्थ्या वा मन्त्रलिङ्गेन वा पुनः।
देवतासङ्गतिस्तत्र दुर्बलं च परं परम् ॥

इति मीमांसकसिद्धान्तासङ्गतिरिति भावः। द्रव्यस्य देवतासम्बन्धित्वं च तदुद्देश्यकत्यागकर्मत्वं त्यागोद्देश्यत्वमपि वेदबोधिताबाधितद्रव्यस्वामित्वप्रकारेणेच्छाविषयत्वम्। तदेव च देवतात्वम्। नातो घृतादिसम्प्रदानब्राह्मणस्य त्यागोद्देश्यत्वेऽपि देवतात्वम्। तस्य तत्स्वामित्वाबोधात् 'ऐन्द्रो मन्त्र' इत्यादौ मन्त्रस्य तद्देवताकत्वं च न तदुद्देश्यकत्यागकरणत्वम्। विनाऽपि मन्त्रमिच्छाविशेषात्मकत्यागोत्पत्त्याऽव्यभिचारात्। किन्तु त्यागाङ्गोच्चारणकत्वम्। एवञ्च देवतासम्बन्धी प्रत्ययार्थः।

ननु तद्देवताकत्वम्, 'ऐन्द्रं हविः' इति सामानाधिकरण्यानुपपत्तेः। स चामिक्षादिपदसमभिव्याहारे तत्तद्द्रव्येण प्रतीयते। 'देयं प्रत्ययार्थः' इति तु तस्यामिक्षादिपदसमभिव्याहारे दानकर्मत्वेनापि प्रतीतेरित्यभिप्रेत्योक्तमिति भावः। उक्तार्थे सम्मतिमाह-*अत एवेति* ॥ देवतासम्बन्धिनः प्रत्ययार्थत्वादेवेत्यर्थः॥ *सान्निध्यादिति* ॥ 'सामिक्षा वैश्वदेवी' इत्यत्रामिक्षापदसमभिव्याहारादित्यर्थः॥ *विषयार्प-

परीक्षा

अथ देवतादिप्रत्ययार्थनिर्णः।

तद्धितप्रसङ्गादाह—*सास्येति*। *देवताविशिष्टन्देयमिति*। तदुद्देश्यकत्यागकर्मत्वसम्बन्धेन देवताविशिष्टं दानकर्म "सास्यदेवता" इति सूत्रविहितप्रत्ययार्थ इत्यर्थः। *अत एव*—देवताविशिष्टदेयस्य प्रत्ययार्थत्वादेव। *तद्धित इति*। अस्य मीमांसकैरुक्तमित्यत्रान्वयः।

ननु "सास्य" इति सूत्रे आमिक्षापदाभावादामिक्षामित्यनुपपन्नमत आह-*आमिक्षापदेति*। *सान्निध्यादिति*। तस्य "तप्ते पयसि दध्यानयति, सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्" इति वाक्ये सान्निध्यापादानादित्यर्थः। *तस्यैव विषयार्पण-

केवलाद्देवतावाची तद्धितोऽग्नेःसमुच्चरन्।
नान्ययुक्तोऽग्निदैवत्यं प्रतिपादयितुं क्षमः॥

इति च मीमांसकैरप्युक्तमित्याशयेनाह—

**प्रत्ययार्थस्यैकदेशो प्रकृत्यर्थो विशेषणम्॥ ५२॥**
**अभेदश्चात्र संसर्ग आग्नेयादावियं स्थितिः॥**
**देवतायां प्रदेये च खण्डशः शक्तिरस्तु वा॥५३॥**

एकदेशे = देवतारूपे। तच्च विशेषणमभेदेनेत्याह—*अभेदश्चेति*॥ ननु देवतायाः प्रत्ययार्थैकदेशत्वान्न प्रकृत्यर्थस्य तत्राभेदेनाप्यन्वय इत्याशयेनाह—*देवतायामिति*॥ तथाच पदार्थैकदेशतैव नास्तीति भावः॥ ५३॥

नन्वग्न्यादिदेवस्य प्रकृत्यैव लाभान्न तत्र शक्तिः कल्प्या।

---

दर्पणः

णमिति*॥ आमिक्षात्मकद्रव्यस्यैव देवतोद्देश्यकत्यागकर्मत्वप्रतीतिरित्यर्थः।

*केवलादिति*॥ सोमादिपदासमभिव्याहृतात्॥ *अग्नेः समुच्चरन्*। प्रत्ययत्वादग्निशब्दात्पुरः प्रादुर्भवन्। "आग्नेयोऽष्टाकपालो भवत्यमावस्यायाम्" इत्यादौ॥ *नान्येति*॥ सोमादिसाहित्यापन्नाऽग्निदेवतोद्देश्यकं द्रव्यं प्रतिपादयितुं नेष्टे, किन्तु तद्देवताकमेवेति तद्भावः। तथाच देवताविशिष्टदेयस्य तद्धितार्थत्वं तेषामपि सम्मतमिति भावः॥

*प्रकृत्यर्थेति*॥ 'पदार्थः पदार्थेनाऽन्वेति' इति व्युत्पत्तेरिति भावः॥ अस्मिन् कल्पे च प्रकृत्यर्थस्याभेदसम्बन्धेन देवतारूपतद्धितार्थेऽन्वयः। तस्य च स्वोद्देश्यकत्यागकर्मत्वसम्बन्धेन द्रव्यरूपतद्धिताऽपरपदार्थे इति बोध्यम्॥ ५३॥

परीक्षा

मिति*। गमकत्वादर्पणपदेन विषयपदस्य समासापेक्षत्वेऽपि स द्रष्टव्यः।

ननु यत्रैक एव देवतावाच्याग्निशब्दः श्रूयते; तत्राग्निदेवताविशिष्टं देयवदग्नीषोमीयस्यापि प्रतीतिः कुतो नेति शङ्कानुत्पत्तये आह—*केवलादिति*। अस्याग्नेरित्यत्रान्वयः। अग्नेः—अग्निपदात्—*आग्नेयादौ*। "आग्नेयोऽष्टाकपाल" इत्यादौ। तथा च यत्र सोमादिपदासमभिव्याहृताग्निपदस्य प्रकृतित्वम्। तथा "आग्नेयोऽष्टाकपालोऽमावास्याम्"इत्यादौ देवतान्तरोपस्थापकपदाभावादग्निमात्रदेवताकमेव द्रव्यम्प्रतिपादयति—*तद्धित इति*। 'सिद्धन्त्वेकदेशत्वात्'इति "पदार्थः पदार्थेनान्वेति, नतु पदार्थैकदेशेन" इति व्युत्पत्तिविरोधादित्यादिवैशिष्ट्यनियामकपूर्वोक्तसम्बन्धे त्यागोद्देश्यत्वं वेदबोधितद्रव्यस्वामित्वप्रकारकेच्छाविषयत्वरूपम्। एतदेव च देवतात्वम्। तेन ब्राह्मणादेर्व्यावृत्तिः। "आग्नेयो मन्त्रः" इत्यादौ वैशिष्ट्यनियामकसम्बन्धस्तु त्यागाङ्गधारणकर्मत्वमेव। एवञ्च देयमित्युपलक्षणमिति बोध्यम्॥ ५३॥

नन्विन्द्रादिपदाद्देवताया लाभात्तदन्तर्भावेण तद्धितस्य शक्तिकल्पनवैयर्थ्यमिति

न च देवतात्वेन रूपेणोपस्थितये सा कल्प्यते । प्रकृतेर्लक्षणयैव तथोपस्थितिसम्भवात् । उपसर्गाणां द्योतकत्वनये प्रजयतीत्यत्र प्रकृष्टजयप्रत्ययवदित्यभिप्रेत्याह—

प्रदेय एव वा शक्तिः प्रकृतेस्त्वस्तु लक्षणा ॥
देवतायां निरूढेति सर्वे पक्षा अमी स्थिताः ॥५४॥

न च 'ऐन्द्रं दधि' इत्यादौ द्रव्यस्य पदान्तराल्लाभात् कुतः पुनः प्रत्ययस्य तत्र शक्तिः कल्प्यत इति वाच्यम् । पदान्तराश्रवणेऽपि तत्प्रतीतेः । ऐन्द्रं दधीति सामानाधिकरण्याच्च ।

अन्यथाऽऽख्यातस्यापि कर्त्तृकर्मवाचित्वं न स्यात् । मीमांसकानां पुनः प्रत्ययस्य देवतात्वमेवार्थोऽस्तु । द्रव्यं पदान्तराल्लभ्यत एवेति

---

दर्पणः

*द्योतकत्वनय इति* । वाचकत्वनये प्रकर्षस्योपसर्गार्थत्वेन तद्विशिष्टे धातोर्लक्षणाया अकल्पनेन दृष्टान्तत्वासम्भवादितिभावः ॥ *प्रकृष्टजयवदिति* । प्रकृत्यंशमात्रमादाय दृष्टान्तत्वं बोध्यम् ॥ *लाभादिति* । समभिव्याहृतदध्यादिपदेन देवतारूपसम्बन्धिलाभादित्यर्थः ॥ *कुतः पुनरिति* । "अनन्यलभ्यो हि शब्दार्थ" इति न्यायात् । किन्तु सम्बन्धार्थकत्वमेवोचितमिति भावः ॥ *तत्प्रतीतेरिति* । देवतासम्बन्धिप्रतीतेरित्यर्थः । तथाच तदनुपपत्त्या तद्धितस्य तदर्थकत्वमावश्यकमिति भावः ।

पदान्तराश्रवणे सम्बन्धिप्रतीतेश्च शपथनिर्णेयत्वादाह—*ऐन्द्रं दधीति* । सम्बन्धमात्रार्थकत्वे सामानाधिकरण्यानुपपत्तिरित्यर्थः ॥ *अन्यथेति* । उक्तानुपपत्तेस्तदसाधकत्वे इत्यर्थः । 'पचति देवदत्तः' 'पच्यते तण्डुल' इत्यत्र सामानाधिकरण्यानुपपत्तिर्हि कर्त्रादिवाचित्वसाधिकेति भावः ।। वैयाकरणान् प्रतीयमापत्तिः । मीमांसकान् कटाक्षीकृत्याह—*मीमांसकानामिति* । तन्मते तत्तद्देवताकत्वरूपप्रत्ययार्थेन धर्मिण

परीक्षा

शङ्कते-*नचेति*। *देवतात्वेन रूपेणेति*। इन्द्रत्वेन रूपेणेन्द्रशब्दाल्लाभेऽपीत्यादिः। प्रकृतेः इन्द्रादिशब्दस्य लक्षणयैव इन्द्रभिन्नदेवतात्वावच्छिन्ने लक्षणेष्टैव । *प्रकृष्टजयवदिति* दृष्टान्तोपादानं प्रकृत्यंशे लक्षणाभिप्रायेण । फललक्षणेत्याकाङ्क्षायामाह—*देवतायामिति* । *द्रव्यस्य*—देवतादिद्रव्यस्य । एवञ्च प्रत्ययस्य सम्बन्धार्थकत्वमेवोचितमिति भावः । *तत्प्रतीतेः*—देवतासम्बन्धिदेयप्रतीतेः । सम्बन्धमात्रस्य प्रत्ययवाच्यत्वे सामानाधिकरण्यमप्यनुपपन्नमित्याह—*ऐन्द्रमिति* । *अन्यथा*—उक्तानुपपत्तेरसार्वत्रिकत्वे । *न स्यादिति* । वैयाकरणमत इति शेषः । एवञ्च—'पचति चैत्रः' इति शब्दजन्यसामानाधिकरण्यावगाह्यनुभवविरोधः। ननु मास्तु सामानाधिकरण्यमिति चेद् ? न । समानवचनकत्वानुपपत्तेः । मीमांसकमतन्त्वयुक्तमित्याशयेनाह—*मीमांसकानामिति* । तन्मते घटत्वादिजातेर्घटादिशब्दवाच्यत्वेऽपि यथा, तथा व्य-

आख्यातस्य कर्तृवद्वाच्यत्वं मास्त्विति कुतो न शक्यते वक्तुमिति दिक्।

---

दर्पणः

आक्षेपाल्लाभेन सामानाधिकरण्योपपत्तेरिति भावः। पदान्तरादित्याक्षेपस्याऽप्युपलक्षणम्॥ *वाच्यत्वं मास्त्विति*। आख्यातस्य कर्तेव तद्धितस्य द्रव्यं वाच्यं मास्त्वित्यर्थः। इष्टापत्तौ "आमिक्षां देवतायुक्ताम्" इति त्वत्सिद्धान्तभङ्ग इति भावः।

ननु तेषां कर्तुरनन्यलभ्यत्वान्न प्रत्ययाऽवाच्यत्वं, किन्तु प्राधान्यापत्तेरेव तत्त्वमत आह—*दिगिति*। तदर्थस्तु "प्रकृतिप्रत्ययार्थयोः" इति न्यायस्य सङ्ख्यादौ व्यभिचारेण तेन प्राधान्यापत्त्यभावात्। "भावप्रधानमाख्यातम्" इति निरुक्तात्तस्याख्यातार्थाऽतिरिक्तप्रत्ययाऽर्थविषयकत्वोपगमाच्चेति।

अत्रेदम्बोध्यम्—तद्धितस्य देवतात्वाघटितार्थकत्वे, "तद्धितेन चतुर्थ्या वा" इति न्यायस्य सर्वसिद्धस्यानुपपत्तिः। नच तद्धितस्य तदर्थकत्वेऽपि कथं तदपेक्षया चतुर्थ्या जघन्यत्वं त्यागोद्देश्यकत्वरूपदेवताबोधकत्वस्योभयत्राविशिष्टत्वादिति वाच्यम्। न हि देवतासम्बन्धिदेयमात्रं तद्धितार्थः, किन्तु वेदबोध्यदेवतात्वघटितः। एवञ्च तद्धितान्तेन बोधस्य देवतात्वांऽशे वेदबोध्यत्वाऽवगाहित्वेन तदंशे अप्रामाण्यशङ्काया अनुदयाज्झटिति विनियोजकतया बलवत्त्वम्, चतुर्थ्या तु तदंशे वेदबोध्यत्वावगाहिबोधस्यैव जननेन तत्राप्रामाण्यशङ्कानिरासार्थमुपायान्तरस्यापेक्षणाजघन्यत्वम्।

यद्वा तद्धितेन देवतात्वेन रूपेण देवताबोधे "साऽस्य देवता" (पा० सू० ४।२।२४) इति स्मरणमस्ति। चतुर्थ्यास्तु देवतात्वे न स्मरणम्। "चतुर्थी सम्प्रदाने" (पा०सू० २।३।१३) इति सम्प्रदान एव तत्स्मरणात्। सम्प्रदानत्वं च त्यज्यमानद्रव्योद्देश्यकत्वे सति प्रतिगृहीतृत्वम्। एवञ्च ततः सम्प्रदानत्वघटकतया देवतात्वप्रतीतावपि तद्धितादिवन्मुख्यतया देवतात्वानधिगमात् तस्यास्तद्धिताऽपेक्षया जघन्यत्वम्। एवं मन्त्रवर्णादधिष्ठानप्रतीतावपि देवतात्वस्य साक्षादप्रतीतेर्मन्त्रवर्णस्य चतुर्थ्यपेक्षया जघन्यत्वं बोध्यम्। तद्धितस्य देवतार्थकत्वाऽनभ्युपगमे तु तदसङ्गतिः स्पष्टैवेति।

परीक्षा

क्तेराक्षेपाच्छब्दबोधे भानं भवति, तद्वद्देवतात्वमेव वाच्यं स्यात्। देवताया आक्षेपालाभात्सामानाधिकरण्यं भविष्यतीति विरोधाभावः। *वाच्यत्वम्मास्त्विति*। आख्यातस्य कर्तेव तद्धितस्य द्रव्यं वाच्यं मास्त्वित्यर्थः। इष्टापत्तिस्तु भवता कर्तुमशक्या।

आमिक्षां देवतायुक्तां वदत्येवैष तद्धितः॥

इत्येतद्वचनविरोधात्।

ननु कर्तुर्न वाच्यत्वं प्राधान्यापत्तिभियोच्यते; नत्वनन्यलभ्यत्वं तस्येति बुद्ध्या कल्प्यस्तदिति चेद्? न। नच कर्तुः प्राधान्यापत्तौ "प्रकृतिप्रत्ययौ" इति वचनस्यानुरोधबलवत्त्वन्तु नास्तिः, तस्य नियमस्य संख्यायां व्यभिचारादतस्तस्यौत्सर्गिकत्वं सर्वैः कल्पनीयमेवेति प्रत्ययार्थे संख्याभिन्नत्वविशेषणस्थले आख्यातार्थातिरिक्तत्वमेव "भावप्रधानमाख्यातम्, सत्वं प्रधानानि नामानि" इति वचनादुपादेयमिति कर्तुराख्यातार्थत्वेऽपि प्राधान्यापत्तेर्वारणसम्भवात्।

*देवतायाम्*-देवतात्वेन रूपेण। निरूढेति = अनुपपत्तिज्ञानापूर्वकत्वमनादिप्रयोगावच्छिन्नत्वं वा तत्त्वमिति भावः॥ ५४॥

अनयैव रीत्यान्यत्राप्यवधेयमित्याह—

क्रीडायां णस्तदस्यास्तीत्यादावेषैव दिक् स्मृता॥
वस्तुतो वृत्तिरेवेति नात्रातीव प्रयत्यते॥ ५५॥

"तदस्यां प्रहरणमिति क्रीडायां णः" (पा० सू० ४।२।५६) इत्यत्र प्रहरणविशिष्टा क्रीडा प्रहरणक्रीडे क्रीडामात्रं वार्थः। आदिना,

---

दर्पणः

नन्विन्द्रादिपदाच्छक्त्यैव देवतालाभे तत्र लक्षणाभ्युपगमो व्यर्थोऽत आह-*देवतात्वेन रूपेणेति*॥ तथाच "शक्यादन्येन रूपेण ज्ञाते भवति लक्षणा" इतिवृद्धोक्तेर्देवताया इन्द्रस्वरूपायाः शक्यत्वेऽपीन्द्राभिन्नदेवतात्वेन तद्भानार्थं सोचितैवेति भावः। अनुपपत्तिज्ञानपूर्विकायामपि तीरनिष्ठगङ्गापदलक्षणायां निरूढत्वव्यवहारादाह—*अनादीति*॥ एतत्तत्वमभिहितं प्राक्॥ ५४॥

एकदेशान्वयप्रसङ्गमाह-*प्रहरणक्रीडेति*॥ व्युत्पत्तिवैचित्र्यादेकपदोपस्थितयोरपि तयोः परस्परमन्वय इति भावः॥ प्रहरणस्यापि प्रकृत्यैव लाभमभिप्रेत्याह-*क्रीडामात्रम्वेति*॥ क्रीडारूपसम्बन्धे वेत्यर्थः॥ मात्रपदेन तत्प्रहरणस्य तद्धिता-

परीक्षा

ननु देवताया इन्द्रादिपदादेव लाभात्पुनस्तत्र लक्षणाकल्पनमनर्थकमत आह—*देवतात्वेनेति*। एतेनेन्द्रपदाद्देवतात्वेन रूपेण लाभेऽपि देवतात्वरूपेण शाब्दबोधे देवताया भानसिद्धये लक्षणा आश्रयणीया, 'शक्यादन्येन रूपेण ज्ञाते भवति लक्षणा' इति सिद्धान्तो व्यवस्थितः। स च गंगापदस्य तीरे लक्षणा निरूढेति व्यवहारो वा दृश्यते; तस्य कथमुपपत्तिः, अनुपपत्तिज्ञानस्य तत्पूर्ववर्तित्वादिति चेद्? अनुपपत्तिज्ञानपूर्विका लक्षणा सा निरूढेति वाच्यम्। तथा च प्रकृतेऽनुपपत्तिप्रतिसंधानाभावात्कथं निरूढत्वमत आह—*अनादीति*। अत्रानादित्वम्पारिभाषिकं प्रागभिहितम्॥५४॥

*अनयैव रीत्येति*। यथा "सास्यदेवता" इति सूत्रविहिततद्धितप्रतिपादितेऽर्थे प्रकृत्यर्थान्वय एकदेशे यदि स्वीक्रियते; तदा विशिष्टे शक्तिः। एकदेशान्वयानङ्गीकारे खण्डशः शक्तिरिति तथान्यतद्धितार्थस्थलेऽप्यन्वय इति भावः। प्रहरणस्यापि प्रकृत्या दण्डेत्यादौ लाभादाह-*क्रीडामात्रमिति*। दण्डेतिशब्दात् दण्डाभिन्नप्रहरणविशिष्टा क्रीडेति बोधः। प्रहरणवैशिष्ट्यं च-जन्यत्वसंबन्धेन "सोऽस्य निवास" इति सूत्रविहिततद्धितस्य निवासः संवन्धी चार्थः। निवासशब्दोऽधिकरणघलन्तः। एवञ्च स्रौघ्नशब्दात् स्रुघ्नाभिन्ननिवासाधिकरणसंबन्धीति बोधः। "सास्मिन्" इति सूत्रविहिततद्धितस्य पौर्णमासी-अधिकरणत्वार्थः। एवञ्च पौषपदात् पौष्यभिन्नपौर्णमास्यधिकरणमिति बोधः। अधिकरणत्वञ्च-घटितत्वरूपम्। पौषीपदञ्च "नक्षत्रेण युक्तः कालः" इति सूत्रविहिताणन्तप्रकृतिकङीबन्तम्। तत्र नक्षत्रशब्दस्तत्तन्नक्षत्रयुक्तचन्द्रयुक्त-

## "सोऽस्य निवासः" (पा० सू० ४।३।८९) "सास्मिन् पौर्णमासी"

दर्पणः

र्थत्वव्यवच्छेदः ॥ तथाच दण्डाभिन्नप्रहारसाधनविशिष्टा क्रीडेति बोधः ॥ *सोऽस्येति* ॥ एतत्सूत्रविहितप्रत्ययस्य निवासः सम्बन्धी चार्थः। अत्र निवासशब्दोऽधिकरणघञन्तो-निशब्देन च वासे नैरन्तर्य्यरूपातिशयः प्रत्याय्यते। स च प्रकरणादिना तत्तत्कालघटितो ग्राह्यः। तथाच स्रुघ्नाभिन्न-वासाऽधिकरणसम्बन्धीति बोधः। निवासश्च प्रत्यासत्या प्रत्ययार्थसम्बन्धकर्तृक एव। अत एव कादाचित्कस्रुघ्नावासकर्तरि न तथा प्रयोगः ॥

*सास्मिन्निति* । सूत्रविहिततद्धितस्य तु पौर्णमासीघटितत्वावच्छिन्नोऽर्थः। नक्षत्रयुक्तकालविहिताऽणाद्यन्तपौषादिशब्दानां पुष्याभिन्ननक्षत्रकर्मकशशिभोगाश्रयकालोऽर्थः। तस्योक्तार्थैकदेशपौर्णमास्यामभेदान्वयः। तथा च 'पौषो मास' इत्यादौ पुष्याभिन्ननक्षत्रकर्मकशशिभोगाश्रयकालाभिन्नपौर्णमासीघटितो मास इत्यादिबोधः। पौषादिपदं च न केवलयौगिकम्। 'पौषः पक्ष' इति व्यवहारविरहात्, किन्तु रूढमपि। एतद्बोधनायैव सूत्रे संज्ञाग्रहणम्। रूढिनिरूपकतावच्छेदकञ्च त्रिंशत्तिथिसमुदायत्वरूपमासत्वमात्रम्। यत्किञ्चित्तिथ्यवधिकत्रिंशत्तिथिसमुदाये मासादिव्यवहारेऽपि चान्द्रसौरपौषादिबहिर्भूतपौष्यादिघटितत्रिंशत्तिथ्यन्तर्गततिथिषु पौषादिव्यवहारविरहात्, किन्तु शुक्लप्रतिपदादिदर्शाऽन्ततिथिसमुदायत्वमतो नोक्तदोष इत्याद्यन्यत्र विस्तरः।

परीक्षा

काले वर्तते। नच पौषीपौर्णमासीघटितत्वं यत्किञ्चित्पञ्चसंख्याकदिवससमूहे पक्षे वेतिः तत्रापि पौषादिव्यवहाराय तदिति वाच्यम्। "संज्ञायाम्" इति वार्तिकस्य तत्र सत्वात्। तथा च यत्र पौषादिपदस्य सौरचान्द्रादिभेदेन भिन्ने मासे रूढिस्तस्मिन्नेवाभिधेये प्रत्यय इष्यते। एवञ्च तत् पौषादिपदं न यौगिकमेव, किन्तु योगरूढम्। नचैवमपि रूढिनिरूपकतावच्छेदकत्रिंशत्तिथिसमुदायत्वं वक्तव्यम्। तथा च यत्किञ्चित्तिथिमारभ्य तिथिसमुदाये पौषीपौर्णमासीघटिते पौषव्यवहारापत्तिरिति वाच्यम्। रूढिनिरूपकतावच्छेदकस्य तत्रासत्वात्। तत्र शुक्लप्रतिपदादिदर्शान्ततिथिसमुदायत्वम्।

नच यस्मिन्वर्षे मार्गशीर्षे शुक्लाष्टम्यान्धनुस्सङ्क्रान्तिमकरसंक्रान्तिश्च पौषनवम्याञ्जाता तस्मिन्सौरपौषेऽपि पौषव्यहारो दृश्यते, तदनुपपत्तिरिति धनुस्थरविविशिष्टत्वमेव रूढ्यर्थतावच्छेदकमस्त्विति वाच्यम्। तादृशे सौरे यदि पौषव्यवहारो यदि मुख्यः स्यात्, तदा तस्य सौरस्य पौषीपौर्णमासीघटितत्वाभावेन योगार्थस्याभावेऽपि पौषत्वमभ्युपेयम्। तथा च योगरूढिलभ्यार्थस्य बाधापत्तिः। नचेष्टापत्तिः, 'सास्मिन्' इति सूत्रविरोधापत्तेरित्युक्तस्यार्थस्यैव रूढ्या सौरपौषादौ पौषादिव्यवहारस्य गौणत्वात्। नच संज्ञाशब्दानां यथाकथञ्चिद्व्युत्पादनं क्रियते, तत्रावयवार्थस्यासत्वेऽपि साधुत्वस्य स्वीकारः सर्वसम्मतः। रथन्तरकुशलप्रवीणादिपदे यथा। एवञ्च धनुस्थरविविशिष्टत्वस्य रूढ्यर्थतावच्छेदकत्वं स्वीकृत्य सौरपौषव्यवहारो मुख्योऽस्त्विति वाच्यम्। "सञ्ज्ञायाम्" इत्युपादाय योगार्थव्युत्पादनविरो-

(४।२।२१) इति, "तदस्यास्त्यस्मिन्निति मतुप्" (पा० सू० ५।२।

दर्पणः

"तदस्यास्त्यस्मिन्" (पा०सू० ५।२।८४) इति सूत्रेण प्रथमान्तादस्त्यर्थोपाधिकात् सम्बन्धिन्यधिकरणे च मत्वर्थीया विधीयन्ते। यद्यप्यस्येत्युक्तेः षष्ठ्यर्थसम्बन्ध इव मतुबादिविधानमाभाति; तथापि गोमांश्चैत्र इति सामानाधिकरण्यानुरोधात् सम्बन्धिवाचकतैवेत्युक्तं प्राक्। एवञ्च गोमानित्यादौ गोनिरूपितस्वामित्वसम्बन्धवानित्याद्यन्वयबोधः। नच—

भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायिने।
सम्बन्धेऽस्तिविवक्षायां भवन्ति मतुबादयः।

इति सम्बन्धसमकक्षतया भूमाद्यर्थानामप्युपादानात् तेषामपि मतुबादिशक्यत्वमिति शङ्क्यम्। स्यादेवम्, यदि तेष्वर्थेषु मतुबादीनां विधायकं सूत्रादिकमुपलभ्येत, किन्तु प्रयोगोपाधित्वमेव तेषाम्। अस्त्यर्थवद् गवादिपदानां बहुत्वादिविशिष्टलाक्षणिकतयैव भूमादिप्रतीतिसौलभ्याच्च। अन्ये त्वस्तिशब्दान्मतुबर्थं तद्ग्रहणमित्याहुरित्यन्यत्र विस्तरः।

इत्यादिकमित्यादिपदात्, "तस्यापत्यम्" (पा०सू० ४।१।८२) "तेन रक्तं रागात्" (पा०सू० ४।२।१।) "संस्कृतं भक्षाः" (पा०सू० ४।२।१६) इत्यादिसङ्ग्रहः। तत्र 'गार्गिः' इत्यादौ तद्धितार्थापत्यस्य जन्यपुरुषरूपस्यैकदेशे जन्यत्वे प्रकृत्यर्थगर्गादेर्निरूपकतयाऽन्वयाद्गर्गनिरूपितजन्यताश्रयः पुमानित्यादिबोधः। 'गार्ग्यः' इत्यादौ तु जन्यपुरुषजनकपुरुषाद्यात्मकगोत्रापत्यार्थैकदेशे जन्यत्वे प्रकृत्यर्थान्वयः। 'गार्ग्यायण'

परीक्षा

धात्। अथ स्थलपद्मे पङ्कजव्यवहारवद्वर्षविशेषीयसौरपौषे मुख्यार्थबाधे का क्षतिस्तत्र पौषव्यवहारो लक्षणयास्त्विति चेद्? तर्हि तस्मिन्वर्षे चान्द्रपौषमासनिमित्तकस्य दशम्याङ्कर्तुमर्हस्याह्निकश्राद्धस्य विलोपापत्तिः।

ननु "नक्षत्रेण युक्तः कालः" इति सूत्रेणाण्प्रत्ययस्य प्रवृत्तिस्सर्ववर्षीयपौर्णमास्यां न सम्भवति, यस्मिन्वर्षे पौर्णमास्याम्पुनर्वसुनक्षत्रयुक्तशशिनः सत्त्वन्तस्यां व्यभिचारादिति चेद्? न। अण्प्रत्ययप्रकृतिकरोहिण्यन्यतरस्मिन् लक्षणा, फाल्गुनशब्दे तु फल्गुनीशब्दस्य पूर्वोत्तरफल्गुनीहस्तान्यतमे भाद्रपदशब्दे भद्रपदाशब्दस्य शततारकापूर्वोत्तरभाद्रपदा, आश्विनशब्दे अश्विनीशब्दस्य रेवत्यादित्रितये लक्षणा। तदुक्तम्—

अन्त्योपान्त्यौ त्रिभौ ज्ञेयौ फाल्गुनश्च त्रिभो मतः।
शेषा मासा द्विभाज्ञेयाः कृत्तिकादिव्यवस्थया॥ इति

अन्ये तु—पौषादिपदस्य केवलरूढत्वमेव, नतु यौगिकत्वम्। पुष्यादियोगस्य पौर्णमास्यामनियमात्। रूढिनिरूपकतावच्छेदकञ्च—धनुस्थरव्यारब्धशुक्लप्रतिपदादिदर्शान्तमासत्वम्। धनुरादिस्थरविसमारब्धरविसंक्रान्तिमन्मासभिन्नधनुरादिस्थरव्यधिकरणशुक्लप्रतिपदादिदर्शान्तमासत्वं वा। धनुस्थरव्यारब्धत्वम्—कालिकसम्बन्धेन धनुस्थरव्यधिकरणाद्यक्षणकशुक्लप्रतिपदादिकत्वन्तद्यस्मिन्वर्षे कार्तिकशुक्लप्रतिपत् ४९।५०. तदित एव वृश्चिकसङ्क्रान्तिः १४।३९ एतस्मिन् काले जाता तन्मासीयघटिका २९।३२ धनुस्सङ्क्रान्तिस्तु दर्शसमाप्त्युत्तरम् ४४ एतस्मिन्समये जाता तस्मि-

दर्पणः

इत्यादौ तद्धितार्थयुवापत्यैकदेशे गोत्रप्रत्ययान्तार्थस्य निरूपकतयाऽन्वयः। परन्तु "जीवति तु वंश्ये युवा" (पा०सू० ४।१।१६३) इति परिभाषणाद् गर्गजीवनसमानकालिकत्वमपि प्रधानप्रत्ययार्थे विशेषणम्। तस्याऽपि प्रत्ययशक्यत्वात्। एवञ्च गर्गजीवनसमानकालिको गर्गगोत्राऽपत्यनिरूपितजन्यतावानयं पुमानिति बोधः।

"तेन रक्तम्" (पा०सू० ४।२।१) इति विहितप्रत्ययस्य तत्सम्बन्धाधीनतदीयरूपारोपविषयोऽर्थः। तादृशारोपविषयत्वमेव तेन रक्तत्वम्। "शङ्खः पीत" इत्यारोपमादाय शङ्खादेरारोप्यपीतिमाश्रयहरितालादिना रक्तत्ववारणायाधीनान्तमारोपविशेष-

परीक्षा

न्क्षयमासाख्ये पौषे प्रथमलक्षणस्याव्याप्तिरिति तादृशमलमाससङ्ग्रहनाय द्वितीयम्। तथाहि-मलमासो द्विविधः, संक्रान्तिरहितः संक्रान्तिद्वययुक्तश्च। तदुक्तं काठकगृह्ये-

> यस्मिन्वर्षे न संक्रान्तिस्संक्रान्तिद्वयमेव वा।
> मलमासः स विज्ञेयो मासे त्रिंशत्तमे भवेदिति॥

मलत्वमावश्यकत्वं स्वयं क्रियावाह्यत्वात्। तत्राद्यस्य मलमासस्य लक्षणमन्यत्राप्युक्तम्—

> अमावास्यापरिच्छिन्नरविसङ्क्रान्तिवर्जितम्।
> मलमासं विजानीयाद्वर्जितं सर्वकर्मसु॥

यदुक्तम्—'पूर्वस्मिन् ह्याश्विने मासे त्रिंशत्तम्' इति, तदाद्यमलमासपरम्। द्वितीयमप्याह सत्यव्रतः—

> राशिद्वयं यत्र मासे सङ्क्रमेत दिवाकरः।
> नाधिमासो भवेदेष मलमासस्तु केवलम्॥ इति

अमावास्यापरिच्छिन्नो रविसंक्रान्तिवर्जितो यो मास तस्यैवाधिमासत्वम्। तदाह बादरायणः—

> "एकमासस्थिते सूर्ये यदि स्यादधिमासकः।
> एक एव हि मासोऽसौ षष्टिभिर्दिवसैर्मतः॥ इति

मासः शुक्लादिर्ज्ञेयः। नच "आमावास्याद्वयं रविसङ्क्रान्तिवर्जितम्, मलमासः सविज्ञेय" इति वचने मलमासत्वममावास्याद्वयं यत्र 'रविसङ्क्रान्तिवर्जितं मलमासस्सविज्ञेय' इति वचनेन मलमासत्वममावास्याद्वयघटितस्यैव, नतु षष्टिदिवसपरिच्छिन्नस्येति वाच्यम्, अमावास्याद्वयमित्यस्यामावास्याद्वयपरिच्छिन्नमित्यर्थात् एकषष्टिदिवसात्मकेऽपि मासे अमावास्याद्वयपरिच्छिन्नत्वमासे वाऽमावास्याद्वयस्य तादृशस्य तद्घटकत्वात् सङ्क्रान्तिद्वयशून्यो मासः स सर्पसञ्ज्ञोऽधिमाससंज्ञश्च, संक्रान्तिद्वययुक्तो मासो न्यूनाख्योऽहस्पतिसञ्ज्ञश्च, अधिकमाससंज्ञके श्रावणस्य लक्षणं कर्कस्थे रव्यारब्धत्वघटितं तद्द्वितीयं लक्षणमपि तत्रास्त्येव। कर्कस्थरविसमाप्यो यो रविसङ्क्रान्तिमन्मास आषाढस्तद्भिन्नत्वस्य कर्कस्थरव्यधिकरणत्वस्य च तत्रासत्वात्। नच शुक्लप्रतिपदमारभ्य श्रावणस्य प्रारम्भे दर्शपर्यन्तं त्रिंशद्दिनपरिच्छिन्नमासस्य समाप्तिरिति कर्कस्थरविं समाप्य रविसङ्क्रान्तिमन्मासभिन्नत्वन्तत्र नास्तीत्यव्याप्तिः, तस्मिन् श्रावणे इति वाच्यम्, तादृशस्थले षष्टिदिवसपरिच्छिन्नस्यैव मासत्वमिति कर्कस्थरविसमाप्यत्वस्य तत्रासत्वेन तादृशा-

१४ ) इत्यादिकं संगृह्यते ।

दर्पणः

णम् । माञ्जिष्ठपटादेश्चक्षुरादिना रक्तत्ववारणाय तदीयत्वं रूपविशेषणम् । अत्र च रागकरणस्य मञ्जिष्ठादेः प्रकृत्यर्थस्य तद्धितार्थैकदेशसम्बन्धे प्रतियोगितया रूपे चाश्रेयतयान्वयः । तथाच मञ्जिष्ठासंबन्धाधीनो यो मञ्जिष्ठानिष्ठरूपारोपस्तद्विषयता-

परीक्षा

षाढभेदसत्वात् यत्काठकगृह्यीयम्पूर्वोक्तन्तदेतादृशाधिकपरमेव । नच यदि चैत्रादिशब्दो यौगिकस्तर्हि मीनादिरविविशिष्टकालरूपेषु चैत्रादिसौरेषु रूढिरेव चैत्रादिपदस्यास्ता-मिति वाच्यम् । 'सा वैशाखस्यामावास्याया रोहिण्या सम्बध्यते' इति श्रुतिबलाचान्द्र एव शक्तिसिद्धेः । तथाहि—यदि सौर एव शक्तिस्तदा वैशाखपदस्य मेषस्थरविविशिष्ट-काल एव शक्तिरिति तदमावास्यायां रोहिण्याञ्चन्द्रस्यावस्थानाभावाच्छ्रुतिविरोधः स्पष्ट एव । "यः सूर्यचन्द्रमसोः परः सन्निकर्षः साऽमावास्या" इति गोभिलवचनादमा-वास्यान्ते चन्द्रस्य सूर्यस्य तदवस्थाने नियमात् । यदि तु चान्द्रे शक्तिस्तदाऽस्ति संभ-वः । शुक्लप्रतिपदादेर्वैशाखस्यान्ते चन्द्रावस्थानस्य प्रायो रोहिण्याःसम्भवात् । श्रुति-स्थं रोहिणीपदं कृत्तिकारोहिण्यन्यतमपरम् । तदुक्तं ज्योतिःसिद्धान्ते—

मेषादिस्थे सवितरि यो मासः प्रपूर्य्यते चन्द्रः ।
चैत्राद्यस्सविज्ञेयः पूर्तिर्द्वित्वेऽधिमासोऽन्यः । इति ।

अत्राद्यशब्दो वैशाखादिसङ्ग्राहक इत्याहुः ।

अपरे तु—पौषीपदे पुष्ययोगप्रयोगत्वं विवक्षितम् । एवञ्च पुनर्वसुनक्षत्रसत्वेऽपि न क्षतिरित्याहुः । "तदस्यास्त्यस्मिन्निति मतुप्" अनेन सूत्रेण पौषस्येति षष्ठ्यर्थे प्रत्ययो विधीयते इति प्रतिभाति, तथापि धनवान् इति सामानाधिकरण्यानुभवा-त्सम्बन्धी वाच्य इति कल्प्यते । एवञ्च—गोमानित्यादौ मतुबर्थः सम्बन्धी तदेकदेश-सम्बन्धे प्रकृत्यर्थस्य निरूपितत्वसम्बन्धेनान्वयः । नच "प्रकृतिप्रत्ययौ" इतिनियमे प्रत्ययार्थशब्देन प्रत्ययाजन्यत्वप्रतीतिमुख्यविशेष्यस्य ग्रहणात् तत्रैवान्वय उचितो; नतु विशेषणे इति वाच्यम् । औपगवादौ यस्तद्धितस्तदर्थापत्यैकदेशजन्यतायामप्रकृ-त्यर्थान्वयदर्शनेनोक्तलौकिकनियमे प्रत्ययजन्यप्रतीतिविषयमात्रस्याग्रहणात् । सम्बन्धे आश्रये च खण्डशः शक्तेः सम्भवाच्च । नच भूमिनिन्दादिकमपि मत्वर्थीयप्रत्ययान्त-जन्यशाब्दबोधे भासते, तस्य कथमुपपत्तिः, सूत्राद्यनुपादानादिति वाच्यम् । प्रकरणा-दिवशात्तत्स्यार्थस्य शाब्दबोधे भानानुभवो न । यत्र तेषामर्थानाम्प्रतीतिस्तत्र प्रकृतेस्त-त्तदर्थविशिष्टे लक्षणास्वीकारात् ।

*इत्यादिकमिति* । आदिपदेन "तस्यापत्यम्" "तेन रक्तं रागात्" "संस्कृतं भक्षाः" "तेन क्रीतम्" "तदस्मिन्नस्तीतिदेशे तन्नाम्नि" इति सूत्रचतुष्टयस्य "दृष्टं साम" इत्यादेश्च परिग्रहः । तत्रापत्यार्थविहिततद्धितार्थैकदेशजन्यतायामप्रकृत्यर्थस्यै-कान्वयो भवत्येव । जन्यत्वस्य नित्यनिरूपकाकाङ्क्षत्वात् । यत्र गोत्रापत्ये प्रत्ययस्तत्र जन्यजन्ये पुंसि प्रत्ययस्य शक्तिः प्रथमजन्यतायाम्प्रकृत्यर्थस्योक्तसम्बन्धेनान्वयः । गार्ग्यायणो दाक्षायण इत्यादौ तु युनिप्रत्ययो भवति, तत्र प्रत्ययार्थो युवत्वम् । अपत्यञ्च प्रकृत्यर्थगर्गगोत्रापत्यं दक्षगोत्रापत्यम्, तत्र निरूपितत्वसम्बन्धेन प्रकृत्यर्थस्यान्वयः ।

**वृत्तिमात्रेऽतिरिक्तशक्तेः, "समर्थः पदविधिः" (पा० सू० २।१।१) इति सूत्राल्लाभादुक्तो विचारः शास्त्रान्तरीयैः सह तद्रीत्यैवोक्तः।**

---

दर्पणः

श्रय इति 'माञ्जिष्ठ' इत्यतो बोधः। 'शूल्यम्', 'उख्यम्' इत्यादौ, "संस्कृतं भक्षाः" (पा०सू० ४।२।१९) इति सूत्रविहिततद्धितार्थैकदेशे पाकादिसंस्कारे शूलोखादेः प्रकृत्यर्थस्याऽधिकरणत्वेनाऽन्वयः॥ अनयैव रीत्या तद्धितान्तराद्बोध ऊहनीयः।

तद्धितानां क्वचित्प्रकृत्यऽर्थे स्वार्थैकदेशस्य, क्वचित् स्वार्थस्यैवान्वयबोधकत्वादिति जहत्स्वाऽर्थवृत्तिपक्षमवलम्ब्य मूलमवतारयति-*वृत्तिमात्र इति*॥ तथाच तत्पक्षे पदानामानर्थक्यात् तदर्थनिरूपणे सिद्धान्तप्रच्युतिरिति भावः॥ *तद्रीत्यैवेति*। शास्त्रान्तरीयरीत्यैवेत्यर्थः। ननु वैयाकरणमते जहत्स्वार्थवृत्त्याश्रयणे, "न पूजनात्" (पा०सू० ५।४।६९) "तेन रक्तं रागात्" (पा०सू० ४।२।१) इत्यादिसूत्राणां का

परीक्षा

तत्रायं विशेषः—"जीवति तु वंश्ये युवा" इत्यादिसूत्रे सा यस्मिन्नर्थे जीवति सति युवसंज्ञा अपत्यस्य भवति। तज्जीवनसमानकालिकत्वमपि प्रत्ययशक्यन्तस्य प्रधानीभूतेऽपत्ये विशेषतो भवति। एवञ्च-गार्ग्यायणादिशब्देभ्यो गर्गजीवनसमानकालिको गर्गजन्यनिरूपितजन्यताविशिष्टःपुमानिति बोधः। "तेन रक्तम्"इति सूत्रेण माञ्जिष्ठं वस्त्रमित्यत्र प्रत्ययः। अत्र यद्यपि तेनेति करणे तृतीया, तदर्थस्य रञ्जधात्वर्थेऽन्वयेन तत्र तज्जन्यस्य प्रतीतिर्न्याय्या, सा नोपपद्यते। पूर्वस्थितपटसमवेतरूपध्वंसं विना रूपवति रूपान्तरानुत्पत्तेः। अत एव "तेन रक्तम्"इत्यस्य तत्सम्बन्धाधीनतदीयरूपारोपविषयोऽर्थः। प्रकृत्यर्थस्य मञ्जिष्ठस्य सम्बन्धेऽन्वयः प्रतियोगितायाः। तेनेति तु तृतीयान्तात्प्रत्ययोत्पत्तिम्बोधयितुमुपात्तमिति मञ्जिष्ठसम्बन्धाधीनतदीयरूपारोपविषयो वस्त्रमिति बोधः। पित्तपीतिम्ना यत्र 'पीतः शङ्खः' इति भ्रमः,तत्र तस्य भ्रमस्य न पीतरक्तमित्यत्र प्रत्यय इति तत्सम्बन्धाधीनत्वं विशेषणम्।'दाधिकम्' 'शूलपम्''उख्यम्' इत्यादौ 'संस्कृतं भक्ष्याः" इत्यादिना प्रत्ययः। आद्ये-'दाधिक ओदनः' इत्यत्र प्रत्ययार्थः संस्कारविशिष्टः। संस्कारश्च सम्बन्धाधीनमार्दवविशेषः, विशेषप्रकारप्रतीतिविषयो वा। एवञ्च-संस्कारैकदेशसम्बन्धे दध्नोऽन्वयेन दधिसम्बन्धाधीनमार्दवविशेषविशिष्ट ओदन इति बोधः। 'शूल्यम्', 'उख्यम्'इत्यादौ तु संस्कारः पाकादिरूपः। तत्र प्रकृत्यर्थस्याधिकरणत्वसम्बन्धेनान्वयः। एवञ्च शूलाधिकरणकपाकाश्रयो मांसमिति बोधः। "तेन क्रीतम्" इतिसूत्रेण 'सौवर्णं वस्त्रम्'इत्यादौ प्रत्ययः। क्रीतशब्दार्थश्च-क्रयणक्रियाकर्म। क्रयणम्-स्वस्वत्वोत्पत्त्यनुकूलद्रव्यदानक्रियानुकूलव्यापारः। तत्र प्रत्ययार्थव्यापारे सुवर्णस्य करणतयाऽन्वयेन सुवर्णकरणकक्रयणकर्मणो बोधः। एवमन्यत्रापि यथायथमूहनीयम्।

स्वसिद्धान्तमाह—*वृत्तिमात्र इति*। जहत्स्वार्थावृत्तिरिति मतेन। *अतिरिक्तशक्तेरिति* समुदायस्येत्यादिः। *तद्रीत्या*-शास्त्रयान्तररीत्या—

ननु यदि वैयाकरणैर्जहत्स्वार्था वृत्तिराश्रीयते, तदा तेषाम् "तेन रक्तं रागात्" इत्यादिसूत्राणां कथमुपपत्तिर्वृत्तिघटकमञ्जिष्ठादे रागवाचकत्वाभावादेवं समासघटकप-

आरोपितप्रकृतिप्रत्ययार्थमादाय वा। वस्तुतो विशिष्टशक्त्यैवार्थोपस्थितिरित्याह—*वस्तुत इति* ॥ ५५ ॥

इति वैयाकरणभूषणसारे देवतादिप्रत्ययार्थनिर्णयः ॥ १० ॥

---

दर्पणः

गतिरत आह-*आरोपितेति* ॥ *विशिष्टशक्त्यैवेति*। विशिष्टार्थस्येति शेषः॥ वृत्तौ पक्षद्वयाभ्युपगमेन जहत्स्वार्थपक्षे तद्घटकपदाऽर्थनिरूपणस्यानुपयोगेऽप्यजहत्स्वार्थपक्षे विशिष्टशक्तिग्रहस्य प्रत्येकशक्तिनिरूपणोपजीवकतया तन्निरूपणस्यौचित्यमेव। एतत्सूचनायैव मूलेऽतीवेत्युपात्तमिति रहस्यम् ॥ ९९ ॥

इति भूषणसारदर्प्पणे देवतादिप्रत्ययार्थनिरूपणम् ॥ १० ॥

परीक्षा

दानां समानाधिकरणत्वपूजनार्थत्वव्यवहारस्यापि का गतिरत आह-*आरोपितेति*। 'प्रकृतिप्रत्ययादिकम्'इत्युपलक्षणम्। सामानाधिकरण्यादिकमप्येवं विशिष्टशक्त्या।

ननु यदि जहत्स्वार्था वृत्तिरेवास्ति तदा मूले-'नात्रातीवेति' कथनमनुचितन्तत्रेत्येव तर्हि कुतो नोक्तम्। किञ्च विशिष्टे शक्तिश्च विशिष्टार्थनिरूपिता चेत्सर्वत्र सम्मता; तदा "जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनी" इति सिद्धान्तस्यापि नोपपत्तिरिति चेद्? न। अवयवशक्तिग्रहसहकारेणैव समुदायशक्त्या बोधस्य दर्शनेन अवयवानामप्यर्थनिरूपयितुमुचितमेवेत्याशयात् ॥ ९९ ॥

इति श्रीमद्भूषणसारटीकायां परीक्षानामिकायां
देवतादिप्रत्ययार्थविवरणम् ॥ १० ॥

## अथाऽभेदैकत्वसंख्यानिर्णयः ॥

वृत्तिप्रसङ्गात् तत्राभेदैकत्वसङ्ख्या प्रतीयत इति सिद्धान्तं दृष्टान्तेनोपपादयति--

**अभेदैकत्वसङ्ख्याया वृत्तौ भानमिति स्थितिः ॥**
**कपिञ्जलालम्भवाक्ये त्रित्वं न्यायाद् यथोच्यते ५६**

सङ्ख्याविशेषाणामविभागेन सत्त्वम्—अभेदैकत्वसङ्ख्या । उक्तञ्च वाक्यपदीये--

यथौषधिरसाः सर्वे मधुन्याहितशक्तयः ।
अविभागेन वर्त्तन्ते; सङ्ख्यां तां तादृशीं विदुः ॥ इति ॥

---

दर्पणः

अथाभेदैकत्वसंख्यानिर्णयः ।

ननु प्रकान्ते प्रातिपदिकषट्कप्रत्ययार्थनिरूपणेऽभेदैकत्वसङ्ख्यानिरूपणमसङ्गतमत आह—*वृत्तिप्रसङ्गादिति* । तथाच वृत्तिनिरूपणे क्रियमाणे स्मृतिपथप्राप्ततद्धर्मोपेक्षाऽनुचितेति प्रसङ्गसङ्गतिसत्त्वान्नोक्तदोष इति भावः । यद्यपि वक्ष्यमाणक्त्वाद्यन्तेऽपि कृद्वृत्तिसत्वात्तदनन्तरमेव सङ्ख्यानिरूपयितुमुचिता, तथापि तत्प्रकृत्यर्थे सङ्ख्याया अभानादाकाङ्क्षाविच्छेदः स्यादित्यत्रैव तन्निरूपितमिति बोध्यम् । अभेदैकत्वसङ्ख्यापदार्थं मतभेदेन द्विधा निर्वक्ति—*सङ्ख्याविशेषाणामिति* । एकत्वत्वाद्यवच्छिन्नानामित्यर्थः । *अविभागेन*—अभेदेन, अविरोधेनेति यावत् । उक्तार्थे हरिवाक्यं प्रमाणयति—*उक्तञ्चेति* । *आहितशक्तयः* । आहिता समर्पिता तत्तद्दोषविभेदनिबन्धनविरोधरूपा शक्तिर्यैरित्यर्थः । त्यक्तविरोधा इति यावत् । अत एव—*अविभागेन* । अविरोधेनेत्यर्थः । *ताम्* । अभेदैकत्वसङ्ख्याम् । *तादृशीम्* । मधुनिष्ठरस-

परीक्षा

अथाभेदैकत्वसंख्यानिर्णयः ।

ननु प्रातिपदिकस्य निरूपणम्प्रस्तुतमतस्तद्घटकस्यैव निरूपणमुचितन्नत्वभेदैकत्वसङ्ख्याया इत्यत आह—*वृत्तिप्रसङ्गादिति* । अर्थविशिष्टवृत्तिनिरूपणमपि प्रस्तुतमिति वृत्तिधर्मा अपि निरूपयितुमुचिता एवेत्याशयः । अभेदैकत्वसङ्ख्यापदार्थम्मतभेदेन दर्शयति—*सङ्ख्याविशेषमित्यादिना* ।*संख्याविशेषाणाम्*—सङ्ख्यात्वव्याप्यैकत्वत्वाद्यवच्छिन्नानामित्यर्थः ।*अविभागेनेति* । अविरोधेन विरोधपरित्यागेनेतियावत् । तत्र हरिसम्मतिमाह—*उक्तञ्चेति* । *आहितेति* । आहितपदस्य स्थापितार्थकत्वमन्यत्र प्रसिद्धं यद्यपि, तथापि प्रकृतोपयुक्तमर्थं स एवाह—*अविभागेनेति* । एवञ्च दृष्टान्ते आहितपदस्य स्थापितार्थकत्वेऽपि दार्ष्टान्तिके आहितशक्तय इत्यस्याहिता त्यक्तविरोधा शक्तिर्यैरित्यर्थो बोध्यः । तत्तद्दोषाधिवृत्तित्वप्रयुक्तो योऽविरोधस्तस्य दृष्टान्तेऽपि त्यागो बोध्यः । हरिवाक्ये विभागेत्यस्य विरोधेनेत्यर्थः । *ताम्*= अभेदैकत्वसङ्ख्याम् । *तादृशीम्*=मधुनिष्ठरसस्थितितुल्यस्थितिकर्त्रीम् । एवञ्चैत-

परित्यक्तविशेषं वा सङ्ख्यासामान्यं तत् । उक्तञ्च—

भेदानां वा परित्यागात् सङ्ख्यात्मा स तथाविधः ।
व्यापाराज्जातिभागस्य भेदापोहेन वर्त्तते ॥

दर्पणः

स्थितितुल्यामित्यर्थः ।

नन्वेकत्वद्वित्वादीनामेकत्र सत्त्वमनुपपन्नम् । न हि द्वावेकत्वेन व्यवह्रियेते, नाऽप्येको द्वाविति । "न हि द्विपुत्र" इति भाष्यात् ॥ किञ्च दृष्टान्तोऽपि न समञ्जसः । तत्तद्रसवदारब्धेऽवयविनि माक्षिकेऽवयवसजातीयरसान्तरस्यैवोत्पादाभ्युपगमादत आह—*परित्यक्तेति* । वाशब्दः पक्षान्तरे । अगृहीतविशेषधर्मकं संख्यामात्रमित्यर्थः । पूर्वकल्पे उक्ताऽस्वरसाभिसन्धिकं वाक्यपदीयं तत्पक्षेऽपि प्रमाणत्वेनोपन्यस्यति-*भेदानामिति* । *भेदानाम्*-एकत्वत्वद्वित्वत्वादिविशेषधर्माणाम् । *परित्यागात्* । अग्रहात् । इदञ्च व्यापारपदार्थेऽभेदेनाऽन्वयि ॥ *संख्यात्मा*—संख्यास्वरूपः ॥ *सः*—एकत्वादिः ॥ *तथाविधः* । अभेदैकत्वव्यपदेश्य इत्यर्थः । तदेव विशदयति—*जातिभागस्येति* । एकत्वत्वादेरित्यर्थः ।

*भेदापोहेनेति* । भेदस्य विशेषणस्य योऽपोहोऽग्रहस्तेनेत्यर्थः ॥ यद्वा भेदापोहेनेत्यस्य व्यापारादित्यनेनाऽन्वयः । प्रकृत्यादित्वात् तृतीया । तथाचैकत्वत्वादेर्जातिविशेषस्य भेदाग्रहरूपो यो व्यापारो विशेषणाऽत्मा ततो वर्त्तत इत्यर्थः ॥ "भेदाऽ-

परीक्षा

न्मते एकत्वद्वित्वादेः सत्वेऽपि भेदकार्यं धर्मा एकत्वत्वादयस्तत्परित्यागेन सर्वासां स्थितिकर्तृत्वमात्रम् । सङ्ख्याया जात्यखण्डोपाध्यतिरिक्ततया स्वरूपतो भानासम्भवात् । एवं च राज्ञः राज्ञो राज्ञां वा पुरुष इत्येवं लौकिकविग्रहेऽपि राजसम्बन्धी पुरुष इत्येव शाब्दबोधः ।

नन्विदमनुपपन्नम् , द्वित्वबहुत्वादीनां विरोधादेव स्थानासम्भवात् । अत एव "नहि त्रिपुत्रो द्विपुत्रव्यपदेशं लभते" इति भाष्यकृतोक्तम् । एवं मधुदृष्टान्तोपादानमप्यसङ्गतम् , तत्र नानाजातीयरसवदवयवारब्धे मधुनि इप्सान्तरोत्पत्तेरभ्युपगमात् । नीलादिनानाजातीयरूपवदवयवारब्धेऽवयविनि पटे चित्ररूपमत आह—*परित्यक्तेति* । अत एवोक्तं हरिणा—

अभेदैकत्वसंख्याया तत्रान्यवोपजायते ।
संसर्गरूपं सङ्ख्यानामविभक्तन्तदुच्यते ।

वृत्तावुपसर्जनपदानां सत्वभूतत्वात् सङ्ख्यायोगस्यावश्यकत्वेनान्यासंसर्गरूपा सङ्ख्या जायत इति तदर्थः । एतन्मते—एकत्वत्वाद्यग्रहकालिकसंख्यात्वप्रकारकप्रतीतिविषयः संख्यापदार्थोऽभेदैकत्वसंख्याव्यपदेशो भवतीति फलितम् । एतदपि मतं हरिसूचितमित्याह-*उक्तञ्चेति*। *भेदानाम्*-संख्याभेदकानाम् , एकत्वत्वादिरूपविशेषधर्माणाम् । एतेषां परित्यागश्च-ज्ञातधर्मवत्त्वेन ज्ञानविषयीभवनाभाव एव । सः*-एकत्वादिः। *तथाविधः*-अभेदैकत्वसङ्ख्याव्यपदेश्यः । जातिभागस्य जात्यात्मकधर्मस्यैकत्वादेर्व्यापाराद्वर्तत इत्यन्वयः । तं व्यापारमेवाह-*भेदापोहनेति*। भेदस्य वि-

अगृहीतविशेषेण यथा रूपेण रूपवान्।
प्रख्यायते न शुक्लादिर्भेदापोहस्तु गम्यते। इति॥

अस्याः वृत्तौ=समासादौ; भानं न्यायसिद्धमिति शेषः। इति मतस्थितिर्वैयाकरणानाम्।

अयम्भावः—राजपुरुष इत्यादौ, राज्ञो, राज्ञोः, राज्ञां वाऽयं पुरुष इति जिज्ञासा जायते। विशेषजिज्ञासा च सामान्यज्ञानपूर्विकेति सामान्यरूपेण तत्प्रतीतिः शब्दादावावश्यकी। अतस्तस्यां

---

दर्पणः

पोहो न वर्त्तते" निवर्त्तते इति वा पाठे तु भेदरूपो योऽपोहोऽतद्व्यावृत्तत्वम्, स न वर्त्तते; न भासत इत्यर्थोऽवसेयः। पद्यान्तरावलोकनेनैतत्पाठस्यैव हरिसम्मतत्वमध्यवसीयते। द्वित्वत्वाद्यग्रहकालिकसङ्ख्यात्वप्रकारकप्रतीतिगोचरः सङ्ख्यापदार्थोऽभेदैकत्वपदव्यपदेश्यो भवतीतिसमुदिताऽर्थः। तत्र दृष्टान्तमाह—*अगृहीतविशेषेणेति*॥ शुक्लत्वादिप्रकारकग्रहासमानकालिकरूपत्वप्रकारकप्रतीतिविषयेण शुक्लादिनैव यथा घटादी रूपवानिति प्रतीयते। शुक्लादेर्यो भेदरूपापोहः—शुक्लत्वादिरतद्व्यावृत्तिरूपः; स तु न प्रतीयते। तद्वद्राजपुरुष इत्यादौ राजादिपदार्थः सङ्ख्यावानिति प्रतीयते, न तत्र सङ्ख्यांऽशे एकत्वादि भासते इत्यर्थः।

तादृशसङ्ख्याभानस्य परानभ्युपेतत्वात् कथमियं स्थितिरित्यन्तराशेषपूरणेन व्याचष्टे-*वैयाकरणानामिति*। ननु तादृशसङ्ख्याया वृत्तौ भाने किं प्रमाणमत आह-*अयम्भाव इति*। *समान्यज्ञानपूर्वकेति*। तद्धेतुकेत्यर्थः। *आवश्यकीति*। तां

परीक्षा

शेषस्य योऽपोहः अग्रहस्तेनेत्यर्थः। *व्यापारादिति*। पञ्चम्यन्तस्यांभेदेन तृतीयान्तेऽन्वयः। यद्वा भेदापोहपदार्थस्योक्तस्यैवाभेदेन सम्बन्धेन जातिभागस्य व्यापारराहित्ये तद्विशेषणत्वम्, तृतीया तु प्रकृत्यादित्वात्, धान्येन धनवानितिवत्। एवञ्चैकत्वत्वादिजातिविशेषस्य भेदाग्रहरूपो यो व्यापारो विशषणात्मा तेन वर्तते। एकत्वत्वाद्यग्रहसमानकालिकसङ्ख्यात्वप्रकारज्ञानविषयः संख्यापदार्थोऽभेदैकत्वसङ्ख्यापदेनोच्यते इति फलितम्। एतन्मते–राजपुरुषादिपदात्सङ्ख्यावद्राजसम्बन्धीत्याद्याकारको बोधः। तत्र दृष्टान्तमाह-*अगृहीतेति*। न गृहीतो विशेषे विशेषधर्मो यस्मिन्नेतादृशेन रूपेण रूपत्वेन गृहितेन रूपेण रूपवान् प्रख्यायते, भेदरूपो यो अपोहो, विशेषः–विशेषधर्मः स तु न गम्यते इत्यर्थः। यथा–दूरस्थितो घटादिपदार्थः शुक्लत्वादिप्रकारकग्रहासमानकालिकरूपत्वप्रकारकग्रहविशेष्येण शुक्लादिनैव रूपेणायं रूपवानिति प्रतीयते, रूपगतो ऽपोहो विशेषधर्मो न प्रतीयते, अपोहः—आतद्व्यावृत्तिः। विशेषधर्मात्मिकैवातद्व्यावृत्तिः, तथा राजपुरुषादिसमुदायादपि सङ्ख्यावद्राजसम्बन्धी पुरुष इत्याकारा प्रतीतिर्भवतीति भावः।

नन्वेवं बोधस्य परानभिमतत्वात्कथमियं स्थितिरत आह शेषपूरणेन-*वैयाकरणानामिति*। अभेदैकत्वसंख्याया व्यावृत्तौ भाने साधकमाह-*अयमित्यादिना*। *पूर्विकेति*। विशेषस्य जिज्ञासा समभिव्याहृतपदार्थतावच्छेदकावान्तरधर्मावच्छिन्नप्रका-

शक्तिरिति । तस्या एकत्वेन प्रतीतौ न्यायमाह-*कपिञ्जलेति* ॥

दर्पणः

विनोक्तजिज्ञासाया अभावादिति भावः। सा च संख्या पूर्वोत्तरपदार्थयोः सम्बन्धवद् वृत्तिशक्त्यैव। अजहत्स्वार्थावृत्तिपक्षे पूर्वपदस्य संख्याविशेषवाचकत्वे गमकाभावात्। तेन 'द्विपुत्रः' 'मौद्गिको' 'मासजातः' 'तावकीनः' 'भवद्गिरामवसरः' इत्यादौ वृत्तावभेदैकत्वसंख्याया अभावेऽपि न क्षतिः।

आद्ये सङ्ख्याविशेषस्यैव पूर्वपदार्थत्वात्। द्वितीये, एकमुद्गस्य क्रयकरणायोग्यत्वात् बहुत्वाऽवगतिः। तृतीये विशिष्टकालावगमाय मासपदयोगात् संख्याध्यवसायः। चतुर्थे तवकाद्यादेशवदेकत्वावगतिः। पञ्चमे प्रकरणाद् द्वित्वावगतिः। एवं कारकमध्य इत्यादावप्यूह्यम्। एकस्य मध्यासम्भवात्। सति प्रकरणे राजपुरुष इत्यादावपि संख्याविशेषप्रकारेणैव भानम्। तदा तत्रापि न तस्य वृत्त्यर्थत्वमिति। भेदो भेदसहिता द्वित्वादिसंख्या, तदभावसहितमेकत्वमभेदैकत्वमिति व्युत्पत्त्या संख्यात्वेनैकत्वमेवोपसर्जनपदार्थे भासते। *तथा*। अत एव "एकवचनमुत्सर्गतः करिष्यते" इति वचनाद्राजन् अस्-पुरुष-सु-इत्यलौकिकविग्रहे एकवचनं प्रयुज्यते। यत्र तु प्रकरणादिना संख्याविशेषभानं तत्र बहुवचनमपि यथा चित्रगुरित्यादौ-'चित्रा-अस्-गो—अस्' इत्यभिप्रेत्योत्तरग्रन्थमवतारयति—*तस्या इति*। वृत्तिघटकपदार्थोपसर्जनव्यक्तेरित्यर्थः॥

परीक्षा

एकज्ञानविषयकेच्छा सामान्यज्ञानपूर्विकैव यदा 'अयं ब्राह्मणः' इति ज्ञानन्नास्ति तदा को ब्राह्मण इति,जिज्ञासा न भवति। तादृशे ज्ञानसत्वे तु भवतीति सामान्यधर्मप्रकारकज्ञानस्य विशेषधर्मप्रकारकजिज्ञासाम्प्रतिकारणत्वमन्वयव्यतिरेकाभ्यां कल्प्यते। एवञ्च प्रकृतेऽपि संख्याजिज्ञासाया अनुरोधेन सङ्ख्यात्वेनादौ प्रतीतिर्भवतीति स्वीकरणीयमिति भावः। *शक्तिरिति*। समासादेरिति शेषः। समासादेः समुदायस्य शक्तिः कल्प्यमाना संख्यात्वेन-संख्याविशिष्टे कल्प्यते इति यावत्। इयं संख्या न विभक्त्यर्थः। विभक्तेः सर्वत्रासत्वात्, किन्तु यथा सम्बन्धः पूर्वोत्तरपदार्थयोः समुदायशक्यस्तथा संख्यापि।

अयमभिसंधिः-यत्र यत्किञ्चिद्रूपे विशेषरूपेण संख्याप्रतीतिरप्यस्ति, तत्र विशेषरूपेण सङ्ख्याया वाच्यत्वमङ्गीक्रियते। यथा-तावकीनो मामकीन इत्यत्रादेशेन "तवकममकावेकवचने" इति सूत्रेणैकार्थस्यादेशविधानेनादेशेनैवैकत्वनिश्चयस्य सम्भवात्तत्र वृत्तेः संख्याविशेषे शक्तिर्न कल्प्यते। एवञ्च द्विपुत्रो आश्विको मासजात इत्यादेरपि न संख्याविशेषवाचकता। प्रथमे सा पूर्वपदवाच्यैव। द्वितीये बहूनामेव क्रयादिसाधनत्वादार्थिकी बहुत्वावगतिः। यत्र तु तादृशं गमकं नास्ति, संख्याप्रतीतिस्तु भवति, तत्र वृत्तेः शक्तिः अलौकिके विग्रहे 'राजन् ङस् पुरुष सु' इत्याकारके औत्सर्गिकैकवचनस्य सत्वमाश्रित्य समाससञ्ज्ञा भवति। ततो राजपुरुषादिशब्दात्सङ्ख्यात्वेन भानस्यानुभवसिद्धत्वे तस्मिन्नार्थे समुदायस्य शक्तिरनुमेया। अभेदे एकत्वमित्यस्याभेदसहितमेकत्वमित्यर्थः। द्वित्वादिकम्भेदाभेदसहितमेकत्वन्त्वभेदसहितमेव। तच्च सङ्ख्यात्वेनोपसर्जनं भासते। एवञ्च—यत्र सङ्ख्याविशेषस्य भाने प्रकरणादिकं साधकमस्ति, तत्र संख्याविशेषस्य वृत्तिवाच्यत्वमाश्रीयत इति सिद्धम्। अत एव—

बहुत्वगणनायां त्रित्वस्यैव प्रथमोपस्थितत्वात् तद्रूपेणैव भानवद् एकत्वस्य सर्व्वतः प्रथमोपस्थितत्वमस्तीति भावः।

---

दर्पणः

*प्रतीताविति* ॥ सङ्ख्यात्वावच्छिन्नैकत्वप्रकारतानिरूपितविशेष्यत्वेन बोध इत्यर्थः। उपसर्जनपदार्थे सङ्ख्यात्वेनैकत्वमेव प्रतीयते, न द्वित्वादीत्यत्र दृष्टान्तमाहेति यावत्॥ *गणनायामिति* ॥ बहुत्वविशिष्टानेकसंख्यासङ्ख्याने इत्यर्थः। "कपिञ्जलानालभेत" इति वाक्येन बहुत्वव्याप्यसंख्याविशिष्टकपिञ्जलालम्भनं विधीयते। तत्र त्रयाणां चतुरादीनां वालम्भनमिति संशये बहुत्वव्याप्यत्वस्य त्रित्वादिषु सर्वेष्वविशिष्टत्वाद्यथाप्राप्तमेवालब्धव्यमिति पूर्वपक्षे चतुरादीनामालम्भनं, "मा हिंस्यात्" इति सामान्यशास्त्रविहितनिषेधस्यालभ्यतावद्व्यक्तीतरपरत्वरूपतात्पर्यसङ्कोचकल्पने गौरवाद् गणनायां प्रथमोपस्थितत्रित्वपरतयाऽपि वचनस्य चारितार्थ्याल्लाघवाच्च बहुत्वेन त्रित्वमेव बहुवचनाऽर्थ इति सिद्धान्तितम्। तन्न्यायादत्रापि संख्यात्वेनैकत्वस्यैव वृत्त्यर्थत्वम्, न तु द्वित्वादीनामप्रतीयमानविशेषधर्मकैकत्वमभेदैकत्वमिति व्युत्पत्तेरिति भावः। "निजां त्रयाणाम्" (पा० सू० ७।४।७५) इत्यादिनिर्देशैरस्मिन् व्याकरणे व्यासिन्यायस्यैवाश्रयणेन प्रकृते संख्यात्वेनैकत्वप्रतीतिर्हि दुरुपपादेत्यपि केचित्।

ननु जिज्ञासायां शाब्दमेव सामान्यधर्मप्रकारकज्ञानदर्शनमपेक्षितमिति न नियमः। आम्रादिफलदर्शनेनाऽपि तद्रसास्वादनेच्छाया उत्पत्त्या व्यभिचारात्। नचैवं सामान्यधर्मप्रकारकज्ञानस्यैव हेतुत्वं विलीयेतेति वाच्यम्। आम्रदर्शनस्योद्बोधकतया तद्रसस्मरणेन तदुपपत्तेः। प्रकृते तस्या अशक्यत्वेऽपि तदव्यभिचरितद्रव्यत्वेनाऽनुमानिकतद्बोधसम्भवात् तादृशजिज्ञासाया अननुभवाच्च नोक्तयुक्तिर्वृत्तेरभेदैकत्वसंख्यार्थत्वसाधिकेत्यभिप्रेत्याह—*वस्तुत इति* ॥ *अनुभवसिद्धेति*। अस्य, येन तदनुरोधेन सामान्यधर्मप्रकारकज्ञानस्यावश्यकता स्यादिति शेषः। अभेदैकत्वसंख्याया वृत्तौ भानमिति मूलं तु प्राचीनग्रन्थानुवाद एवेति भावः।

अनुभवसिद्धत्वस्य शपथनिर्णेयत्वं मत्वाह—*तथात्वे चेति* ॥ वा शब्दोऽना-

परीक्षा

चित्रगुरित्यस्यार्थबोधनाय चित्रा गावो यस्येति लौकिकविग्रहमङ्गीकुर्वन्ति। *तस्या इति*। वृत्तिघटकपदार्थोपसर्जनव्यक्तेरित्यर्थः। प्रतीतौ संख्यात्वनिष्ठप्रकारतानिरूपितविशेष्यतावत्संख्यावत्त्वेन शाब्दबोधः। अत्रैकत्वत्वेन न भानम्, किन्तु सामान्यरूपेण। अन्यथा राजपुरुषादिसमुदायजन्यशाब्दबोधानन्तरं विशेषजिज्ञासा न स्यात्। सामान्यरूपेण भासमानसंख्याया त्रित्वेन व्यवहारस्तु कपिञ्जलालम्भन्यायेन प्राथम्यादिति भावः। एतदेवोपपादयति—*गणनायामिति*। यथा 'कपिञ्जलानालभेत" इति वाक्ये बहुवचनोपादाने बहुत्वव्याप्यधर्मविशिष्टानान्त्रित्वादीनामुपस्थितावपि प्रथमतो गणनायान्त्रित्वस्यैवोपस्थितिरिति तद्विशिष्टस्यैवालम्भनमेतद्वाक्यबोध्यमिति कल्प्यते। चतुरादीनां "मा हिंस्यात्" इति निषेधशास्त्रस्याधिकविषयातिरिक्तविषयकत्वकल्पनायामाङ्गौरवमिति त्रितयविषयकतयव सङ्कोचोऽतो वचनं सार्थकमिति सिद्धान्तितम्। तथात्र सङ्ख्यात्वेन प्रथमतो गणनायां प्रसिद्धं यदेकत्वं तस्य भानमाश्रयणीयमिति भावः। यदि विशेषतो जिज्ञासाऽनुभवसिद्धा स्यात्तदा भवदुक्तरीत्या सामा-

**वस्तुतस्तु जिज्ञासैव नानुभवसिद्धा। तथात्वे वा ज्ञानेच्छयोः समानप्रकारकत्वेनैव हेतुहेतुमद्भावात्तत्तद्रूपेणैव वाच्यता स्यादिति ध्येयम् ॥ ५६ ॥**

**इति वैयाकरणभूषणसारे अभेदैकत्वसङ्ख्यानिरूपणम् ॥ ११ ॥**

---

## दर्पणः

स्थायाम्। अनुभवसिद्धत्वे चेत्यर्थः ॥ *समानप्रकारकत्वेनैवेति* ॥ एवकारेण विभिन्नप्रकारकत्वव्यवच्छेदः। तद्धर्मप्रकारकेच्छां प्रति तद्धर्म्मप्रकारकत्वज्ञानस्य हेतुतायाः सुखादीच्छास्थले क्लृप्तत्वात्। प्रकृते विशेषधर्मप्रकारकजिज्ञासायाः सविषयविषयकत्वेन ज्ञानप्रकारीभूतविशेषधर्मप्रकारकत्वस्यावश्यकत्वेन तत्पदार्थविशेषधर्मप्रकारकज्ञानकार्य्यतावच्छेदकाक्रान्तत्वादिति भावः॥

*तत्तद्रूपेणैवेति* ॥ एकत्वत्वादिरूपेणैवेत्यर्थः। एवकारेण संख्यासामान्यधर्मव्यवच्छेदः। इष्टापत्तिस्तु न। तथा सति शब्दादेव विशेषधर्मावगतौ जिज्ञासाया असम्भवादिति भावः।

## परीक्षा

न्यरूपेणैकत्वद्वित्वादेर्वाच्यताङ्गीकर्तव्या। सैव तु नास्ति इत्याह—*वस्तुत इत्यादिना*। एतच्चोक्तकार्यकारणभावमभ्युपेत्य वस्तुतस्तादृशकार्यकारणभाव एव नास्ति, यत्र राजादिपदविशेषश्रवणेऽपि विशेषजिज्ञासा तच्छब्दश्रवणरूपोद्बोधकजनितोद्बोधनविशिष्टसंस्कारजातस्मरणेन तावते तत्र व्यभिचारात्। एवमाम्रफलदर्शनमात्रेणैव स्मरणानन्तरं विशेषरसजिज्ञासाऽनुभवसिद्धा। तत्रापि व्यभिचारो द्रष्टव्यः। *जिज्ञासैवेति*। 'राजपुरुष'इत्यादिश्रवणानन्तरजातशाब्दबोधोत्तरं राज्ञः, राज्ञोः, राज्ञां, वेति जिज्ञासैव नानुभवसिद्धेति। एवञ्च-कथं जिज्ञासानुरोधेन सामान्यधर्मप्रकारकज्ञानस्यावश्यकतेति शेषः। नतु जिज्ञासा जायते न वेत्यत्र निर्णयः। स यथा नेति निर्णयस्य सिद्धिः।

प्रकारान्तरेण भवतीत्याशयेनाह-*तथात्वे वेति*। अनुभवसिद्धत्वे वेत्यर्थः। *समानप्रकारकत्वेनेति*। यद्धर्मप्रकारकज्ञानमादौ भवति, तद्धर्मप्रकारिकैवेच्छा जन्यते इति। समवायेन तद्धर्मप्रकारकेच्छाम्प्रति तद्धर्मप्रकारकज्ञानत्वेन कारणता इत्याकारकः कार्यकारणभावः। यस्य पुरुषस्य 'सद्यः शुक्रकरम्पयः' इति ज्ञानं तस्य पयो जायतामित्याकारकेच्छा भवति यथा। एवञ्च जिज्ञासा—ज्ञानेच्छा, तस्य ज्ञानातिरिक्तविषयकत्वं याचितमण्डनन्यायेन स्वविषयज्ञानविषयत्वेनैवेति। यदि विशेषधर्मप्रकारकज्ञानेच्छा जायते इति ब्रूषे! तदेच्छायां ज्ञानभिन्नविशेषपदार्थभाननिर्वाहाय विशेषधर्मप्रकारकज्ञानपूर्वकत्वमप्यस्तीति, अनापत्त्या भवता स्वीकार्यमिति सङ्ख्यात्वत्वाद्यवच्छिन्नेऽस्य वाच्यत्वं भवन्मते सिध्येत, नतु सामान्यरूपेण विशेषस्य वाच्यत्वसिद्धिरित्याशयः। *तत्तद्रूपेण* एकत्वद्वित्वत्वादिविशेषरूपेण। यदिष्टापत्तिस्तर्हि विशेषधर्मप्रकारकं ज्ञानं सिद्धमेव, तदा सिद्ध इच्छाविरहाज्जिज्ञासोच्छेदः। तथा च मूलोच्छेदात्तत्र शक्तिकल्पनमनर्थकमिति भावः। एतेन भवत्संमताया विशेषवति जिज्ञासा नैवास्तीत्यस्य सिद्धान्तभेदैकत्वसङ्ख्याया द्वितीयमतरीत्या न सिद्धिः, तथा च प्रथममतमेव युक्तमिति

दर्पणः

अत्र वदन्ति—तद्धर्मप्रकारकज्ञानस्य कार्य्यतावच्छेदककोटौ स्वातन्त्र्येण तद्धर्मप्रकारकत्वं सामान्यधर्मप्रकारकज्ञानस्य विशेषधर्मप्रकारकजिज्ञासाजनकत्वानुरोधान्निवेशनीयम् । अन्यथा सामान्यधर्मप्रकारकज्ञानस्योक्तजिज्ञासां प्रति हेतुत्वं विलीयेत ।

न च तत्र मानाभावः । जायते च कार्य्ये कारणे वा ज्ञाते किमस्य कार्यं कारणं वा इति दीधितिकृद्वाक्यस्यैव मानत्वात् । प्रकृते विशेषधर्म्मस्य पारतन्त्र्येणैवेच्छांशे प्रकारत्वात्तद्धर्मप्रकारकज्ञानं विनापि सामान्यधर्मप्रकारकज्ञानात् तादृशजिज्ञासायाः सूपपादत्वात् । सामान्यधर्मप्रकारकज्ञानं तु विशेषधर्मप्रकारत्वावच्छिन्नविशेष्यकेच्छात्वमिति न गुणत्वसामान्यज्ञानात् सुखादीच्छाप्रसक्तिः, अधिकमन्यत्रानुसन्धेयम् । तथाचात्र जिज्ञासायाः सर्वसिद्धत्वे तदुपपत्तयेऽभेदैकत्वे वृत्तेर्वृत्तिरावश्यिका । एवञ्च "अभेदैकत्वसंख्याया वृत्तौ" इति मूलस्य सङ्गतिः । एतेन भेदस्य तत्सहचरितद्वित्वादेरेकत्वस्य च या प्रतीतिस्तदभाव इत्यर्थपरतया व्याख्यानं परास्तमिति ॥ ९६ ॥

इति भूषणसारदर्पणेऽभेदैकत्वसंख्यानिरूपणम् ॥ ११ ॥

परीक्षा

ध्वनितम् ।

अत्रेदमवधेयम्–यदि विशेषधर्मप्रकारकजिज्ञासाम्प्रति सामान्यधर्मप्रकारकज्ञानस्योक्तरीत्याऽन्वयव्यतिरेकाभ्यां कारणत्वं युक्तमेव । अत एव दीधितिकृताऽनन्तराभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयोऽर्थः सङ्गतिरिति सङ्गतिलक्षणस्योपजीवकत्वादौ सङ्गमनकाले जायते च कार्यकारणे वाज्ञाते किमस्य कारणं कार्यं वेति जिज्ञासेत्युक्तम् । ज्ञानेच्छयोः सामान्यतो यः समानप्रकारकत्वेन कार्यकारणभावस्तेनान्यथासिद्धिस्तु न शङ्कनीया । तत्रेच्छानिष्ठा कार्यता तदवच्छेदकशरीरेऽधिकस्य निवेशात् ।

तथाहि—यस्या इच्छायाः स्वातन्त्रेण सविषयकत्वम् , ताम्प्रतीच्छाप्रकारकज्ञानस्य हेतुत्वम् । अत एव ब्राह्मणगृहमेतदिति ज्ञाने जाते ब्राह्मणत्वव्याप्यधर्मज्ञानञ्जायतामितीच्छा भवति, स्वीयैतादृशजिज्ञासाबोधनाय कस्य ब्राह्मणस्येति शब्दम्प्रयुङ्क्ते यदीच्छाज्ञानयोः कार्यकारणभावे स्वातन्त्र्यस्य निवेशो न स्यात्तदा ब्राह्मणत्वव्याप्यधर्मज्ञानज्जायतामितीच्छाया धर्मप्रकारकत्वात्ततस्तद्व्याप्यधर्मप्रकारकज्ञानस्य प्राक्क्षणवृत्तित्वाभावेन व्यभिचारः स्यात् । स्वातन्त्र्यनिवेशे तु नैतादृशेच्छायाः स्वातन्त्र्येण ब्राह्मणत्वव्याप्यधर्मप्रकारकत्वम् । किन्तु याचितमण्डनन्यायेनेव इच्छाया यत्कारणं ब्राह्मणत्वव्याप्यधर्मज्ञानं मदिष्टसाधनमितिज्ञानन्तज्ज्ञानविषयविषयकत्वमेव । स्वातन्त्र्यञ्चेच्छाया तद्धर्मप्रकारकत्वेनेति । एवञ्च–राजपुरुषादिपदजन्यशाब्दबोधानन्तरं यदि सङ्ख्यात्वव्याप्यधर्मज्ञानं जायतामितीच्छा भवतीति सर्वानुभवसिद्धम् । तदा तस्या इच्छाया न स्वातन्त्र्येण द्वित्वत्वादिप्रकारकत्वमिति नोक्तरीत्याभेदैकत्वसङ्ख्याया ज्ञाने नासौ सम्भवः । परन्त्विच्छैव तादृशी तत्र जायते इति सर्वसहृदयसम्मतिर्नेत्येवैतन्मतनिराकरणबीजं युक्तमिति तत्त्वम् ॥ ९६ ॥

इति श्रीमद्भूषणसारटीकायामभेदैकत्वसंख्यानिरूपणम् ॥ ११ ॥

## ॥ अथ सङ्ख्याविवक्षानिर्णयः ॥

सङ्ख्याप्रसङ्गादुद्देश्यविधेययोः सङ्ख्याविवक्षाविवक्षे निरूपयति—

लक्ष्यानुरोधात् सङ्ख्यायास्तन्त्राऽतन्त्रे मते यतः ॥
पश्वैकत्वादिहेतूनामाश्रयणमनाकरम् ॥ ५७ ॥

"ग्रहं सम्मार्ष्टि" इत्यत्रोद्देश्यग्रहगतमेकत्वमविवक्षितमितिवन्नास्माकमुद्देश्यविशेषणाविवक्षानियमः । धातोरित्येकत्वस्य विवक्षितत्वात् ।

उत्पद्येत समस्तेभ्यो धातुभ्यः प्रत्ययो यदि ।
तदा सर्वैर्विशिष्येत द्वन्द्वोत्पन्नसुबर्थवत् ॥

इति शब्दान्तराधिकरणे भट्टपादैरभिधानाच्च । "आर्द्धधातुक-

---

दर्पणः

अथ सङ्ख्याविवक्षानिर्णयः ।

सङ्ख्याविवक्षाऽविवक्षानिरूपणे सङ्गतिं दर्शयति—*प्रसङ्गादिति* ॥ अभेदैकत्वसङ्ख्यानिरुपणे 'कपिञ्जलानालभेत' इत्यत्र विधेयविशेषणतया त्रित्वसङ्ख्याविवक्षायाः स्मृतत्वाद् उपेक्षानर्हत्वाच्चेत्यर्थः ॥ *अविवक्षितमितीति* । तद्विवक्षणे यज्ञीययावत्पात्राणां मार्जनाऽलाभ इति भावः ॥ *धातोरितीति* ॥ प्रत्ययविधौ "धातोः" (पा०सू० ३।१।९१) इति सूत्रस्थधातुपदार्थविशेषणीभूतैकत्वादेरतच्छास्त्रे अविवक्षणादित्यर्थः । अस्मच्छास्त्रे तु उद्देश्यगतविशेषणस्याविवक्षा मीमांसकानामपि सम्मतेत्याह—*उत्पद्येतेति* ॥ *विशेष्येतेति* ॥ तदा स प्रत्ययार्थः सर्वैर्धात्वर्थैर्विशिष्येतेत्यर्थः ।

ननु नेयं युक्तिर्विवक्षासाधिका, तादृशसमुदायस्य क्रियावचनत्वाभावेन ततः प्रत्ययोत्पत्तेर्गगनकुसुमायमानत्वेन स्वत एव विवक्षासत्त्वादत आह—*आर्द्धधातुक-

परीक्षा

॥ अथ संख्याविवक्षानिर्णयः ॥

सङ्ख्याया विवक्षायामविवक्षायाञ्च प्रसङ्गसङ्गतिं दर्शयति—*सङ्ख्याप्रसङ्गादिति* । प्रसङ्गश्च—स्मृतस्योपेक्षानर्हत्वमेव । अस्ति च प्रकृते स्मृतिसामग्री । अभेदैकत्वसङ्ख्याया निरूपणावसरे 'कपिञ्जलानालभेत' इत्यत्र विधेयविशेषणत्रित्वसङ्ख्याविवक्षाया दर्शनात् । यथा—मीमांसकानाम्मते विधेयविशेषणसङ्ख्याविवक्षितोद्देश्यगतसंख्याविवक्षितेति नियमः, तथा नास्माकम्मते, इत्येतद्दर्शयति—*लक्ष्यानुरोधादित्यादिना* । *तन्त्रातन्त्रत्वे*—विवक्षाविवक्षे । *अविवक्षितमिति* । यज्ञीयसर्वपात्राणां सम्मार्ज्जनस्याभिमतत्वात् । *धातोरित्येकत्वस्य*—"धातोः" इति सूत्रजन्यबोधीयविषयतावद्धातुपदार्थतकत्वस्य । एतेनोद्देश्यगतापि सङ्ख्या विवक्षितेति सिद्धम् । स्वोक्तार्थे मीमांसकस्यापि सम्मतिं दर्शयति—*उत्पद्येतेति* । *सर्वैर्विशेष्येतेति* । स प्रत्ययार्थ इति शेषः ।

स्येड् वलादेः" ( पा० सू० ७।२।३५ ) इत्यत्रानुवाद्यार्द्धधातुकविशेषणस्य वलादित्वस्य विवक्षितत्वाच्च ।

एवं "पशुना यजेत" इतिवद् विधेयविशेषणं विवक्षितमित्यपि नियमो न । "रदाभ्यां निष्ठातो नः पूर्व्वस्य च दः" ( पा० सू० ८।२।४२) इत्यत्र नकारद्वयविधानानापत्तेः । तथाच 'भिन्न' इत्यत्र नकारद्वयलाभो न स्यात् । "आद्गुणः" ( पा० सू० ६।१।८७ ) इत्यादावेकत्वविवक्षयैवोपपत्तौ,, "एकः पूर्व्वपरयोः" ( पा० सू० ६।१।८४ )

---

दर्पणः

स्येड्वलादेरितीति* ॥ *विवक्षितत्वाच्चेति* ॥ अन्यथा तदुपादानवैयर्थ्यापत्तेरिति भावः । *एवमिति* ॥ अनुवाद्यविशेषणमविवक्षितमेव । नियमाऽनाश्रयणवदित्यर्थः । 'पशुना यजेत' इत्यत्र यज्यर्थयागस्य करणाकाङ्क्षायां साधनत्वेन पशुर्विधीयते । एवञ्च पशुशब्दस्य विधेयसमर्पकतया तदुपस्थितानां केषाञ्चिद् ग्रहणे केषाञ्चित् परित्यागे मानाभावेन पशुत्वपुंस्त्वादिवदेकत्वमपि यागसाधनत्वेन विवक्षितम् । तेन नानेकपशुकरणयागाददृष्टसिद्धिः । एवमन्यत्रापि विधेयविशेषणं विवक्षितम् । अत्र विवक्षाकारणविरहादिति मीमांसकपरिशीलिता सरणिस्तदनुसरणनियमो नाऽस्माकमित्यर्थः।

एतच्छास्त्रे तदाश्रयणेऽनिष्टं प्रदर्शयति—*रदाभ्यामिति* ॥ *विधानानापत्तेरिति* ॥ 'न' इत्येकवचनोपस्थितैकत्वस्यापि विधेयविशेषणतया तद् विवक्षायां नकारद्वयविधानं न स्यादित्यर्थः । ननु मास्तु नद्वयविधानमत आह—*तथाचेति* ॥ इदञ्चैकवाक्यतया विधानमभिप्रेत्य, वाक्यभेदेन विधानपक्षे त्वाह *आद् गुण इत्यादाविति* । *एकत्वविवक्षयैवेति* ॥ विधेयगुणगतैकत्वविवक्षयैवेत्यर्थः । तथा चैकग्रहणमेवोक्तार्थे ज्ञापकमिति भावः ।

ननु पश्वेकत्वादिविवक्षाहेतूनां जैमिनिसम्मतत्वान्न तदाश्रयणस्यानाकरत्वमित्या-

परीक्षा

ननु नेयं युक्तिरुद्देश्यविशेषणविवक्षासाधिका समुदायस्य क्रियावाचकं विना धातुत्वादत आह-*आर्द्धधातुकेति*। *विवक्षितत्वादिति* । अन्यथा 'अवश्यलाव्यम्' 'अवश्यपाव्यम्' इत्यादाविडागमापत्तिः ।

मीमांसकोक्तनियममपि खण्डयति—*एवमिति* । 'पशुना यजेत' इत्यनेन यागस्य यज्धात्वर्थस्य या साधनाकाङ्क्षा निवर्त्यते । एवञ्च विधेयसमर्पकस्य पशुनेत्यस्य पुंस्त्वैकत्वविशिष्टपशुबोधकतया द्वयोरपि विशेषणयोर्विवक्षा, नत्वेकस्य इति छागया यथा न यागाङ्गत्वम् , न तथानेकपशूनामपीति सिद्धान्तो मीमांसकानाम्, तद्दर्शनेनास्माकं सर्वत्र विधेयविशेषणविवक्षेति दर्शयति—*रदाभ्यामिति* । *लाभो न स्यादिति* । तद्-एकवाक्यतया विधानमिति पक्षे । यदि तु भिन्नवाक्यतया विधानम् , तदा नास्माकं दोषः, अत आह-*आद्गुण इति* । *एकत्वविवक्षया*-विधेयगतैकत्वस्य विवक्षया । एवञ्चैकग्रहणमिह शास्त्रे मीमांसकोक्तनियमस्यानाश्रयणे बीजमिति दर्शितम्भवति ।

ननु 'अनाकरम्' इति मूलोपात्तमसङ्गतम् , 'पशुना यजेत' इत्यत्र यदेकवचनन्तद-

इत्येकग्रहणवैयर्थ्यापत्तेश्चेति भावः। शब्दार्थस्तु सङ्ख्याया लक्ष्याऽनुरोधात्तन्त्रातन्त्रे यतो मते, अतः पश्वैकत्वाधिकरणोक्तहेतूनामाश्रयणं नास्मत्सिद्धान्तसिद्धमिति। आदिना ग्रहकत्वसंग्रहः ॥५७॥

ननु विधेयविशेषणविवक्षा आवश्यकी। अन्यथा 'सुद्ध्युपास्य' इत्यादावनन्तयकाराद्यापत्तेः। 'भिन्न' इत्यत्र नकारद्वयवदन्येषामप्यापत्तेः। "एकः पूर्वपरयोः" इत्यत्रैकग्रहणञ्च स्थानिभेदादादेशभेदवारणायेत्यभिप्रेत्याह—

**विधेये भेदकं तन्त्रमन्यतो नियमो न हि**
**ग्रहैकत्वादिहेतूनामाश्रयणमनाकरम् ॥ ५८ ॥**

भेदकं विशेषणम् ॥ तन्त्रं विवक्षितम्। विधेयविशेषणं विवक्षितमित्यस्तु तथाऽप्यन्यतः—अनुवाद्यस्य नियमो न हि। क्वचित् तन्त्रं क्वचिन्नेत्यर्थः।

---

दर्पणः

शङ्कामपाकरिष्यन् योजनाप्रदर्शनमिषेणाऽऽकरपदार्थं व्याचष्टे—*शब्दार्थस्त्वित्यादि*॥ पश्वैकत्वाऽधिकरणोक्तहेतूनामिति* ॥ 'पशुना यजेत' इत्यत्र विधेयगतैकत्वस्याविवक्षणे पश्वन्तरालम्भे प्रयोगप्रांशुभावबाधेन यागवैगुण्यापत्तिः। गुणानुरोधेन यागाऽऽवृत्तौ प्रधानत्वभङ्गापत्तिर्यावत्पशुकरणकयागासम्भवश्चेत्येवमादयो दोषा हेतवस्तेषामित्यर्थः॥ *सिद्धान्तसिद्धमिति*॥ सिद्धान्तार्थप्रतिपादकमहाभाष्यादिसिद्धमित्यर्थः॥५७॥

*आदेशभेदवारणायेति* ॥ वस्तुतस्तु नैकग्रहणं विधेयगतविशेषणाविवक्षायां तन्त्रम्। "अनयोः पूलयोः कटं कुरु" इत्यादाविव "आद् गुण" इत्यादावपि "पूर्वपरयोः" इति द्वन्द्वनिर्देशेनैकत्राक्यतयैवोभयोः स्थाने एकविधानसम्भवात् स्थानिभेदा-

परीक्षा

र्थैकत्वविवक्षाया जैमिनिसम्मतत्वादतस्तदर्थमाह—*शब्दार्थस्त्वित्यादिना*। *हेतूनामिति*। यदि 'पशुना यजेत' इत्यत्रैकत्वमविवक्षितं स्यात्तदा यागोक्तक्रमस्य पश्वन्तरालम्भने बाधेन यागवैगुण्यापत्तिः, क्रियायामभ्यावृत्त्या यागस्याप्यापत्तिरिति यागस्य प्रधानस्य गुणानुरोधेनावृत्तौ प्राधान्यस्य भङ्गः, यावताम्पशूनां यागकरणत्वासम्भवश्चेति हेतूनामित्यर्थः। *सिद्धान्तसिद्धमिति*। सिद्धान्तप्रतिपादकमहाभाष्यादिसिद्धमित्यर्थः ॥ ५७ ॥

*स्थानिभेदादिति*। "पूर्वपरयोः" इति द्विवचनात्तस्य स्थानिवत्त्वेनेतरेतरयोगद्वन्द्वे उद्भूतावयवभेदकसमुदायस्थानिवत्वादिति भावः। *आदेशभेद इति*। सूत्रकाररीत्येदम्। भाष्यकाररीत्या तु—यथा—'अनयोः पूलयोः कटं कुरु' इत्यत एकस्यैव कटस्य करणत्वप्रतीतिस्तथा पूर्वपरयोर्गुणो भवतीत्यतोऽप्येकस्यैव गुणस्य प्रतीतिर्भविष्यतीति रीत्या सौत्रमेकग्रहणं प्रत्याख्यातम्।

ग्रहैकत्वादौ यो हेतुर्वाक्यभेदादिस्तस्यात्राश्रयणमनाकरम् । एकत्वविशिष्टं धातुं वलादित्वविशिष्टमार्द्धधातुकञ्चोद्दिश्य प्रत्ययेडागमादेर्विधिसम्भवादिति भावः ॥ ५८ ॥

नन्वेवं भिन्न इत्यत्र नकारद्वयलाभो न स्यादित्यत आह--

रदाभ्यां वाक्यभेदेन नकारद्वयलाभतः ।
क्षतिर्नैवास्ति तन्त्रत्वे विधेये भेदकस्य तु ॥ ५९ ॥

---

दर्पणः

न्नानेको गुण इत्येकग्रहणस्य भाष्ये प्रत्याख्यानादिति रहस्यम् । *वाक्यभेदादिरिति* ॥ "प्राजापत्या नव ग्रहा" इति वाक्यविहितग्रहोद्देशेन सम्मार्गो विधीयते । "ग्रहं सम्मार्ष्टि" इत्यनेन तत्रानुवाद्यग्रहैकत्वविवक्षायामुत्पत्तिवाक्यगतसङ्ख्याया विरोधाद् वाक्यस्य यो भेदो विभिन्नविशेष्यकबोधजनकत्वं तदापत्त्यादीत्यर्थः ॥ अन्येतु–"ग्रहं संमार्ष्टि" तं चैकमित्याकारकवाक्यभेदापत्तिमाहुः ।

आदिपदेनोत्पत्तिवाक्यगतनवत्वसङ्ख्यया ग्रहपदार्थस्य परिच्छिन्नत्वात्परिच्छेदकाङ्क्षाभावस्य ग्रहमिति द्वितीयया संस्कार्यत्वलक्षणाप्राधान्यबोधनात् "प्रतिप्रधानं गुणाऽऽवृत्तिः" इति न्यायाद्विनिगमनाविरहात् सोमावसेकनिरासफलकसम्मार्गस्य सर्वैर्ग्रहैरपेक्षणाद्विधेयपश्वादिविशेषणवत् क्रियाङ्गत्वाभावेन तद्वैकल्यप्रयुक्तक्रियावैकल्याप्रसक्तेश्च तद्विवक्षाविरहबीजस्य च संग्रहः । अनाकरमिति पूर्ववत् । इडागमादेरित्यादिना "उदीचामातः स्थाने यकपूर्वायाः" ( पा० सू० ६।३।४६ ) इति विहितेत्त्वसंग्रहः । तत्राऽऽकारस्थानिकमातमुद्दिश्येत्वविधानात् । अत एवेण्निषेधविधायक

परीक्षा

*वाक्यभेदादिरिति* । अयम्भावः–'ग्रहं सम्मार्ष्टि' इत्यनेन वाक्येन 'प्राजापत्या नव ग्रहाः' इति वाक्यविहितनवग्रहोद्देशेन सम्मार्गो विधीयते । यदि प्रकृतशब्दोपात्तमेकत्वं विवक्षितं स्यात्, तदोत्पत्तिवाक्यप्रतिपाद्यनवत्वसङ्ख्यया विरोधः स्यादिति 'ग्रहं सम्मार्ष्टि' इति वाक्यस्यावृत्तिं कल्पयित्वा तत्तद्ग्रहविशेष्यकबोधजनकतास्य वाच्या । तथा च सम्मार्गविधायकवाक्यस्य ग्रहभेदेन भेदापत्तिरिति ।

किञ्च 'ग्रहं सम्मार्ष्टि' तच्चैकमिति रीत्या वचनाभिव्यक्तिः स्यात्, तथा च वाक्यभेद स्पष्ट एव । आदिपदेन सङ्ख्याविवक्षाबीजाभावसङ्ग्रहः । तथाहि–सङ्ख्यायाः सङ्ख्येयपरिच्छेदकत्वेन परिच्छेदकाकाङ्क्षया तस्याः सम्बन्धो वाच्यः, साचात्र नास्ति । ग्रहाणां यागाङ्गत्वबोधकं यत् "प्राजापत्या नवग्रहा" इति वाक्यं तेन नवत्वस्य प्राप्तत्वेन परिच्छेदकसङ्ख्यान्तरानपेक्षणात् । किन्तु ग्रहाणां संस्कार्यत्वलक्षणप्राधान्याद् गुणस्य संमार्जनस्यावृत्तिरेव भवतीति । *अत्र*–एतच्छास्त्रघटकपदबोध्यसङ्ख्याविषये । *इडागमादेरिति* । आदिपदेन "अनचि च" इति सूत्रविहितद्वित्वस्य सङ्ग्रहः । अत एव "एकाच उपदेशेऽनुदात्तात्" इति सूत्रव्याख्यानावसरेऽच इत्येकत्वविवक्षयेति व्याख्यानस्याप्युपपत्तिः ॥ ५८ ॥

*एवम्*–मीमांसकोक्तरीत्या नियमाभावे । *न स्यादिति* । "अस्जोरोपधयोः"

चकारसूचितं--निष्ठातस्य नः, पूर्वस्य दकारस्य च न इति वाक्यभेदमादाय नकारद्वयलाभ इत्यर्थः ॥ ५६ ॥

इति वैयाकरणभूषणसारे सङ्ख्याविवक्षादिनिर्णयः ॥ १२ ॥

---

दर्पणः

"एकाच्" (पा० सू० ७।२।१०) इति सूत्रेऽच इत्येकत्वविवक्षादरेणानेकाच्त्वोपदेशव्या-वृत्तिग्रन्थकृद्भिर्व्याख्याता ।

वस्तुतस्तु ग्रहैकत्वदृष्टान्तेनात्राप्यनुवादविशेषणानां क्वचिदविवक्षाऽस्तु, तदितर-विशेषणानां विवक्षायां तु न किञ्चिद् बाधकम् । मीमांसायामनुवाद्यांशे जातिलिङ्गस-ङ्ख्याऽतिरिक्तविशेषणास्यादर्शनात् । एषाञ्चोत्पतिवाक्यादेवावगमेनाऽऽनुषङ्गिकत्वाद्-विवक्षा युज्यते । प्रकृते तु न तथेति बोध्यम् ॥ ५८ ॥ ५९ ॥

इति भूषणसारदर्प्पणे संख्याया विवक्षादिनिर्णयः ॥ १२ ॥

---

परीक्षा

इत्यत्रैव विधेयाकारगतैकत्वस्य विवक्षयाऽकारद्वयलाभो न स्यादित्यर्थः ॥ ५९ ॥

इति श्रीमद्भूषणसारटीकायाम्परीक्षाभिधायां
सङ्ख्याविवक्षादिनिर्णयः ॥ १२ ॥

---

## अथ क्त्वाद्यर्थनिर्णयः ॥

क्त्वाप्रत्ययादेरर्थं निरूपयति ।

अव्ययकृत इत्युक्तेः प्रकृत्यर्थे तुमादयः ॥
समानकर्तृकत्वादि द्योत्यमेषामिति स्थितिः ॥६०॥

तुमादयः—तुमुन्नादयः । प्रकृत्यर्थे—भावे । आदिना क्त्वादेः संग्रहः । भावे इत्यत्र मानमाह—*अव्ययकृत इति* ॥ "अव्ययकृतो भावे" इति वार्त्तिकादित्यर्थः ।

ननु "समानकर्तृकयोः पूर्वकाले" इत्यादिसूत्राणां का गतिस्त-

---

दर्पणः

अथ क्त्वाद्यर्थनिर्णयः ।

अवसरसङ्गतिं क्त्वाद्यर्थनिरूपणे दर्शयति—*क्त्वाप्रत्ययादेरिति* । प्रकृत्यर्थस्य फलेऽपि सत्त्वादाह—*भाव इति* । तत्रापि सत्त्वभूते व्यापारे एव, न तु पूर्वकालादावित्यर्थः । पाक इत्यादाविव, पक्तुं, पक्त्वेत्यादिजन्यबोधे भावांशे वैलक्षण्यस्यानुभवादिति भावः ।

वस्तुतस्तु पक्त्वेत्यादिजन्यबोधे भावे लिङ्गसङ्ख्यानन्वयित्वात् तदनुभूयत एव । एवं 'पक्तुमित्यादौ फलार्थकतुमुना साध्यत्वेन तद्बोधाच्चेत्युक्तप्रायमिति ॥ *का गतिरिति* ॥ तत्र पूर्वकाल इत्याद्युपादानात् पूर्वकालादीनां वाच्यता प्रतीयते । भाव-

परीक्षा

अथ क्त्वाद्यर्थनिर्णयः ॥

धातोरित्यनुवादगतैकत्वविवक्षानिरूपणप्रस्तावे उक्तम्, तेन तत्प्रकृतिकप्रत्ययानां स्मृतत्वेन तद्घटकक्त्वाप्रत्ययार्थनिरूपणं करोति—*अव्ययकृत इत्यादिना* । "अव्ययकृत" इत्यस्य भाव इति शेषः । तेन फले प्रकृत्यर्थस्य सत्त्वेऽपि न क्षतिः । पक्त इत्यादौ कर्मादिप्रत्ययार्थत्वदर्शनादव्ययेति विशेषणम् । अव्ययसंज्ञाप्रयोजककृत इत्यर्थः । नच पाक इत्यादौ घञादेरपि भावाभिधायकत्वमस्ति तेषामव्ययेति विशेषणेऽसङ्ग्रह इति वाच्यम् । लिङ्गानन्वय्यर्थप्रतिपादकत्वेन क्त्वाप्रत्ययसजातीयनिरूपणस्य प्रकृतत्वात् का गतिरिति । तथाऽभिधानेन समानकर्तृकत्वस्य "कर्त्तरि कृत्" इत्यत्रैव वाच्यत्वस्य प्रतीतेरिति भावः । *अव्ययकृत इत्युक्तेरिति* । अनेन मूलकृता समानकर्त्तृकयोर्धात्वर्थयोरपूर्वकालावच्छिन्नार्थप्रतिपादकाद्धातोः प्रत्यय इति सूत्रजन्यशाब्दबोधे जातेऽर्थाकाङ्क्षायाम् "कर्त्तरि कृदू" इत्यस्यानुपस्थित्यर्थम् "अव्ययकृतो भावे" इति वार्तिकारम्भे सति समानकर्त्तृकत्वादेः शाब्दबोधे भानं संसर्गविधयैव स्वीकार्यमिति ध्वनितम् ।

त्राह—*समानकर्तृकत्वादिति* ॥ अयम्भावः—'भोक्तुं पचति, भुक्त्वा व्रजतीत्यादावेकवाक्यता सर्वसिद्धा भोजनपाकक्रिययोर्विशेषणविशेष्यभावमन्तरेणानुपपन्ना । अन्यथा भुङ्क्ते व्रजतीत्यादावप्येकवाक्यतापत्तेः । तथाच तयोर्विशेषणविशेष्यभावनिरूपकः संसर्गो, जन्यत्वं सामानाधिकरण्यं, पूर्वोत्तरभावो, व्याप्यत्वञ्चेत्यादिरनेकविधः । तथाच भोक्तुं पचति, भुक्त्वा तृप्त इत्यादौ भोजनजनिका पाकक्रिया, भोजनजन्या तृप्तिरिति बोधः । अत एव जलपानानन्तर्यस्य तृप्तौ सत्त्वेऽपि, पीत्वा तृप्त इति न प्रयोगः । सामानाधिकर-

---

दर्पणः

मात्रार्थकत्वे तु तदनुपपत्तिरिति भावः ॥ *समानकर्तृकत्वादीति* ॥ तथाच समानकर्तृकयोर्धात्वर्थयोर्मध्ये पूर्वकालसम्बन्धी योऽर्थस्तद्वाचकात् क्त्वेत्यर्थेऽर्थाकाङ्क्षायां "कर्तरि कृद्" इत्यस्य प्रसक्त्या तद्बोधनार्थं वार्त्तिकाऽऽरम्भेण भावस्यैव वाच्यता निर्धार्य्यते । कर्तुः प्रत्ययविशेषणत्वे तु समानकर्त्तरीत्येव ब्रूयात् । सूत्रोपात्तानां तु द्योत्यत्वमेव, वर्त्तमानत्वादिति भावः ।

वस्तुतस्तु न द्योत्यतायामपि निर्भरः, संसर्गमर्यादयैव तद्भानसम्भवादित्याह—*अयम्भाव इति* ॥ *एकवाक्यतेति* ॥ "समानकर्तृकयोः" (पा०सू० ३।४।२१) इत्यादिसूत्राणां धातुसम्बन्धाधिकारीयत्वादिति भावः ॥ *अनुपपन्नेति* ॥ विशेष्यविशेषणत्वयोः संसर्गविषयतानिरूप्यत्वेन सम्बन्धं विना विशिष्टबुद्धेरेवासम्भवात् सम्बन्धभानं तद्वाच्यतां विनाऽप्युपपन्नमिति भावः ॥ *अन्यथेति* ॥ विशेष्यविशेषणभावमन्तरेणाऽप्येकवाक्यताभ्युपगमे इत्यर्थः ॥ *सामानाधिकरण्यमिति* ॥ एकाश्रयवृत्तित्वमित्यर्थः ॥ *पूर्वोत्तरभावः* । स्वोत्तरसमयोत्पत्तिकत्वम् , स्वपूर्वसमयवृत्तित्वं वा ॥ *व्याप्यत्वम्* । अविनाभावित्वम् ॥

तुमुनाद्यन्ते शाब्दबोधदिशमाह—*तथाचेति* ॥ *भोजनजनिकेति* ॥ जनकत्वस्यात्र संसर्गतेति स्फुटीकर्त्तृमियमुक्तिः । बोधाकारस्तु, भोजनविशिष्टेत्येव जनकत्वस्यापदार्थतया अप्रकारत्वात् । क्रिययोर्जन्यजनकभावस्यापि सम्बन्धत्वे युक्तिमाह—*अत एवेति* ॥ जन्यत्वस्य संसर्गत्वाभ्युपगमादेवेत्यर्थः ॥ जलपानाऽऽनन्तर्य्यस्येत्यनेन

परीक्षा

तदेतदाह—*अयम्भाव इत्यादिना* । *एकवाक्यतेति* । "समानकर्तृकयोः" इति सूत्रोपात्तयोरुभयपदार्थयोर्विशेष्यविशेषणभावस्यावश्यकत्वादिति भावः । ननु पदसमूहत्वमेवैकपाकत्वसिद्धौ च । *तथा चेति* । सम्बन्धस्यानेकविधित्वे चेत्यर्थः । *जन्यत्वमिति* । जन्यत्वपदजनकत्वस्याप्युपलक्षकम् । एवञ्च यत्र जनकत्वं संसर्गस्तत्र तस्य संसर्गस्य विशेषणनिष्ठत्वनियामकः संसर्गो जन्यत्वरूपः । विशेष्यनिष्ठत्वञ्चाश्रयतया जन्यत्वस्य, तत्वे तूभयनिष्ठत्वं जनकत्वाश्रयत्वाभ्याम् । *अत एव*—जन्यजनकभावस्य संसर्गत्वस्वीकारादेव । जन्यजनकभावस्य संसर्गविधया भानमेवादृष्टवाक्यजन्यशाब्दबोधे भवतीति बोधनाय भोजनजन्येत्युक्तिः । शाब्दबोधस्तु–भोजनविशिष्टा पचिक्रियेत्याद्येव । *सामानाधिकरण्यस्यापीति* । अपिना

ण्यस्यापि संसर्गत्वेनार्थात् समानकर्तृकत्वमपि लब्धम्। भुक्त्वा व्रजतीत्यादौ पूर्वोत्तरभावः सामानाधिकरण्यञ्च संसर्ग इति भोजनसमानाधिकरणा, तदुत्तरकालिकी व्रजनक्रियेति बोधः।

अधीत्य तिष्ठति, मुखं व्यादाय स्वपितीत्यादौ चाध्ययनव्यादानयोरभावकाले अप्रयोगात्, यदा यदाऽस्य स्थितिः, स्वापश्च तदा तदाध्ययनं मुखव्यादानञ्चेतिकालविशेषाऽवच्छिन्नव्याप्यत्वबोधाद् व्याप्यत्वं, सामानाधिकरण्यञ्च संसर्गः।

दर्पणः

पूर्वोत्तरभावसम्बन्धसत्वं बोध्यते। तज्जन्यत्वविवक्षायान्तु प्रयोग इष्ट एवेति भावः। सामानाधिकरण्यस्य संसर्गताऽभ्युपगमस्तु यत्र पूर्वापरीभावापन्नभोजनतृप्त्योर्वैयधिकरण्यं तत्र भुक्त्वा तृप्यतीतिप्रयोगवारणाय अव्यवहितोत्तरत्वस्य तु दिनान्तरितपूर्वकालवृत्तिसमानाधिकरणभोजनादिक्रियामादाय क्त्वावारणाय। व्यवधानञ्च–तात्पर्य्यवशाद्दण्डमुहूर्त्तादिना ग्राह्यम्। अतो भोजनानन्तरं दण्डादिव्यवधानेऽपि न तादृशप्रयोगाऽनुपपत्तिरिति बोध्यम्।

ननु पूर्वोत्तरभावस्य सम्बन्धताभ्युपगमेऽध्ययनकाले 'अधीत्य तिष्ठति' इति प्रयागाऽनुपपत्तिः। स्थितावध्ययनानन्तर्य्याभावात्। एवम् 'मुखं व्यादाय स्वपिति' इति न स्यात्। ओष्ठपुटविभागरूपव्यादानकाल एव स्वापादिसत्त्वे तादृशप्रयोगस्येष्टत्वेन व्यादानस्य स्वापपूर्वकत्वाभावादत आह—*अधीत्य तिष्ठतीत्यादि*॥ *कालविशेषेति*॥ विभिन्नकालिकयोः कालिकसम्बन्धघटितव्याप्यव्यापकभावाभावेन तत्सम्बन्धावच्छिन्नत्वस्यापि संसर्गतोपगन्तव्या।

न केवलं तत्र व्याप्यत्वस्यैव संसर्गता, किन्तु सामानाधिकरण्यस्यापीत्याह—*सामानाधिकरण्यञ्चेति*॥ नातो विभिन्नकर्त्तृकैककालिकाऽध्यनादिकमादायोक्तप्रयोगापत्तिः। इत्थञ्च–"समानकर्त्तृकयोः" (पा० सू० ३।४।२१।) इति सूत्रविहितक्त्वान्तस्थले समानकर्त्तृकत्वरूपसामानाधिकरण्यसंसर्गस्य शाब्दबोधविषयता सार्वत्रिकी। जन्यत्वादीनां तु तात्पर्य्यवशात् क्वाचित्की सेति भावः॥

अन्ये तु—सामानाधिकरण्यस्यैव पूर्वोत्तरभावस्यापि क्त्वान्तजबोधविषयता सार्व-

परीक्षा

क्वचित्सामानाधिकरण्यस्य पृथक् संसर्गत्वाभावसमुच्चयः। तेन जन्यजनकभावस्य सामानाधिकरण्यनियतत्वेन विभिन्नपुरुषकर्त्तृकक्रियाद्वयमादाय 'न भुक्त्वा तृप्तः" इति प्रयोग इति ध्वनितम्। तच्च सामानाधिकरण्यं क्रिययोः स्वस्वनिरूपितकर्त्तृत्वसम्बन्धघटितम्बोध्यम्। *इति बोध इति*। एवं रीत्या विशिष्टबुद्धिनियामकः संसर्गः। *अभावादिति*–अप्रयोगादित्यर्थः। *संसर्ग इति*। केवलसामानाधिकरण्यस्य संसर्गत्वे कालिकैकदिवसमात्र एवाध्ययनम्, स्थितिस्त्वाफाल्गुनम्, तत्राधीत्य तिष्ठतीति प्रयोगापत्तिः, अतो व्याप्यत्वस्यापि संसर्गत्वस्वीकार इति बोध्यम्। यः पुरुषः सकृदेव चैत्रगृहे समागतो भोजनङ्कृत्वा गतस्तत्रापि भुक्त्वा गत इति प्रयोगो भवति, तत्र व्याप्यत्वस्य संसर्गत्वे न फलम्, किन्तु–सामानाधिकरण्यसहितोत्तरत्वमेव। तच्च

एवञ्चान्यलभ्यत्वान्न सूत्रात्तेषां वाच्यत्वलाभ इति युक्तम्–"अव्यय कृतो भावे" इति ।

एवञ्च प्रकृत्यर्थक्रिययोः संसर्गे तात्पर्य्यग्राहकत्वरूपं द्योतकत्वं क्त्वादीनाम् । अत एव 'समानकर्तृकयोः" इति सूत्रे स्वशब्देनोपात्तत्वान्नेति भाष्यप्रतीकमादाय पौर्वापर्य्यकाले द्योत्ये क्त्वादिर्विधीयते, न तु विषय इति भाव इति कैयटः ।

---

दर्पणः

त्रिकी । मुखं व्यादायेत्यादौ 'सुप्त्वा मुखं व्यादत्ते' इत्यत्रेव व्यादानोत्तरमपि स्वापानुवृत्तेस्तथा पौर्वापर्य्यमादाय प्रयोगोपपत्तिः ॥ एवञ्चोक्तसम्बन्धद्वयातिरिक्तसम्बन्धभानस्यैव क्वाचित्कत्वमित्याहुः । न च

अवजानासि मां यस्मादतस्ते न भविष्यति ।
मत्प्रसूतिमनाराध्य प्रजेति त्वां शशाप सा ॥

इत्यत्र मत्प्रसूतिमनाराध्य ते प्रजा न भविष्यतीत्यर्थाद्भिन्नकर्तृकादपि क्त्वादर्शनात् समानकर्तृकत्वस्यापि क्त्वान्तजन्यबोधविषयता न सार्वत्रिकीति वाच्यम् । सूत्रस्वारस्यात् तादृशस्थले स्थित्यादिक्रियामध्याहृत्याऽनाराध्य स्थितस्येति बोधस्याऽभ्युपगमेन सार्वत्रिकत्वाऽक्षतेरिति ॥

*अन्यलभ्यत्वादिति* ॥ आकाङ्क्षानियम्यत्वाद्वाक्यशक्तिलभ्यत्वाद्वेत्यर्थः ॥ *क्रिययोः संसर्ग इति* ॥ प्रकृत्यर्थविशेषत्वरूपस्य तस्यासम्भवेऽपि निरुक्तं यत्तदिह बोध्यमित्यर्थः ॥ *अत एवेति* ॥ क्त्वाः समानकर्तृकत्वादिद्योतकत्वादेवेत्यर्थः ॥ *भाष्यप्रतीकमिति* ॥ 'इह कस्मान्न भवति पूर्वं भुङ्क्ते पश्चाद् व्रजतीति ? स्वशब्देनोपात्तत्वात्' इति भाष्यम् । तत्र समानकर्तृकत्वेन पूर्वकालत्वेन च क्त्व आपादनम् ॥ *न तु विषय इति* ॥ न तु प्रयोगघटकयत्किञ्चित्पदबोध्य इत्यर्थः । 'उक्तार्था-

परीक्षा

स्वध्वंसाधिकरणक्षणवृत्तित्वम् । एवञ्च पञ्चम्याम्भोजनं कृत्वा स्थितेऽष्टम्याम्प्रातर्भुक्त्वा गते 'भुक्त्वा गत' इति प्रयोगापत्तिवारणायाव्यवहितत्वसहितमुत्तरत्वम्बोध्यम् । तच्चाव्यवधानम्प्रसिद्धम् । स्वध्वंसाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसानधिकरणत्वे सति स्वाधिकरणक्षणध्वंसाधिकरणत्वरूपम् । घटिकामुहूर्त्तदिनादिव्यवधानेऽपि 'भुक्त्वा व्रजति' इति प्रयोगस्येष्टत्वात् । अतस्तात्पर्य्यविषयघटिकादिकालमादाय स्वाधिकरणक्षणध्वंसाधिकरणक्षणादिकालावसानोत्पत्त्यधिकरणक्षणध्वंसोत्पत्त्यधिकरणक्षणवृत्तित्वरूपमेव । एवं कालविशेषावच्छिन्नव्याप्यत्वकथनेन कालिकसम्बन्धावच्छिन्नव्याप्यव्यापकभावः सूचितः । तथा सति भिन्नपुरुषकर्तृकक्रियामादाय 'भुक्त्वा व्रजति' इति प्रयोगवारणाय सामानाधिकरण्यस्यापि संसर्गत्वमिति बोध्यम् ।

*एवञ्च*—उक्तानां संसर्गविधया भानसिद्धैव । *अन्यलभ्यत्वादिति*—आकाङ्क्षालभ्यत्वादित्यर्थः । *अत एव* । क्त्वः समानकर्तृकत्वादिद्योतकत्वादेव । *भाष्यप्रतीकमिति* । तत्र "इह कस्मान्न भवति, पूर्वम्भुङ्क्ते पश्चाद् व्रजतीति, स्वशब्देनोक्तत्वात् । नच तर्हीदानीमिदम्भवति पूर्वम्भुक्त्वा ततो व्रजतीति,

यच्चु "समानकर्तृकयोः" ( पा० सू० ३।४।२७ ) इति सूत्रात् समानकर्तृकत्वं क्त्वावाच्यम्। अन्यथौदनं पक्त्वाऽहं भोक्ष्ये इत्यत्र मये-

---

दर्पणः

नामप्रयोग' इति न्यायादिति भावः॥ तथा च "समानकर्त्तृकयोः" इति निर्द्धारणे षष्ठी। "पूर्वकाल" इति च षष्ठ्यर्थे बहुव्रीहिरिति कैयटाशयः। वाक्यार्थस्तु पूर्वमेवोक्तः।

न च पूर्वकालस्य पूर्वादिशब्देनाऽभिधाने क्त्वोऽसाधुत्वे 'पूर्वं भुक्त्वा पश्चाद् व्रजति' इत्यत्र क्त्वाऽनुपपत्तिस्तदवस्थैवेति वाच्यम्। भाष्यकृतैव तत्समाधानात्। तथाच भाष्यम्–"नैतत् क्रियापौर्वकाल्यं, किं तर्हि कर्तृपौर्वकाल्यमेतत्। पूर्वमसौ भुक्त्वाऽन्येभ्यो व्रजितृभ्यः पश्चाद् व्रजति" इति अन्येभ्यो भोक्तृभ्यः पूर्वं भुक्त्वाऽपरेभ्यो गन्तृभ्यः पश्चाद् व्रजतीत्यर्थे साधनाऽन्तरक्रियापेक्षे पौर्वकाल्यमादाय "विभाषाग्रह" (पा०सू० ३।१।१४३) इति क्त्वः सम्भव इति तदाशयः।

नव्यास्तु–'पूर्वकाल' इति कर्मधारयः। 'भूत' इति तु नोक्तम्। पर्य्यायशब्दत्वात् तेन रूपेण बोधाननुभवाच्च। तथाच समानकर्त्तृकयोरर्थयोर्मध्ये पूर्वकालविशिष्टार्थवृत्तिधातोः क्त्वेति सूत्रार्थः। तथाच पूर्वकालः क्त्वार्थो धात्वर्थप्रकार एव। अत एव समानकर्त्तृकत्वेन पूर्वं भुङ्क्ते पश्चाद् व्रजतीत्यत्र क्त्वाप्रत्ययमाशङ्क्य स्वशब्देनोपादितत्वान्नेति परिहृतं भाष्ये। पूर्वशब्दस्य पूर्वकालोऽर्थो, न तु धातोस्तत्र वृत्तिरिति तदर्थो, न तु 'उक्तार्थानामप्रयोग' इति। अत एव "इह कस्मान्न भवत्यास्यते भोक्तुम्" इत्यग्रिमशङ्कासङ्गतिः। अन्यथा फलार्थकतुमुना पूर्वकालत्वस्यासिक्रियायां द्योतनात् तदसङ्गतिः स्पष्टैव। पूर्वकालत्वस्य ततोऽप्रतीतौ तु कथं क्त्व आपादानं वासरूपन्यायेन लटाऽसाधितमित्यन्यत्॥ एवञ्च षष्ठ्याः सम्बन्ध वाचकत्ववदमीषामपि सम्बन्धवाचकत्वं सुवचमित्याहुः।

अत्रेदं चिन्त्यम्–ननु धातोस्तत्र वृत्तिरित्यर्थे, आस्यते भोक्तुमित्यग्रिमशङ्कानुपपत्तेरुपष्टम्भकत्वेनोपन्यसनं शिथिलम्। यतः कैयटमतेऽप्यस्यार्थे पूर्वकालसम्बन्धित्वस्य केनचिदनभिधानेन "उक्तार्थानामप्रयोगः" इति न्यायानवतारादाशङ्कोत्थानसम्भवात्। प्रत्ययवाच्यस्य कृत्प्रत्ययस्थले धात्वर्थविशेष्यताया नव्यानामपि सम्मतत्वेन पूर्वकालः क्त्वाऽर्थो धात्वर्थप्रकार एवेति पूर्वग्रन्थनिरोधश्च। न च द्योतकत्वाऽभ्युपगमादुक्तसङ्गतिः। षष्ठ्याः सम्बन्धवाचकत्ववदमीषामपि सम्बन्धवाचकत्वमित्युत्तरग्रन्थविरोधात्। न च तदपि सुवचम्। समानकर्त्तृकत्वादीनां वाच्यतायाः सूत्रादलाभात्। तस्मात् कर्मप्रवचनीयवत् क्रियासम्बन्धविशेषकत्वमेव क्त्वादीनामिति कैयटोक्तमेव सम्यगिति।

मतान्तरं दूषयितुमुपन्यस्यति–*यत्त्विति*। *क्त्वावाच्यमिति*॥ "समानकर्त्तृकयोः पूर्वकाले" (पा०सू० ३।४।८१ ) इत्युभयोः पदयोर्बहुव्रीहित्वाविशेषेण पूर्वकालस्य वाच्यत्वमितरार्थस्य द्योत्यत्वमिति वैषम्ये बीजाभावादिति। वैषम्ये बाधक-

परीक्षा

नैतत्—क्रियापौर्वकाल्यम्-किन्तर्हि कर्त्तृपौर्वकाल्यमेतत्, पूर्वं त्वसौ भुक्त्वाऽन्येभ्यो भोक्तृभ्यस्ततः पश्चाद् व्रजतीति, अन्येभ्यो व्रजतृभ्यः" इति भाष्यघटकप्रतीकेत्यर्थः।

विषयभावप्रयोगघटकयत्किञ्चित्पदबोध्ये क्त्वाप्रत्ययस्य वाचकत्ववादिमतन्निरस्य-

ति तृतीयाप्रसङ्गश्च । नचाख्यातेन कर्तुरभिधानान्न सेति वाच्यम् । भोजनक्रियाकर्त्तुरभिधानेऽपि पाकक्रियाकर्त्तुस्तदभावात् । अनभिहिते भवतीति पर्युदासाश्रयणात् ।

अत एव 'प्रासादे आस्ते' इत्यत्र प्रसादनक्रियाधिकरणस्याभिधानेऽप्यस्तिक्रियाधिकरणस्यानभिधानात् सप्तमीति भाष्ये स्पष्टम् । तस्मात् क्त्वाप्रत्ययस्य कर्तृवाचित्वमावश्यकमिति । तन्न । सूत्रात्तस्य वाच्यत्वालाभात् । समानकर्तृकयोः क्रिययोः पूर्व्वकाले क्त्वा इत्येव तदर्थात् । अन्यथा समानकर्त्तरीत्येव सूत्रन्यासः स्यात् । तृतीयापादानं तु आख्याताऽर्थक्रियायाः प्रधानभूतायाः कर्तुरभिधानात् प्रधानानुरोधेन गुणे कार्य्यप्रवृत्तेर्न सम्भवति ।

---

दर्पणः

आह—*अन्यथेति* ॥ तस्य क्त्वाप्रत्ययावाच्यत्वे इत्यर्थः । *तृतीयाप्रसङ्गश्चेति* ॥ क्त्वाप्रत्ययेन कर्तुरनभिधानादिति भावः ॥

ननु "अनभिहित" इति सूत्रे नञः प्रसज्यप्रतिषेधाऽर्थकतया प्रकृते कर्तुराख्यातेनाभिधानान्न तृतीयापत्तिरित्याशङ्क्य निराचष्टे—*न चेति* ॥ *अनभिहित इति* ॥ न प्रसज्यप्रतिषेधो, वाक्यभेदादिदोषात् । न चानुपपत्त्या तत्स्वीकारः । वक्ष्यमाणभाष्यविरोधात् । तथाचैकेनाभिधानेऽप्यन्येनानभिधानात् तृतीयापत्तिरित्यभिप्रायेणाह—*पाकक्रियाकर्तुरित्यादि* ॥ *तदभावादिति* ॥ अभिहितभिन्नत्वादित्यर्थः ॥ *अत एवेति* । तत्सूत्रस्थनञः पर्युदासार्थकत्वादेवेत्यर्थः ॥ भाष्ये इत्यस्यानभिहितसूत्रस्थे इति शेषः ॥ *तस्येति* ॥ समानकर्तृकत्वस्येत्यर्थः । द्विवचनप्रकृतिबहुव्रीहिणा समानकर्तृकत्वस्य धात्वर्थविशेषणतैव प्रतीयते, न तु विधीयमानत्व इति भावः ।

तदेव विशदयति—*अन्यथेति* । एतत्सूत्रस्य कर्तृशक्तिप्रतिपादकत्वे इत्यर्थः ॥ *समानेति* । तदुपादानाच्च कर्तृद्वयस्यैव लाभः । *न्यासः स्यादिति* । "कर्त्तरि कृत्" इतिवत् । वस्तुतस्तु न तथा सम्भवति । "कर्त्तरि कृत्" ( पा० सू० ३।३।६७ ) इति सूत्रेणैव गतार्थत्वाद्, "अव्ययकृतो भावे" इति वार्त्तिकविरोधाच्चेति भावः । उक्तापत्तिं निरस्यति—*तृतीयापादनं त्विति* । *आख्यातार्थक्रियाया इति* ।

परीक्षा

ति-*यस्त्विति* । *अन्यथा*-क्त्वो वाचकत्वाभावे । *न सा*-न तृतीयाः । *कर्त्तुरिति* कर्तृत्वविशिष्टस्येत्यर्थः । *तदभावादिति*—अभिधानाभावादित्यर्थः । एतेन शक्तिभेदेनाभिधानानभिधानव्यवस्था बोधिता ।

*अत एव*—लाघवात्पर्य्युदासाश्रयणादेव । *प्रासाद इति* । प्रकर्षेण सीदत्यस्मिन्नित्यधिकरणे घञ् । *कर्त्तृवाचित्वमिति* । नचैवम् "पक्त्वा चैत्र' इत्यत्रैव कर्त्तुर्विशेष्यत्वापत्तिरिति वाच्यम्, व्युत्पत्तिवैचित्र्येण प्रत्ययवाच्यस्यापि क्त्वाप्रत्ययप्रयोगे तस्य विशेषणतास्वीकार इत्याशयात् । *सूत्रात्*-"समानकर्त्तृकयोः" इति सूत्रात् । अलाभमुपपादयति-*समानेति*-निर्धारणे षष्ठीति भावः । *अन्यथा*—निर्धारणषष्ठ्यभावे । पूर्वोक्तं परिहरति-*तृतीयेति* ।

उक्तञ्च वाक्यपदीये—

प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक्।
शक्तिर्गुणाश्रया तत्र प्रधानमनुरुद्ध्यते॥
प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते।
यदा गुणे तदा तद्वदनुक्तापि प्रतीयते॥ इति॥

किञ्चान्यथा कर्म्मणोऽपि क्त्वार्थतापत्तिः। 'पक्त्वौदनो मया

---

दर्पणः

क्रियाद्वयनिरूपितकर्तृशक्त्योरनेकत्वेऽपि प्रधानतिङन्तार्थक्रियानिरूपितकर्त्तृशक्तेराख्यातेनाभिधाने तत्र कृदन्तार्थक्रियानिरूपिततत्तच्छक्तेरनभिहिताया अप्यभिहितत्वातिदेशस्य अनभिधाने त्वनभिहितत्वातिदेशस्य चोक्तभाष्यप्रामाण्येनाऽभ्युपगमान्न तृतीयापत्तिः प्रकृते इति भावः।

*प्रधानेतरयोरिति*। गुणप्रधानक्रियानिरूपितशक्तिद्वयं यत्रैकस्मिन् द्रव्ये तत्र गुणक्रियानिरूपितशक्तिः प्रधानक्रियानिरूपितशक्तिधर्ममनुरुणद्धीत्यर्थः। उक्तातिदेशेऽपि तत्सम्मतिमाह—*प्रधानविषयेति*। प्रधानः विषयो निरूपकं यस्याः सा शक्तिर्यदा प्रत्ययेन तिङाऽभिधीयते, तदा गुणक्रियावाचकधातूत्तरप्रत्ययेनाऽनभिहिताप्यभिहितवत् प्रतीयत इत्यर्थः। इदमुपलक्षणम्। अभिहिताया अपि अनभिहितवत्प्रतीतेः। 'तत्र प्रासादे आस्त' इत्युदाहर्तव्यम्। अवश्यं चेत्थमभ्युपेतव्यम्। अन्यथा कर्त्तुः क्त्वार्थत्वाभ्युपगमेनोक्तस्थले तृतीयापत्तिवारणेऽपि, 'पक्त्वौदनो मया भुज्यते' इत्यत्रौदनपदोत्तरद्वितीयापत्तिर्दुर्वारा। तत्र पाकक्रियानिरूपितकर्मत्वशक्तेः कृतानभिधानादुक्तरीतेरसम्भवादित्याह—*किञ्चेति*।

अत्रेदम्बोध्यम्—यदौदने पाकक्रियानिरूपितकर्मत्वस्यैव शाब्दविषयत्वमभिप्रेतं, न तु प्रधानक्रियानिरूपितकर्मत्वस्यापि तदौदनं पक्त्वा भुज्यते इत्यपि साधु। ओदनस्य भोजनकर्मताया आर्थिकत्वात्। यदा तूभयकर्मत्वस्यैव शाब्दविषयत्वमभिप्रेतं,

परीक्षा

*प्रधान इति*, *क्रिययोरिति*–निरूपितत्वं सप्तम्यर्थः। *द्रव्यस्येति*। निष्ठत्वं षष्ठ्यर्थः। *शक्तिः*–कर्मत्वकर्त्तृत्वादिः। *गुणाश्रया*–गुणीभूतक्रियानिरूपिता। अनुरोधन्दर्शयति—*प्रधानविषयेत्यादिना*। *गुणे*—गुणीभूतक्रियायाम्। सप्तम्यर्थो निरूपितत्वम्—तस्यानुक्तेत्यत्रान्वयः। एवञ्च प्रधानम्प्रधानीभूता क्रिया विषयो-निरूपकं यस्या एतादृशी शक्तिः कर्मत्वादिर्यदा प्रधानक्रियाप्रतिपादकधातूत्तरजाततिङा कृता वाभिहिता भवति, तदा गुणभूतक्रियानिरूपिताशक्तिरनभिहितापि अभिहितवत्प्रकाशते। तेनाप्रधानक्रियानिरूपितशक्त्यभिधायकोऽनभिहिताधिकारीयः प्रत्ययो नेति सिद्धम्। अत एव 'पक्त्वौदनो भुज्यत' इत्यत्र कदापि द्वितीया न भवति।

तदेवाह–*किञ्चेति*। *अन्यथा*–"प्रधानेतरयोः" इति न्यायानङ्गीकारे। यदा तु गुणीभूतक्रियानिरूपितकर्मत्वस्यैव विवक्षा प्रधानक्रियाकर्मत्वाविवक्षा, तदा 'पक्त्वोदनं भुज्यते' इति भवत्येव। एवञ्च "प्रधानेतरयोः" इति न्याय उभयनिरूपितकर्मत्वस्य युगपद्विवक्षायां द्रष्टव्यः। किञ्चात्र शक्तिरिति सामान्यतोऽभिधानेन यत्र

भुज्यत' इत्यत्र द्वितीयायाः प्रकारान्तरेणावारणादित्यास्तां विस्तरः ॥ ६० ॥

इति वैयाकरणभूषणसारे क्त्वाद्यर्थनिर्णयः ॥ १२ ॥

---

दर्पणः

तदौदनपदाद् द्वितीया असाध्वेव। उक्तव्यवस्थितेः। परन्त्वाख्यातवाच्यक्रियायाः प्राधान्यात् तां प्रत्येव क्त्वान्तोपस्थिताः सर्वाः क्रिया गुणीभवन्ति; न तु तासां पर-

परीक्षा

प्रधानक्रियानिरूपितशक्त्यभिधायिनी। अत एव 'मूलकेनोपदंशं भुङ्क्ते' इत्यादौ तृतीयैव नतूपदंशनक्रियाकर्मत्वाभिधायिनी द्वितीया मूलकपदादित्यपि बोध्यम्।

इदमत्र बोध्यम्—यत्राप्रधानीभूताः क्रियाः तत्र तासामुक्तसम्बन्धेन प्रधानक्रियायामेव विशेषणता, न तु परस्परं गुणप्रधानभाव इति तत्तद्वाचकप्रकृतिकक्त्वाभ्यामिति यतः प्रयोगो, नतु यासां पूर्वकालिकत्वं तद्वाचकप्रकृतिकक्त्वान्तस्य पूर्वमेवोत्तरकालिकवाचकानाम्परत्रैव प्रयोग इति नियमः, तेन 'भुक्त्वा स्नात्वा पीत्वा गत' इति 'स्नात्वा भुक्त्वा पीत्वा गत' इति च भवति। तासाम्परस्परमसम्बन्धे मानन्तु "गुणानाञ्च परार्थत्वात्" इति न्याय एव। यत्र तु समानकर्तृकक्रियावाचकानामप्रयोगः, क्त्वान्तस्य च प्रयोगो दृश्यते तत्र योग्यप्रधानक्रियावाचकाध्याहारः, यथा—

अवजानासि मां यस्मादतस्ते न भविष्यति।
मत्प्रसूतिमनाराध्य प्रजेति त्वां शशाप सा॥

इत्यत्रानाराध्येत्यनन्तरं स्थितस्येत्यस्य। एवमेव—"प्रातः काले शिवन्दृष्ट्वा निशि पापं व्यपोहति' इत्यादावपि द्रष्टव्यम्"। समानकर्तृकत्वं क्त्वाप्रत्ययवाच्यमिति वादिनो "अव्ययकृतो भावे" इति वार्तिकविरोधोऽपि दोषः। यत्र भावे तुमुन्प्रत्ययस्तत्रापि यथोक्तसम्बन्धघटितसामानाधिकरण्यसम्बन्धेन प्रधानक्रियायाङ्गुणक्रियायान्तुमुन्नन्तप्रतिपाद्या या विशेषणता परन्तूद्देश्यत्वमपि सम्बन्ध इति। अत एव 'शिवन्द्रष्टुं याति'इति वाक्याच्छिवकर्मकभविष्यद्दर्शनोद्देश्यकन्दर्शनविशिष्टं यानमिति बोधः। ण्वुलन्तस्य "तुमुन्ण्वुलौ"इति सूत्रविहितस्य प्रयोगेऽप्येवमेव बोधः। 'मुखं व्यादाय स्वपिति' अत्र क्त्वाप्रत्ययस्य प्रागभावे शक्तिः कर्त्तरि निरूढलक्षणा। प्रागभावश्च-समानकालिकत्वसम्बन्धेन प्रकृत्यर्थस्य विशेष्यः, प्रतियोगितासम्बन्धेन तूत्तरक्रियायां विशेषणम्, क्त्वारूप्रकृत्यर्थक्रियाकर्त्तर्यपि विशेषणम्। कर्त्ताऽप्युत्तरत्र क्रियायां स्वनिष्ठकर्तृत्वनिरूपकत्वसम्बन्धेन विशेषणम्। कर्तृत्वं च-यथायथं व्यापारवत्वाश्रयत्वकृतिमत्वप्रतियोगित्वरूपं बोध्यम्।

एवञ्च 'भुक्त्वा व्रजति चैत्रः' 'इति वाक्याद्भोजनकर्तृकर्त्तकं भोजनकालिकप्रागभावप्रतियोगिकं व्रजनमिति बोधः। एवञ्च मुहूर्त्तादिव्यवधानेऽपि 'भुक्त्वा गतः' इत्यादिप्रयोगस्योपपत्तिः। नचैवं स्वीयभोजनपूर्ववर्त्तिपुरुषान्तरीयभोजनोत्तरवर्तियद्गमनन्तदादाय 'भुक्त्वा गच्छति चैत्रः' इति प्रयोगं मैत्रः कुर्य्यादिति वाच्यम्, क्त्वाप्रत्ययार्थयोर्विशेष्यतया भाने प्रकृत्यर्थतावच्छेकरूपेणैकक्रियान्वयित्वस्य व्युत्पत्तिसिद्धस्य हेतुत्वात्। तथा च प्रकृत्यर्थतावच्छेदकधर्मावच्छि-

दर्पणः

स्परविशेष्यविशेषणभावः। "गुणानां च परार्थत्वात्" इतिन्यायात्। एवञ्च 'स्नात्वा पीत्वा भुक्त्वा व्रजति' 'भुक्त्वा स्नात्वा व्रजति' इत्यविशेषेण प्रयोगाः।

परीक्षा

न्नैकक्रियाप्रकारतानिरूपितक्त्वार्थद्वयविषयकशाब्दबोधे तत्तद्धातूत्तरक्त्वाज्ञानं कारणमिति कार्यकारणभावः। आश्रयत्वरूपकर्तृत्वन्तु 'रथे स्थित्वा गच्छति'इत्यत्र प्रतीयते। व्यापारवत्वरूपन्तु-तत्काष्ठमोदनम्पक्त्वा ते तमेनम्'चइत्यत्र प्रतीयते। प्रतियोगित्वरूपस्य कर्तृत्वस्याग्निना काष्ठम्प्रणश्य भस्म भवतीति। नच यत्र 'एकमोदनम्पक्त्वा मैत्रेणौदनान्तरम्भुज्यते'तत्रापि 'ओदनं पक्त्वा भुज्यते मैत्रेण' इति प्रयोगापत्तिः।। इष्टापत्तिस्तु न। 'ओदनम्पक्त्वौदनान्तरं भुज्यत' इति प्रयोगस्यैवेष्टत्वादिति वाच्यम्, कर्मप्रत्ययसमभिव्याहारे धातुद्वयस्य तद्व्यक्तिकर्मत्वविशिष्टस्वार्थतावच्छेदकरूपेण क्रियाव्यक्त्यभिधायकत्वस्य व्युत्पत्तिसिद्धत्वात्। अत एव संयुज्धात्वर्थकर्तृत्वस्याश्रयत्वरूपतया यत्र घटोऽङ्गुल्या संयुज्य तत्संयोगनाशानन्तरं घटेन संयुक्तो भवति तत्र घटपटसंयोगस्याङ्गुलीयपटसंयोगस्य घटाश्रितत्वेन घटस्यापि तत्र कर्तृत्वेन घटोङ्गुल्यां संयुज्य पटेन संयुज्यत इति प्रयोगापत्तिरिति निरस्तम्। एतादृशप्रयोगस्थलेऽङ्गुल्यनुयोगिकत्वविशिष्टघटप्रतियोगिकत्वविशिष्टसंयोगव्यक्तिसमानकालिकत्वस्य प्रागभावे सत्वं वक्तव्यम्। तच्च बाधितमिति नैतादृशः प्रयोगः।

प्रागभावश्च—घटादिकपालतत्संयोगादिघटितस्वसामग्रीवशादुत्पन्नस्य पुनरुत्पादापत्तिवारणाय स्वीक्रियते। यदि तु कार्योत्पत्तिम्प्रति समवायादिना कार्य्यस्य प्रतिबन्धकत्वकल्पनेनोत्पन्नस्य पुनरुत्पादापत्तिर्वारयितुं शक्यत इति प्रागभावो न स्वीकर्त्तव्य इत्युच्यते, तदा ध्वंस एव क्त्वाप्रत्ययार्थोऽस्तु। तत्र प्रकृत्यर्थः प्रतियोगितासम्बन्धेन विशेषणम्। तस्य तु स्वप्रतियोगिक्रियासमानकर्तृकत्वस्वाधिकरणतात्पर्य्यविषयसमयोत्पन्नत्वोभयसम्बन्धेन समभिव्याहृतक्रियाम्प्रति विशेषणत्वमित्यङ्गीकार्यम्। एवञ्च 'चैत्रो भुक्त्वा व्रजति'इत्यादिभ्यो भोजनध्वंसविशिष्टचैत्राभिन्नकर्तृका व्रजनक्रियेति शाब्दबोधः।

नन्वेवमपि क्त्वाप्रकृतिप्रतिपाद्य यत्किञ्चित् क्रियायाः प्रतियोगितया ध्वंसम्प्रति विशेषणत्वम्, क्रियासामान्यस्य वा। आद्ये—'काशीं गत्वा काशीं रमते' इति प्रयोगापत्तिः अद्यक्रियाध्वंसवैशिष्ट्यस्य च रमक्रियायां सत्वात्। अन्त्ये-'स्थित्वा पश्यति पुस्तकम्, 'स्थित्वा जक्षिति जेमनम्' इत्यादौ चानुपपत्तिः। स्थितिक्रियाया दर्शनोत्तरमदनोत्तरञ्च सत्वेन स्थितिक्रियासामान्यसामान्यप्रतियोगिकध्वंसवैशिष्ट्यस्य दर्शनयोरभावादिति चेद्? तर्हि क्त्वाप्रत्ययस्य पूर्वकाल एव शक्तिः। शक्यतावच्छेदकञ्च कालत्वमेव, तत्र प्रकृत्यर्थस्य कालिकसम्बन्धावच्छिन्नाधारतासम्बन्धेनान्वयः। तस्य कालस्य तु स्वध्वंसाधिकरणक्षणोत्पत्तिकत्वसम्बन्धेन समभिव्याहृतपदोपस्थाप्यक्रियान्तरम्प्रति विशेषणता बोध्या। कालश्च-पूर्ववत्तात्पर्य्यविषयघट्यादिरूपो विवक्षितः। कालविशेष्यस्य वाच्यत्वसूचनाय "समानकर्तृकयोः" इति सूत्रे पूर्वकाल इत्युपात्तम्। चैत्रकर्तृकभोजनाधिकरणकालानन्तर्य्यस्य मैत्रकर्तृक-

दर्पणः

तुमुनस्तादर्थ्यरूपमुद्देश्यत्वमपि द्योत्यम्। "क्रियार्थायां क्रियायाम्" इत्युक्तेः। तन्निष्कर्षश्च पूर्ववदेव तुम्प्रकृत्यर्थोपपदार्थयोस्तादर्थ्यवत् समानकर्तृकत्वादिकमपि सम्बन्धः। तथाच "हरिं द्रष्टुं याति" इत्यतो हरिकर्मकं भविष्यद्दर्शनोद्देश्यकं दर्शनकर्तृकर्तृकं यानमिति शाब्दधीः। अनयैव दिशैधानाहारको व्रजतीति बोध ऊहनीयः॥६०॥

इति भूषणसारदर्पणे क्त्वाद्यर्थनिरूपणम्॥ १२ ॥

परीक्षा

गमनेऽपि सत्वेन 'भुक्त्वा गच्छति मैत्रः' इति प्रयोगापत्तिः। अतो भोजनक्रियायाः स्वसमानकर्तृकत्वसम्बन्धेन क्रियान्तरम्प्रति विशेषणत्वम्, क्त्वाप्रकृत्यर्थक्रियाया द्वेधाभानमित्याहुः, तन्न। "अव्यय कृतोभावे" इति सिद्धान्तविरोधात् ॥ ६० ॥

॥ इति श्रीमद्भूषणसारटीकायाङ्क्त्वाद्यर्थनिर्णयविवरणम् ॥ १२ ॥

# अथ स्फोटनिरूपणम् ॥

दर्पणः

अथ स्फोटनिरूपणम् ।

इत्थं व्याकरणादिना गृहीतशक्तिकपदसमुदायादनासन्नादगृहीतार्थतात्पर्य्यकादयोग्यादनाकाङ्क्षाच्च शाब्दबोधादर्शनादासत्त्यादिकमपि शक्तिज्ञानजन्यपदार्थोपस्थित्या बोधे जननीये सहकारि । आसत्तिश्च–प्रकृतबोधानुकूलपदाव्यवधानम् । अस्ति च "पर्वतो वह्निमान्" इत्यत्र तादृशपदाव्यवधानम्, न तु "गिरिर्भुक्तं वह्निमान् देवदत्तेन" इति, न ततो बोधः । अत एव "स्थाल्यां तण्डुलं पचति" इत्यत्र तण्डुलकर्मकस्थाल्यधिकरणकक्रियेति बोधेनाऽनासन्नता । तद्घटकसर्वेषां पदानां तादृशबोधानुकूलत्वात् । स्थाल्यां पचतीत्येतावन्मात्रबोधे तु तदनासन्नमेव । श्लोकादौ तु योजनावाक्यादेव बोधः, तद्भ्रमेणाऽनासन्नाद् बोधदर्शनात्तज्ज्ञानमेव हेतुरिति–सम्प्रदायः ।

नव्यास्तु—"मौनिश्लोकादन्वयबोधानुप्रसङ्गान्नोक्ताव्यवधानमासत्तिः । आकाङ्क्षादिसत्त्वे तात्पर्य्यज्ञाने च सति व्यवहितादव्यवहिताच्च बोधदर्शनात्तज्ज्ञानविलम्बेन शाब्दाविलम्बाच्च, किन्त्विदं पदमेतत्पदेन सम्भूयाऽन्वयबोधं जनयत्वित्याकारकपदतात्पर्य्यरूपाभिसन्धापयित्रिच्छा सा, न तु वक्त्रिच्छा । मौनिश्लोकादौ दोषतादवस्थ्यात् । शुकवाक्ये तु भगवत्तात्पर्य्यमादायैव गतिरित्याहुः ।

वस्तुतस्तु सत्यर्थतात्पर्य्यज्ञाने पदतात्पर्य्यज्ञानविलम्बेन शाब्दबोधाविलम्बाद् वृत्त्या पदजन्यपदार्थानामव्यवधानेनोपस्थितिरेवासत्तिः–स्वरूपसत्यन्वयबोधे हेतुः । न हि पदार्थानामनुपस्थितान्वयधीः केनाप्यनुभूयते इति । अर्थतात्पर्य्यं त्विदं पदमेतस्मिन्नर्थेऽपरपदार्थान्वयं बोधयत्वित्यभिसन्धापयित्रिच्छा । संवादिशुकवाक्ये तु भगवत एव सा । विसम्वादिनि तु शिक्षयितुरेव । अस्य संशये व्यतिरेकनिश्चये चान्वयबोधात्तद्भ्रमेणान्वयाबोधदर्शनाच्च तज्ज्ञानमप्यन्वयबोधे हेतुः । अधिकमग्रे वक्ष्यते ।

शाब्दबोधे योग्यताया ज्ञानं कारणमिति बहवः । सा चैकपदार्थेऽपरपदार्थस्य यादृशसंसर्गवत्वं तादृशसंसर्गवत्त्वैव प्रकृतशाब्दबोधविषयसंसर्गवत्वमिति यावत् । अस्ति च 'पयसा सिञ्चति' इत्यत्र सेके पयःकरणकत्वस्य संसर्गः । अत एव करकाऽभिप्रायप्रयुक्त—'पयसा सिञ्चति' इति वाक्यं न योग्यम् । पयःपदार्थकरकायां सेककरणत्वाभावात् । यादृशेति विशेषणाच्च 'आकाशः शब्द' इति वाक्यं समवायसंसर्गमादाय नाभेदाऽन्वये योग्यम् । अयोग्येऽप्येतद्भ्रमेणान्वयदर्शनादेतज्ज्ञानस्यापि हेतुता ।

ननु संसर्गस्य वाक्यार्थत्वेन तद्बाधात् प्रागनुपस्थित्या कथं तद्बोधस्य तत्र तत्त्वमिति चेद् ? न । योग्यताज्ञानस्य शाब्दबोधे निश्चयत्वेन हेतुतां ब्रूमो, येनोक्तदोषोऽवकाशमासादयेत् । किन्तु संशयनिश्चयसाधारणज्ञानत्वेन । तस्य च न दौर्लभ्यम् । 'पयसा सिञ्चति' इत्यादौ सेकः पयः करणको न वेति संशयात्मकस्य भूतले घटोऽस्तीत्यादौ च प्रात्यक्षिकनिश्चयरूपस्याऽपि तत्प्राक्सौलभ्यात् । स्वजन्यशाब्दबोधस्यैवान्वयबोधप्रतिबन्धकतयोक्तबाधात्तत्सम्भवात् ।

दर्पणः

केचित्तु लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यतद्वत्ताबुद्धित्वावच्छिन्नं प्रति तदभाववत्ताज्ञानाभावस्य हेतुतया शाब्दबोधस्यापि तत्कार्यतावच्छेदकाक्रान्ततया अयोग्यताज्ञानसत्त्वे तदभावादेव शाब्दबोधवारणे कृतं योग्यताज्ञानस्य तद्धेतुतया। कार्यतावच्छेदककोटौ प्रत्यक्षान्यत्वनिवेशेनैव लौकिकप्रत्यक्षनिरासेऽपि घटादृयुपनीतभानसङ्ग्रहाय तद्विहायाजन्यान्तद्वयनिवेशः।

नच बाधनिश्चयाभावत्वापेक्षया संशयनिश्चयसाधारणयोग्यताज्ञानत्वेन हेतुत्वे लाघवमिति वाच्यम्। स्यादेवम्, यदि बाधाभावस्य शाब्दत्वं कार्य्यतावच्छेदकं कल्प्येत, किन्तु शाब्दबोधस्य बाधाभावकार्य्यतावच्छेदकाक्रान्ततया तद्दशायां तं प्रतिषेधामः। अत एव घटोऽभिधेय इत्यादावुक्तबाधाप्रसिद्धावपि न क्षतिः। तत्संसर्गावच्छिन्नतत्प्रकारकतद्विशेष्यकबुद्धित्वस्यैव तत्कार्य्यतावच्छेदकत्वात्। घटाभावेऽभिधेयत्वप्रतियोगिकत्वभ्रमदशामादाय तदभावस्यापि प्रसिद्धेश्चेत्याहुः।

अत्र वदन्ति-न हि तद्विशिष्टबुद्धिसामान्ये बाधाभावः कारणं, किन्तु बाधावतारे इच्छासत्त्व आहार्य्यप्रत्यक्षोदयादिच्छाया उत्तेजकत्वानुरोधेन प्रत्यक्षस्यैव प्रतिबध्यतावच्छेदकत्वावश्यकतयोपनीतभानसाधारणप्रतिबध्यतायाः शाब्दबोधेऽसम्भवात्। न च तथाप्यनुमितिसाधारणप्रतिबध्यतायाः शाब्दबोधसाधारण्यं शङ्क्यम्। तत्साधारणस्य प्रत्यक्षान्यज्ञानत्वस्य प्रतिबध्यतावच्छेदकत्वे प्रत्यक्षान्यत्वज्ञानत्वयोर्मिथो विशेष्यविशेषणभावे विनिगमनाविरहेणानेकप्रतिबध्यप्रतिबन्धकभावापत्तेः। प्रतिबध्यतावच्छेदकगौरवापत्तेश्चानुमितित्वस्यैव तदवच्छेदकत्वस्याङ्गीकरणीयत्वात्। अतो बाधाभावस्य स्वातन्त्र्येणैव शाब्दबोधं प्रति हेतुता वाच्या। तत्र चोक्तगौरवेण संसर्गरूपयोग्यताज्ञानस्यैव हेतुत्वमुचितम्।

अपि च शाब्दबोधे तद्वदन्योन्याभावतदभावव्याप्यवत्ताज्ञानादीनां प्रतिबन्धकत्वकल्पनाऽपेक्षया लाघवाद् योग्यताज्ञानस्यैव हेतुत्वमुचितम्। किञ्च 'पयसा सिञ्चति' इति शाब्दसामग्रीकाले सेकः पयः करणकत्वाभाववानिति मानसवारणाय तत्र शाब्दबोधसामग्र्याः प्रतिबन्धकत्वकल्पने तत्र योग्यताज्ञानस्यावश्यकतया विपरीतज्ञानोत्तरप्रत्यक्षे विशेषदर्शनस्य हेतुतया तदभावादेव तद्वारणात्। विशेषदर्शनसत्वे तु तदभावव्याप्यवत्तानिर्णयरूपप्रतिबन्धकत्वेन शाब्दसामग्र्या एवाभावेन तथा मानसे इष्टापत्तेः।

नच निर्णयं प्रत्येव विशेषदर्शनस्य हेतुतया शाब्दसामग्रीकाले मानससंशयवारणाय शाब्दसाम्ग्र्याः प्रतिबन्धकत्वे कल्पनीये संशयत्वमनिवेश्य सेकत्वाऽवच्छिन्नविशेष्यकपयः करणत्वाऽभावप्रकारकमानसत्वमेव तत्प्रतिबध्यतावच्छेदकमिति वाच्यम्। सेकत्वावच्छिन्नविशेष्यकपयःकरणकत्वप्रकारकमानसे शाब्दसामग्रीप्रतिबन्धकत्वान्तरस्य कल्प्यतया तेनैव संशयवारणे तत्संशये प्रतिबन्धकत्वान्तरकल्पनात्।

न च विपरीतज्ञानोत्तरप्रत्यक्षे विशेषदर्शनस्य हेतुत्वसिद्धावेव योग्यताज्ञानस्य हेतुत्वसिद्धिरिति वाच्यम्। गुरुभूतशाब्दसामग्रीप्रतिबन्धकत्वकल्पनापेक्षया तद्धेतुत्वकल्पनाया एवोचितत्वात्। अनयैव दिशेष्टसाधनत्वादिज्ञानानां प्रवृत्तौ हेतुत्वसिद्धिरित्यलं परमतानुवर्णनेन।

घटः कर्मत्वमित्याधाराधेयभावेनान्वये निराकाङ्क्षवाक्याद् घटीया कर्मतेति बोधानुदयादाकाङ्क्षापि सहकारिणी। सा च यत्पदे यत्पदसमभिव्याहारप्रयुक्तं यद्विशेष्य-

सिद्धान्तनिष्कर्षमाह—

**वाक्यस्फोटोऽतिनिष्कर्षे तिष्ठतीति मतस्थितिः ॥**

---

दर्पणः

कयत्संसर्गकयत्प्रकारकबोधजनकत्वं तत्पदे तत्पदनिरूपिताकाङ्क्षा । यथा घटमानयतीत्यत्र घटपदे कर्मताविशेष्यकाधेयतासंसर्गकघटीया कर्मतेति बोधौपयिका अम् पदनिरूपिताकाङ्क्षा । तां विना घटः कर्मत्वमित्यत्र घटपदेन तादृशबोधाजननात् । एवं धातुपदेऽप्याख्यातनिरूपिताकाङ्क्षोह्या । अत एवानयनं कृतिरित्यत्र नानयनानुकूला कृतिरिति बोधः । धातावाख्यातासमभिव्याहारात् । इयमेवाकाङ्क्षा व्याकरणेन प्रतिपाद्यते । तथाच तत्तत्पदे तत्तत्पदपूर्वापरीभावरूपसमभिव्याहारः सेति फलति । तां विना यद्यप्युक्तानाकाङ्क्षे कर्मत्वपदेऽम्पदत्वभ्रमदशायां घटिया कर्मतेति बोधोदयेन तज्ज्ञानं हेतुर्न तु स्वरूपसती सा ।

न च जनितान्वबोधाद्वाक्यात् पुनरपि तादृशबोधापत्तिरुक्ताकाङ्क्षायास्तदानीमप्यविकलत्वादिति वाच्यम् । प्रकृतान्वयबोधसमानाकारबोधानुपहितत्वस्यापि स्वरूपसत आकाङ्क्षत्वेन जनितान्वयबोधस्थले तदभावेनापत्त्यसम्भवात् । तात्पर्य्यविषयत्वरूपप्रकृतत्वेन बोधविशेषणाच्च । बोधद्वयं जायतामिति तात्पर्य्यसत्त्वेन जनितान्वयद्वितीयबोधे निराकाङ्क्षत्वं स्वसमानेत्युक्तेश्च न जनितावान्तरबोधस्य महावाक्यार्थबोधे तत्त्वम् । अत एव ।

"अयमेति पुत्रो राज्ञः पुरुषोऽपसार्य्यताम्"

इत्यादौ राज्ञः पुरुषेण सहान्वयबोधजनने सर्वदा निराकाङ्क्षत्वम् ।

नव्यास्तु—यत्पदस्य यत्पदव्यतिरेकप्रयुक्ततात्पर्य्यविषयीभूतान्वयाननुभावकत्वं तेन सह तस्याकाङ्क्षा । 'अयमेति पुत्रो राज्ञः पुरुष' इति वाक्ये राजपुरुषसंसर्गप्रतीतीच्छयोच्चरिते राज्ञ इत्यस्य पुरुषेण साकाङ्क्षत्ववारणायान्वयबोधे तात्पर्यविषयत्वं विशेषणं पुरुषेणान्वये तात्पर्यसत्त्वे तु साकाङ्क्षत्वमपि । एवञ्च न तात्पर्य्यज्ञानस्य शाब्दबोधे पृथक् हेतुता । अगृहीतार्थतात्पर्य्यके निरुक्ताऽऽकाङ्क्षाज्ञानाभावादेवान्वयबोधापत्त्यभावादित्याहुः ।

एवञ्च शाब्दबोधात् प्रागवश्यक्लृप्ततत्तत्पदसमभिव्याहाररूपाकाङ्क्षयैवान्वयरूपवाक्यार्थभानोपपत्तौ वाक्यस्य तत्र शक्तिर्निष्प्रमाणेति नैयायिका वदन्ति ।

मीमांसकादयस्तु-वाक्यस्य तत्र लक्षणैव, न तु तत्र शक्तिरिति तन्मतं खण्डयितुं स्फोटनिरूपणमित्याशयेन मूलमवतारयति—*सिद्धान्तेति* । यद्वा ननूक्तं व्याकरणस्य प्रकृतिप्रत्ययेषु तत्तदर्थबोधकत्वशक्तिप्रतिपादकत्वमनुपपन्नम् । प्रकृतिप्रत्ययानां क्रमिकाशुविनाशिनानावर्णाऽऽत्मकतयाऽस्थिरत्वेन—अप्रत्यक्षतया तत्र शक्तिग्रहस्य कथमप्यसम्भवेन तत्प्रतिपादकस्यास्य शास्त्रस्याप्रामाण्यप्रसङ्ग इत्याशङ्कानिराकरणाय स्फोटनिरूपणमित्याशयेन मूलमवतारयन्नाह—

*सिद्धान्तनिष्कर्षमिति* । तथाचोपोद्धातसङ्गतिरत्रेत्यवधेयम् । तत्तन्मतनिरा-

परीक्षा

अथ स्फोटनिरूपणम् ।

नैयायिकमीमांसकमतं खण्डयितुमुपक्रमते-*सिद्धान्तेति* । वैयाकरणे सिद्धान्ते-

दर्पणः

करणं तु मूल एव सुव्यक्तम्। अष्टानां स्फोटानामाकरसिद्धतया तव्द्याावृत्त्यालाभ

परीक्षा

त्यर्थः। नैयायिका ह्येवमाहुः-शक्तम्पदम्, पदसमुदायो वाक्यमिति। एवञ्च प्रकृतिप्रत्यययोः स्वस्यार्थाभिधानसमर्थयोः समभिव्याहारात्प्रकृत्यर्थविषयतानिरूपितप्रत्ययार्थविषयताशालिबोधो जन्यते। तत्र प्रकृतिप्रत्यययोराकाङ्क्षाऽपि सहकारिणी। अन्यथा घटकर्मत्वमानयनं कृतिरिति शब्दसमुदायाधेयतासम्बन्धावच्छिन्नघटनिष्ठप्रकारतानिरूपितकर्मत्वनिष्ठविशेष्यताको निरूपकत्वसम्बन्धावच्छिन्नकर्मप्रकारतानिरूपितानयननिष्ठविशेष्यताकोऽनुकूलत्वसम्बन्धावच्छिन्नानयननिष्ठप्रकारतानिरूपितकृतिनिष्ठविशेष्यताकशाब्दबोधस्स्यात्। यत्पदे यत्पदसमभिव्याहारप्रयुक्तं यत्संसर्गकयत्प्रकारकयद्विशेष्यकबोधजनकत्वम्, तयोः पदयोः समभिव्याहारे ह्याकाङ्क्षा। अस्ति च सा 'घटमानयति'इत्यत्र। घटकर्मत्वमित्यादिप्रयोगे तु सा नास्तीत्यतो न घटीया कर्मतेति तद्रीत्या बोधः। एवं धात्वाख्यातयोरपि बोध्यम्। सैवाकाङ्क्षा व्याकरणेन प्रतिपाद्यते। सा चाकाङ्क्षा ज्ञाता सती शाब्दबोधहेतुर्नतु स्वरूपसती। यत्र घटकर्मत्वमिति केनचित्प्रयुक्तम्, तत्र घटपदोत्तरवर्तिकर्मत्वशब्दे अम्पदत्वस्य भ्रमो यदा, तदा तस्माद्घटीया कर्मतेत्यन्वयबोधो जायते, तस्यानुत्पत्तिप्रसङ्गात्। न चाकाङ्क्षाज्ञानाद् घटमिति शब्दाद् घटीयाकर्मतेति बोधे जातेऽपि तस्य कारणीभूतज्ञानस्य सत्वात्पुनस्तथान्वयबोधः स्यादिति वाच्यम्। तात्पर्य्यविषयान्वयबोधानुपहितत्वस्य स्वरूपतः शब्दनिष्ठस्य नियामकत्वात्। एकस्य बोधस्य तात्पर्य्यविषयत्वे तच्छाब्दबोधानुपहितत्वस्य तत्र सत्वाद्भवति बोधः। द्वितीयस्तु न भवति, एकज्ञाने जाते तदुपहितत्वविशिष्टस्य तस्य शब्दस्य सत्वात्। यत्र शाब्दबोधद्वयं जायतामितीच्छा तत्र बोधद्वयस्य तात्पर्यविषयतया बोधद्वयानुपहितत्वस्य प्रथमशाब्दबोधे जातेऽपि सत्वाद्भवत्येव द्वितीयो बोधः। एतन्मूलक एव 'सकृदुच्चरितः शब्दस्सकृदर्थं गमयति'इति साम्प्रदायिकानामुद्घोषः। न चावान्तरवाक्यार्थज्ञाने जनिते तेन महावाक्यार्थबोधो न स्यात्, तस्मिन्प्रकृतान्वयबोधानुपहितत्वाभावादिति वाच्यम्। तात्पर्यविषयान्वयबोधे स्वविषयत्वान्यूनानतिरिक्तवृत्तिविषयकत्वस्य विशेषणीयत्वात्। एवञ्च महावाक्यार्थबोधविषयत्वान्यूनानतिरिक्तविषयताकबोधानुपहितत्वस्यावान्तरबोधे जातेऽपि सत्वाद्भवत्येव महावाक्यार्थबोधः। एवञ्च—साकाङ्क्षत्वाच्छब्दसमुदायादेव शाब्दबोधस्योपपत्तिसम्भवान्न वाक्यस्य पदसमूहस्य पृथक् वाक्यार्थे शक्तिरिति। पदार्थतासंसर्गस्त्वनुपस्थित एव। आकाङ्क्षा तात्पर्य्यवशाद्भासते, नतु शक्तिस्तस्मिन्नर्थे कल्पनीयेति।

मीमांसकादयस्तु—संसर्गो वाक्यस्य लक्ष्योऽर्थ इत्येवमाहुरिति, तदप्यसङ्गतमिति ध्वननाय सिद्धान्तपदोपादानम्, किञ्च–व्याकरणप्रक्रियया प्रकृतिप्रत्यययोस्तत्तदर्थबोधकत्वेन क्लृप्तयोः सत्वाच्छाब्दबोधोपपत्तौ; न पदेष्वित्यादेः सुबन्तस्य प्रकृतिप्रत्ययसमुदायस्य बोधकत्वमिति यन्मतन्तदप्ययुक्तम्। शब्दानामाशु विनाशितया समुदायेतादृशस्याभावादतः स्फोटस्य वाचकत्वमभ्युपेयम्। ते च स्फोटा नानाविधा यद्यपि सम्भवन्ति, तथापि निष्कर्षे सति वाक्यस्फोट एव स्वीकर्त्तुमुचित इत्याशयेन सिद्धान्तेन पूर्वोक्तरीत्या स्फोटस्य वाचकत्वव्यवस्था। तेन परमतस्य निराकरणम्भवति।

**साधुशब्देऽन्तर्गता हि बोधका न तु तत्स्मृताः ॥६१॥**

यद्यपि वर्णस्फोटः, पदस्फोटः, वाक्यस्फोटः, अखण्डपदवाक्यस्फोटौ, वर्णपदवाक्यभेदेन त्रयो जातिस्फोटा इत्यष्टौ पक्षाः सिद्धान्तसिद्धा इति वाक्यग्रहणमनर्थकं दुरर्थकञ्च, तथापि वाक्यस्फोटातिरिक्तानामन्येषामप्यवास्तवत्वबोधनाय तदुपादानम् । एतदेव ध्वनयन्नाह—*अतिनिष्कर्ष इति* ॥ इति मतस्थितिर्वैयाकरणानां महाभाष्यकारादीनाम् ।

तत्र क्रमेण सर्वान् तान् निरूपयन् वर्णस्फोटं प्रथममाह-*साधु-

---

दर्पणः

इत्याशयेनाह—*अनर्थकमिति* । निष्प्रयोजनकमित्यर्थः । *दुरर्थकमिति* । तदुपादाने वाक्यातिरिक्तानामसंग्रहापत्तेरिति भावः । समाधत्ते—*तथापीति* । अन्येषां वर्णादिपञ्चस्फोटानामित्यर्थः ।

तत्र स्फोटत्वं स्फुटत्यभिव्यक्तीभवत्यर्थोऽस्मादिति व्युत्पत्त्यार्थप्रकाशकत्वं, प्रकाशश्च ज्ञानम् । तथाचार्थनिष्ठविषयताप्रयोजकशक्तिमत्त्वं पर्य्यवस्यति । वर्णस्यैव तत्वाभ्युपगमे वर्णस्फोटः । पदादीनां तत्त्वाभ्युपगमे तु पदादिस्फोट इति व्यवहारः । *अवास्तवत्वेति* । वर्णस्फोटादीनामाकाङ्क्षानिवर्त्तकत्वाभावादवास्तवत्वं शास्त्रीयप्रक्रियानिर्वाहाय परं सिद्धान्ते तत्स्वीकारः । पारमार्थिकत्वं तु वाक्यस्फोटस्यैवेति भावः । *विप्रतिपत्तिरिति* । संशयीययावत्कोट्युपस्थापकं वाक्यमित्यर्थः । न तु संशयजनकं वाक्यमेव सा । परोक्षं ज्ञानं निश्चयात्मकमेवेति प्राचीनप्रवादेन संशयजनकत्वस्य वाक्ये असम्भवात् ।

वस्तुतस्तु संशयजनकवाक्यत्वमेव विप्रतिपत्तित्वम् । तत्तदभावसहचरितधर्मवद्धर्मिज्ञानस्येव समानाऽनेकेतिसूत्रेण विप्रतिपत्तेरप्याहत्यैव संशयहेतुत्वोत्कीर्त्तनादित्यवधेयम् । मूले असाधुशब्दान्तर्गतवर्णवाचकताविचारस्याप्रस्तुतत्वं मत्वाह—*साध्विति* । अत्र साध्वन्तर्गतवर्णत्वसामानाधिकरण्येन वाचकत्वादिसाधने तद्वाक्यस्य

परीक्षा

एवं सप्ताष्टानामेकस्यापि वाचकत्वकथनेन परो निरस्तो भवतीत्यादौ वाक्यस्फोटस्यैव कथने किं बीजमित्याशङ्कानिराकरणव्याजेन निष्कृष्टार्थं सूचयति-*यद्यपीत्यादिना* । स्फुटति प्रकाशते ज्ञातो भवत्यर्थोऽस्मादसौ स्फोट इति व्युत्पत्याऽर्थविषयकं यज्ज्ञानम्, तज्जनकतावच्छेदकशक्तिमत्वन्तत्वम् । तच्च प्रकृतिनिष्ठम्प्रत्ययनिष्ठञ्च सम्भवतीत्याशयेनाह—*वाक्यग्रहणमिति* । *अनर्थकम्*-प्रयोजनरहितम् । प्रत्युत तस्योपादानेऽन्येषामसङ्ग्रहापत्तिरूपो दोषोऽपीत्याह-*अनर्थकमिति* । *अन्येषाम्*-वर्णादिस्फोटानाम् । अत्र वर्णपदम्प्रकृतिप्रत्ययपरम्, अर्थस्मृतिजनकज्ञानविषयतावच्छेदकशक्तिमत्वम्प्रकृतिप्रत्यययोरेवेति वर्णस्फोटः, पदस्यैव तादृशशक्तिमत्वमिति पदस्फोट इति व्यवहारः । *अवास्तवत्वमिति* । प्रकृतिमात्रस्य प्रत्ययमात्रस्य वा निराकाङ्क्षप्रतिपत्तिमन्निकरत्वन्नेति तस्याऽवास्तवत्वमित्यर्थः । शास्त्रीयप्रक्रियानिर्वाहाय तस्य स्वीकार इति भावः ।

शब्द इति* । साधुशब्दान्तर्गता वाचका न वेति विप्रतिपत्तिः। विधिकोटिरन्येषां, नेति वैयाकरणानाम् । साधुशब्दे 'पचति' 'राम' इत्यादिप्रयुज्यमानेऽन्तर्गतास्तिब्विसर्गादय एव; बोधकाः—वाचकाः । तेषामेव शक्तत्वस्य प्राग्व्यवस्थापितत्वात् । ननु तैः स्मृता —लादय

दर्पणः

विप्रतिपत्तित्वाऽसम्भवः । नैयायिकैरपि साध्वन्तर्गतानां केषाञ्चिद् वाचकत्वाभ्युपगमात् । तादृशवर्णत्वावच्छेदेन वाचकत्वादिसाधने तु वैयाकरणानां परेषां विकरणेषु बाधश्चेत्याह—*तत्स्मृता इति* ।

ननु यथाश्रुते साधुशब्दान्तर्गता वाचकास्तदन्तर्गतवर्णस्मारिता नेत्यर्थलाभादेतद्वाक्यस्य विभिन्नधर्मिबोधकत्वाद्विप्रतिपत्तित्वस्यैवासम्भवः । एकधर्मिकविरुद्धकोटिकसंशयजनकस्यैव तत्त्वादतो व्याचष्टे सारे-*साधुशब्दान्तर्गता इति* । साध्वन्तर्गतवर्णस्मारिता इत्यर्थः । यथाश्रुते साध्वनन्तर्गतविपरीतानां पूर्वोक्तवर्णानां वाचकत्वस्य केनाप्यनभ्युपगमाद् बाधसिद्धसाधनयोरापत्तेः। तत्स्मारितत्वं च शास्त्रबोधितादेशादेशिभावनिमित्तनिमित्तिभावान्यतरसम्बन्धेन। तेन अस्यापत्यं 'इः' 'इयान्' इत्यादेर्नासंग्रहः।

*विधिकोटिरिति* । समुच्चयव्यावृत्ता कोटिताख्या विषयता संशये आवश्यकीति सूचनायोक्तं—*कोटिरिति* । *अन्येषाम्*—नैयायिकानाम् । तैः "लः कर्मणि" ( पा०सू० ३।४।६९ ) "स्वौजसमौट्" ( पा०सू० ४।१।२ ) इत्यादिविहितप्रत्ययानामेव वाचकत्वम् , तिब्विसर्गादीनां त्वादेशिस्मृतिद्वारा बोधकत्वमेव लिपिवदित्यभ्युपगमात् । तथाच साध्वन्तर्गतवर्णस्मारितवर्णत्वावच्छेदेन मतभेदेनोभयसाधनान्नोक्तदोष इति भावः । यथाश्रुतमूलोक्तविप्रतिपत्तिमनुसृत्याह—*साधुशब्द इत्यादि* । ननु साध्वन्तर्गतवर्णानां बोधकत्वसाधनेऽपि न वाचकत्वसिद्धिरत आह—*बोधका वाचका इति* । *तस्यैवेति* । बोधकत्वस्यैवेत्यर्थः । *प्रागिति* । शक्तिनिरूपणावसर इत्य-

परीक्षा

*तत्र = अष्टसु । तान्* = स्फोटान् । *विप्रतिपत्तिरिति* । संशयजनककोट्युपस्थापकं वाक्यमित्यर्थः । साधारणासाधारणधर्मवत्ताज्ञानजन्यकोट्युपस्थितेर्यथा संशयजनकत्वम् , तथा विप्रतिपत्तिवाक्यजन्यकोट्युपस्थितिसत्वेऽपि संशयो भवति, साधारणो धर्मः-कोटिद्वयसामानाधिकरणो धर्मः, स्थाणुत्वस्थाणुत्वाभावसमानाधिकरणो धर्मवानयम्—वह्निमदवृत्तिवह्न्यभाववद् पर्वतत्ववानयमिति वा ज्ञानं, यत्र ततः स्थाणुत्वतदभावयोर्वह्नित्वतदभावयोर्वोपस्थितावयं स्थाणु र्नवाऽयं वह्नि र्नवेति संशयो भवति, तथा चैत्रेण शब्दो नित्यो वाऽनित्यो वेत्युच्चारिते मैत्रस्य ततः कोटिद्वयोपस्थितौ शब्दत्वावच्छिन्नैकविशेषतानिरूपितोभयकोटिप्रकारताकः संशयो भवति ।

असाधुशब्दान्तर्गतवर्णानां वाचकत्वमप्रस्तुतम् , अतः साधुशब्द इत्युक्तिर्मूले तादृशविप्रतिपत्तिवाक्येन साधुशब्दान्तर्गतवर्णत्वसामानाधिकरण्येन वाचकत्वं साध्यते, तदवच्छेदेन वा । आद्य-नैयायिकैरपि केषाञ्चित्तादृशानामिञादिप्रत्ययानां दाक्षिरित्यादौ वाचकत्वस्वीकारात्सिद्धसाधनापत्तेः । द्वितीये नैयायिकानाम्परेषाञ्च बाधः । विकरणानामनर्थकत्वादत आह—*ननु तैः स्मृता इति* । नन्वेतावतापि न विप्रतिपत्तिशरीरनिष्पत्तिः, साधुशब्दान्तर्गतवर्णत्वसामानाधिकरण्येन वाचक-

स्वाद्यश्चेत्यर्थः ॥ ६१ ॥

ये तु प्रयोगान्तर्गतास्तिब्विसर्गादयो न वाचकाः । तेषां बहुत्वेन शक्त्यानन्त्यापत्तेः, एधाञ्चक्रे ब्रह्मेत्यादावादेशलुगादेरभावरूपस्य बोधकत्वासम्भवाच्च । किन्तु तैः स्मृता लकाराः स्वादयश्च वाचकाः । लत्वस्य जातिरूपतया शक्ततावच्छेदकत्वौचित्यात् ।

---

दर्पणः

र्थः । बोधकत्वसिद्धौ च तदन्यथानुपपत्त्या पदार्थान्तररूपा शक्तिरपि सिद्ध्येत्, तदभावे तु साऽपि नेति वाचकत्वसामान्याभावसिद्धिरिति भावः ॥ ६१ ॥

नैयायिकमतं दूषयितुमुपन्यस्यति—*ये त्विति*। वाचकत्वाभावे प्रयोजकमाह—*तेषामिति* । बहुत्वेनेत्युपलक्षणमनुगमकधर्माभावस्यापि तिङ्त्वसुप्त्वादीनामेकवचनत्वादिवदनुगमकत्वासम्भवात्तिङ्त्वाद्युपस्थितिं विनापि कृत्याद्यर्थोपस्थितेर्व्यभिचारेण शक्ततानवच्छेदकत्वाच्चेति बोध्यम् ।

ननु तिबाद्यादेशिनामपि तत्तदनुबन्धभेदेन नानात्वान्नोक्तरीत्या तेषां वाचकत्वमत आह—*एधामिति* । अनुप्रयुज्यमानधातूक्तैरेधादीनापि तदर्थबोधोपपत्तेर्नोक्तदोषोऽत आह—*ब्रह्मेति* । आदिना 'अद्य तिष्यो, लिट्, धुक्' इत्यादिसंग्रहः । लुगादेरित्यादिना, लुब्लोपयोः सः । *तैरिति* । आदेशैरित्यर्थः । उक्तदोषमाशङ्क्याह—*लत्वस्येति* । *जातिरूपतयेति* । लडादिलेषु ल—इत्यनुगतप्रतीत्या तत्सिद्धिरित्यभिप्रायः ।

नव्यास्तु—शक्ततावच्छेदकतया न तत्सिद्धिः, सर्वलकारसाधारणलत्वस्यातिप्रसक्तत्वाद्दशलकारमात्रवृत्तेस्तु शक्तिग्रहात् पूर्वमनुपस्थितेः पचन्नित्यादौ कृतिबोधापत्त्या

परीक्षा

त्वस्य नैयायिकसम्मतस्य तदन्तर्गते तत्स्मृते वाचकत्वाभावस्यैव साधने धर्मिभेदादेकधर्मिकविरुद्धनानाधर्मप्रकारकज्ञानस्यैव संशयत्वादत आह—*साधुशब्दान्तर्गता इत्यादि*। तथा च साध्वन्तर्गतस्मृतानाम्प्रक्रियानिर्वाहकानां लादीनां वाचकत्वसाधने तात्पर्य्यमिति भावः । "लः कर्मणि" इत्यादि "स्वौजमौट्" इत्यादिषु विहितानामेव वाचकत्वम्, प्रयोगे श्रूयमाणादेशानान्तु तत्स्मारकतयोपयोग इति परेषाम्मतम् । एवञ्च साधुशब्दान्तर्गतवर्णस्मृतवर्णतावच्छेदेन कोटिद्वयसाधनमभिप्रेतमिति नोक्तदोष इत्याशयः । 'वाचकत्वमिति कोटिरन्येषाम्, नेति वैयाकरणानाम् । परेषाम्मतङ्खण्डयितुमुपक्रमते-*साधुशब्द इति* । तेषामेव*-बोधजनकानामेव ॥ ६१ ॥

परमतमाह-*ये त्विति*। तदन्तर्गतानां वाचकत्वाभावे साधकान्तरमाह-*तेषामिति*। बहुवचनेत्युपलक्षणम् । शक्ततावच्छेकधर्माननुगमादित्यपि बोध्यम् । किञ्चतिङ्त्वादीनां शक्ततावच्छेदकत्वे तद्धर्मप्रकारकज्ञानस्यार्थोपस्थितौ कारणता वाच्या, सा न सम्भवति, तिङ्त्वानुपस्थितावपि लत्वेनवोपस्थिता वृत्त्या कृत्याद्यर्थस्योपस्थितिदर्शनेन व्यभिचारात् । नन्वानन्त्यम्भवतामपि स्मृतानां लडत्वलिडत्वादिरूपेण शक्तत्वस्य भवत्सम्मतत्वादत आह—*एधामिति* । *असम्भवाच्चेति* श्रूयमाणा-

अव्यभिचाराच्च । आदेशानां भिन्नतया परस्परव्यभिचरितत्वात् । "लः कर्मणि" इत्याद्यनुशासनानुगुण्याच्च । न ह्यादेशेऽर्थवत्ताबोधकमनुशासनमुपलभामहे इत्याहुः । तान् स्वसाधकयुक्तिभिर्निराचष्टे—

व्यवस्थितेर्व्यवहृतेस्तद्धेतुन्यायतस्तथा ॥
किञ्चाख्यातेन शत्राद्यैर्लडेव स्मार्यते यदि ॥ ६२ ॥
कथं कर्तुरवाच्यत्ववाच्यत्वे तद्विभावय ॥

व्यवस्थानुरोधात् प्रयोगान्तर्गता एव वाचकाः, न तु तैस्तत्स्मृता इत्यर्थः । तथाहि—पचतीत्यादौ लकारमविदुषो बोधान्न तस्य

---

दर्पणः

तस्य शक्तत्वाऽवच्छेदकत्वासम्भवाच्च तिप्तस्त्वादिकमेव तदवच्छेदकमित्याहुः । तथाचोक्तविप्रतिपत्तौ प्राचीनैः सह विवाद एवेति बोध्यम् ।

*अव्यभिचाराच्चेति* । लत्वावच्छिन्नशक्तिग्रहस्य कृतिबोधात् पूर्वं नियमेन सत्त्वात्, तिप्त्वादीनां शक्यतावच्छेदकत्वे तु तदवच्छिन्नशक्तिग्रहं विनाऽपि तसादिशक्तिग्रहवत् कृतिबोधेनाऽऽदेशवाचकतावादिमते व्यभिचारो दुर्वार इति भावः ।

ननु कार्य्यतावच्छेदककोटावव्यवहितोत्तरत्वनिवेशान्नेयमापत्तिरत आह—*लः कर्मणीतीति* । *इत्याहुरिति* । तथाचादेशानामेव वाचकत्वं सप्रमाणमिति तद्भावः । *स्वसाधकेति* । स्वमतपरिपोषकेत्यर्थः । व्यवस्थितेरित्यादिपञ्चम्यन्तत्रयस्य पूर्वकारिकास्थबोधकपदार्थेऽन्वयं प्रदर्शयन्नादौ व्यवस्थितेरित्येतद्विवृणोति—*व्यवस्थानु-

परीक्षा

देशा एव वाचका इति भवत्सम्मतम्—तथा च प्रकृते आदेशानामश्रवणेनार्थबोधो न स्यादिति भावः । यद्यप्येधाञ्चक्र इत्यादावप्रयुज्यमानानामादेशानां सम्भवति तथापि ब्रह्मेत्यादावसम्भव एवेत्याशयेन द्वितीयोपादानम् । आदिना "अतो हेः" इति लुग्विषये भवेदित्यादेरजर्घा इत्यादेश्चोपग्रहः लुगादेरित्यादिना लोपस्य संग्रहः। *तैः =आदेशैः ।

ननु लकारस्य वाचकत्वेऽप्युक्तरीत्याऽनुपपत्तिरेवात आह—*लत्वस्येति* । *जातिरूपतयेति*—लत्वेऽनुगतप्रतीत्या तस्य सिद्धिरित्याशयः । *अव्यभिचारादिति* । लिट्त्वादीनां शक्ततावच्छेदकत्वे स्वावच्छिन्नज्ञानाद्यत्रार्थोपस्थितिस्तत्रार्थोपस्थितेः प्रकृतित्वावच्छिन्नज्ञानाभावाद्व्यभिचारः । एवमन्यत्रापि बोध्यम् । लत्वस्य शक्ततावच्छेदकत्वम्पाणिनिसम्मतमपीत्याह—*लः कर्मणीति* । नच लत्वस्य लवणादिशब्दघटकलकारेऽपि सत्त्वेनातिप्रक्तत्वमिति वाच्यम् । लट्त्वाद्यन्यतमत्वसामानाधिकरण्यविशिष्टलत्वं शक्ततावच्छेदकमित्यभिमानात् । *स्वसाधकेति* । स्वमतनिर्दुष्टसाधकेत्यर्थः । *व्यवस्थितेरिति* । पञ्चम्यन्तन्तत्र यस्य हेतुसूचकस्य पूर्वकारिकाप्रतिपाद्यसाध्यसाधकत्वन्तत्रैवान्वयो बोध्यः । एतद्विवरणेन दर्शयति—*व्यवस्थानुरोधादित्यादिना* । प्रमाणेन वस्तुतस्त्वस्य निर्धारणं व्यवस्था, तस्याः साधकयुक्तिमित्यर्थः । *अविदुष इति*—अवैयाकरणस्येति शेषः । *तस्य*

वाचकत्वम्। न च तेषां तिङ्क्षु शक्तिभ्रमाद् बोधः। तस्य भ्रमत्वे मानाभावात्। आदेशिनामपि तत्तद्वैयाकरणैः स्वेच्छया भिन्नानामभ्युपगमात्, कः शक्तः को नेति व्यवस्थानापत्तेश्च।

सर्वेषांशक्तत्वे गौरवं, व्यभिचारश्चास्त्येव। आदेशानां प्रयोगान्तर्गततया नियतत्वाद् युक्तं तेषां शक्तत्वम्। तथाचाऽऽदेशिस्मरण-

---

दर्पणः

रोधादिति*। प्रमाणेन पदार्थनिर्द्धारणं व्यवस्था तदन्यथानुपपत्तेरित्यर्थः। *शक्तिभ्रमादिति*। लत्वावच्छिन्ननिष्ठवाचकत्वस्य तत्रारोपादित्यर्थः। *मानाभावादिति*। विषयबाधस्यैव भ्रमत्वे तन्त्रतया प्रकृते बोधकत्वशक्तेस्तत्राबाधादिति भावः।

नन्वादेशानां बहुत्वमेव तत्र शक्तिस्वीकारे बाधकमत आह—*आदेशिनामपीति*। *वैयाकरणैः*। शाकटायनप्रभृतिभिः। *व्यवस्थेति*। इदमेव वाचकमिति निर्द्धारणाऽनुपपत्तेरित्यर्थः। अनुशासनस्य सर्वत्रापि सत्त्वादिति भावः। सर्वेषामित्यस्य विनिगमकाभावादित्यादिः। ननु तथाप्यादेशापेक्षयाऽऽदेशिनामल्पत्वेन तत्प्रयुक्तालाघवादादेशिष्वेव वाचकत्वं सेत्स्यतीत्यत आह—*व्यभिचारश्चेति*। ननु विनिगमनाविरहादेवादेशिनां वाचकतासिद्धिरत आह—*आदेशानामिति*। तथाच गौरवादिदोषस्य तत्परिहारस्य चोभयोः साम्येऽप्यादेशिस्मरणकल्पनाविरहप्रयुक्तलाघवसहकृतप्रयोगनैयत्यमेवादेशानां वाचकत्वे विनिगमकमित्यखण्डलार्थः।

ननु बोधकतायाः शक्तित्व एव भवदुक्तव्यवस्थोपपत्तिः। न च बोधकत्वस्य शक्तित्वं तन्मतसिद्धं, किन्तु सङ्केतस्य पदार्थान्तरस्य वा तत्त्वम्। तथाचानुशासनेन यत्र सा प्रतिपाद्यते; तत्रैव तदङ्गीकारेण कथं तिबादिषु तत्सिद्धिः। स्मरणकल्पनागौरवं तु प्रामाणिकत्वादपि न दुष्टमित्यस्वरसात् प्रयोगे श्रूयमाणानां तिबादीनां वाचकत्वे सा-

परीक्षा

लत्वावच्छिन्नस्य, *तेषाम्*-अवैयाकरणानाम्। *शक्तिभ्रमादिति*। बोधकत्वरूपशक्तेरारोपादित्यर्थः। *मानाभावादिति*। बोधकत्वरूपायाः शक्तेर्बाधाभावादिति भावः। लकारस्यैव कर्मत्वादौ विधानं यदि सर्वव्याकरणे प्रासद्धन्तदा भवदुक्तेः सम्भवः स्यात्, तदेव तु न। लट्लिडितिवत्कट्किडित्यादिरीत्या विधानेऽपि प्रयोगोपपत्तेरित्याशयेनाह-*आदेशिनामपीति*। *वैयाकरणैः*-शाकटायनादिभिः। *व्यवस्थानापत्तेश्चेति*। इदमेव वाचकमिति निर्णयानुपपत्तेरित्यर्थः। अनुशासनानुरोधो हि भवताम्बलम्, तत्त्वनुशासनं सम्भवतीति भावः।

नन्वस्तु विनिगमनविरहात्सर्वेषां वाचकत्वमत आह—*सर्वेषामिति*। नन्वादेशापेक्षया आदिशिनामल्पत्वमेवेत्याशङ्कायामाह-*व्यभिचार इति*। लत्वावच्छिन्नज्ञानाद्यत्रार्थोपस्थितिस्तत्र तिब्त्वावच्छिन्नज्ञानस्य ततः पूर्ववर्त्तित्वाभावेन व्यभिचार इत्यर्थः। स्वमतस्योपपत्तिमाह—*आदेशानामिति*। यद्यप्यादेशिनामादेशापेक्षया आधिक्याद्गौरवम्। एवम्प्रत्येकज्ञानस्य कारणतायां व्यभिचारश्च। अस्मन्मतेऽपि तथादेशिस्मरणकल्पना नेति लाघवसहकृतप्रयोगनियतत्वमस्माकं विनिगमकम्। व्यभिचारवारणन्त्वव्यवहितोत्तरत्वसम्बन्धेन कारणवशिष्टयस्य कार्यता-

कल्पना नेति लाघवम् । साधकान्तरमाह--*व्यवहृतेरिति* ॥ व्यवहारस्तावच्छक्तिग्राहकेषु मुख्यः । स च श्रूयमाणतिङादिष्वेवेति त एव वाचका इत्यर्थः ।

किञ्च,-*तद्धेतुन्यायत इति*॥ लकारस्य बोधकत्वे, 'भू-ल' इत्यतोऽपि बोधापत्तिः स्यात् । तादृशबोधे 'भव्-अति' इति

दर्पणः

धकान्तरमुपन्यस्यतीत्याह-*साधकान्तरमिति*। *मुख्य इति*। मुख्यत्वं च तस्मिन् शक्तिग्राहकान्तरनिरपेक्षत्वम्। व्याकरणादिना शक्तिग्रहे नियमे तद्ग्राहकान्तरापेक्षणात्। *सचेति*। व्यवहारजन्यशक्तिग्रहश्चेत्यर्थः। *तिङादिष्वेवेति*। व्यवहारेण पूर्ववाक्ये तद्ग्रहेऽप्यावापोद्वापाभ्यां पश्चात्तद्घटकतिङादिष्वेव तन्निर्णयादिति भावः।

ननु प्रयोगान्तर्गतवर्णेषु सर्वसिद्धव्यवहारेण शक्तिग्रहे घटमानयेत्याद्यन्तर्गतशबादीनामपि वाचकत्वापत्तिः। न च सेष्टा। विकरणानां नैरर्थक्यमिति सिद्धान्तव्याकोपात्। किञ्चाऽऽनयनादिव्यवहारस्य लोडाद्यन्तप्रयोगं विनाऽसम्भवेन तादृशप्रयोगान्तर्गतवर्णानां तेन तत्त्वसिद्धावपि तद्रहितवाक्यान्तर्गतवर्णेषु वाचकत्वमनुशासनेनैवेष्टव्यम्। तथाच तत्रादेशिनां वाचकत्वसिद्धवन्यत्राप्यादेशिषु सा कल्प्येत्यस्वरसादाह—*किञ्चेति*॥ *तद्धेत्विति*॥ "तद्धेतोरेव तत्त्वे किं तेन" इति न्यायाकारः, लाघवमूलकश्चायं न्यायः। उभयोर्हेतुत्वे गौरवापत्तेः। सङ्गमयति—*लकारस्येति*॥ *बोधापत्तिरिति*॥ भवनकर्तृबोधापत्तिरित्यर्थः। 'न केवल' इति न्यायात् केवललकारस्य प्रयोगानर्हत्वाद् 'भू' इत्युक्तम्। लकारदशायां शपोऽसम्भवान्न भवतीत्युपात्तम्। तथाच भवतीत्यत्रानुसंहिताल्लकाराद्यथा कर्तृबोधस्तथा प्रत्यक्षश्रुतलकारादपि कर्तृबोधापत्तिरिति भावः॥

न चासाधुत्वज्ञानं प्रतिबन्धकम्। शक्तत्वरूपसाधुताया अपि सत्त्वादपभ्रंशादपि बोधोदयेन तदीयज्ञानस्याप्रतिबन्धकत्वाच्चेति भावः॥ *तादृशेति*॥ आपादितक-

परीक्षा

वच्छेदके निवेशेन कार्यमिति भावः। *साधकान्तरम्*—पूर्वसाध्यस्य हेत्वन्तरम्। एतेन बोधकत्वं यदि शक्तिः, तदा भवदुक्तिसङ्गतिः। तत्रैव तु विवादः, शक्तेः सङ्केतरूपतायाः परसम्मतत्वात्। तस्याश्च शक्तेरनुशासनेनादेशिष्वेव सिद्धिः। स्मरणप्रयुक्तकल्पनागौरवन्तु फलमुखत्वान्न दोषावहमिति परास्तम्।

आद्यशक्तिग्रहोपायव्यवहारस्यादेशविषय एव सम्भवेन तत्रैव शक्तेर्न्याय्यत्वादिति तिङादिष्वेवेतिव्यवहारेणादौ यद्यपि वाक्ये शक्तिग्रहः, तथाप्यावापोद्वापाभ्यामुत्तरकालन्तद्घटकतिङादिष्वेव तन्निश्चयेन भवत्सिद्धान्तविलोपापत्तिः। अतो व्यवहारेण यथा प्रथमं वाक्ये शक्तिग्रहेऽपि पश्चात्त्यागः, तथादेशेषु जातशक्तिग्रहेऽप्यप्रामाण्यकल्पनास्तु, किन्त्वनुशासनसहायेन यत्र शक्तिनिश्चयः, तेषामेव वाचकत्वमस्त्वित्यादेशिनां वाचकत्वसिद्धिरत आह—*किञ्चेति*। *न्यायत इति*। तद्धेतोरेव तत्स्यात् किन्तेनेति भावादित्यर्थः। लाघवमूलकमिमं न्यायं सङ्गमयति-*लकारस्येत्यादिना*। *बोधापत्तिः*-कर्त्राद्यर्थबोधापत्तिः। केवललकारस्य प्रयोगानर्हत्वात्, भूशब्दसाहित्येनैव प्रयोगदर्शनम्। *तादृशबोधे*-भवनादिविशिष्टकर्त्रादिविषयकबोधे। *भवतीति*।

समभिव्याहारोऽपि कारणमिति चेत्, तर्ह्यावश्यकत्वादस्तु तादृश-समभिव्याहारस्यैव वाचकत्वशक्तिः। अन्यथा लकारस्य वाचकत्वं समभिव्याहारस्य कारणत्वञ्चेत्युभयं कल्प्यमिति गौरवं स्यात्।

तथाच तादृशसमभिव्याहारः, समभिव्याहृता वर्णा वेत्यत्र विनिगमनाविरहात् प्रयोगान्तर्गता वर्णा वाचका इति सिद्ध्यतीतिभावः।

---

दर्पणः

र्तृबोधे इत्यर्थः॥ *समभिव्याहार इति*॥ पूर्वापरीभावापन्नवर्णसमुदाय इत्यर्थः। आवश्यकत्वात्तं विना लकारेणाऽपि बोधाजननेनोक्तसमभिव्याहारस्यापेक्षणादित्यर्थः॥ *वाचकत्वशक्तिरिति*॥ आर्थबोधकत्वरूपा शक्तिरित्यर्थः। तथाचाप्रासकालता वर्णस्फोटोपयोगित्वान्न स्यादिति भावः। वाचकत्वानभ्युपगमे आदेशिशक्तिवादिमते गौरवं प्रदर्शयति-*अन्यथेति*। उक्तसमभिव्याहारस्य वाचकतानभ्युपगमे इत्यर्थः।

नन्वेतावता समभिव्याहारस्य वाचकत्वमायातं, न प्रयोगान्तर्गतधातुप्रत्ययघटकानां वर्णानामत आह-*तथाचेति*॥ *विनिगमनाविरहादिति*॥ न च वर्णानां बाहुल्यमेव विनिगमकम्। उक्तानुपूर्व्यास्तदनुगमकत्वात्। किञ्च समभिव्याहारस्य वाचकत्वे तत्घटकनानावर्णानामवच्छेदकतायां गौरवम्। वर्णानां वाचकत्वे तूक्तानुपूर्व्या एकस्या एव तत्त्वमिति लाघवस्यैव विनिगमकत्वमिति भावः।

ननु प्रयोगान्तर्गतवर्णस्मारितवर्णत्वावच्छेदेन वाचकत्वसिद्धौ प्रकृतायां वाचकत्वाभावसाधनाय भू+ल् इत्यतो भवनक्रियाकर्तृबोधापादनमनुचितम्। तादृशलकारस्य प्रयोगान्तर्गतवर्णास्मारितत्वात्। तथाच नोक्तयुक्तिः समभिव्याहारस्य वाचकत्वसाधिका। नाप्यत्र तद्धेतुन्यायावकाशः। समभिव्याहारस्य लवाचकताग्रहोपयोगितया शाब्दबोधे हेतुत्वेऽपि तद्वाचकतायां मानाभावेन तेन तदन्यथासिद्ध्यसम्भवात्। लका-

परीक्षा

अस्यादेरिति शेषः। *समभिव्याहारः*। पूर्वापरीभावापन्नपरिनिष्ठितसमुदायघटकयावद्वर्णोच्चारणम्। नच 'भू ल्' इत्यादिभ्यो न बोधापत्तिरसाधुत्वज्ञानस्य प्रतिबन्धकत्वादिति, अपभ्रंशादपि बोधस्य दर्शनेन तस्याप्रतिबन्धकत्वात्। *आवश्यकत्वादिति*। तादृशसमभिव्याहारज्ञानं विना केवललकारेण बोधादर्शनेन समभिव्याहारज्ञानस्य कारणताया आवश्यकत्वादित्यर्थः। *समभिव्याहारस्येति*। एवकारेण लकारस्य व्यवच्छेदः। *वाचकत्वशक्तिः*-अर्थबोधजनकत्वरूपशक्तिः। सिध्यतीति शेषः। *अन्यथा*-उभयोरप्यर्थबोधजनने सहायत्वे। *प्रयोगान्तार्गतवर्णा इति*।

नचादौ वाक्यस्फोटस्य वाचकत्वमुक्तमिदानीम्प्रयोगान्तर्गतवर्णानान्तत्साध्यते; इत्यप्रकृतमिति वाच्यम्। वक्ष्यमाणवर्णस्फोटोपयोगित्वात्। अत्र प्रत्येकावृत्तिधर्मस्य समुदायावृत्तित्वम्' इति नियमोऽपि साधको द्रष्टव्यः। नच प्रत्येकापर्य्याप्तस्य द्वित्वस्य समुदायपर्य्याप्तत्वदर्शनेनोक्तनियमो व्यभिचरित इति वाच्यम्। तस्यापि समवायेन प्रत्येकवृत्तित्वाभ्युपगमात्। अत एव स्वाश्रयनिष्ठभेदप्रतियोगितावच्छेदकत्वरूपव्यासज्यवृत्तित्वस्य सिद्धिः। न च प्रयोगान्तर्गतवर्णानां वाचकत्वे तेषां बहुत्वाद्गौरवमिति वाच्यम्। आनुपूर्व्यास्तदनुगमकत्वादिति।

अपि च लकारस्यैव वाचकत्वे कृत्तिङोः कर्तृभावनावाचकत्वव्यवस्था त्वत्सिद्धान्तसिद्धा न स्यादित्याशयेनाह—*किञ्चेति* ॥ आदेशानां वाचकत्वे च तिङ्त्वेन भावनायां, शानचादिना कर्तरि शक्तिरित्युपपद्यते विभाग इति भावः ।

न च शानजादौ कृतिर्लकारार्थः, आश्रयः शानजर्थ इत्यस्तु, "कर्त्तरि कृत्" ( पा० सू० ३।४।६७ ) इत्यनुशासनादिति शङ्क्यम् । स्थान्यर्थेन निराकाङ्क्षतया शानजादौ कर्तरीत्यस्याप्रवृत्तेः । अन्यथा घञादावपि प्रवर्त्तेत ॥ ६२½ ॥

'देवदत्तः पचमान' इत्यादिसामानाधिकरण्यानुरोधाच्छानचः कर्ता वाच्यः स्यादित्याशङ्क्याह—

**तरबाद्यन्ततिङ्क्ष्वस्ति नामता कृत्स्विव स्फुटा ॥६३॥**
**नामार्थयोरभेदोऽपि तस्मात्तुल्योऽवधार्यताम् ।**

---

दर्पणः

रस्य वाचकत्वे त्वनुशासनस्यैव मानत्वादित्यपरितोषान्मूलमवतारयति—*अपिचेति* ॥ *न स्यादिति* ॥ स्थानिनो लकारस्योभयत्रैक्यादिति भावः ।

नव्यनैयानिकनये तु नेयमापत्तिः । तैः प्रयोगान्तर्गततिबादीनामेव वाचकताया अभ्युपगमात् । धातुप्रत्ययलोपस्थले तत्तदर्थबोधोपपादनं तूभयोः समप्रयत्नकत्वमित्यवधेयम् । *इत्यस्त्विति* ॥ तथाच तदुभयशक्त्यैव कर्त्तृलाभः । कृत्याश्रयस्यैव कर्तृत्वादिति भावः ॥ *अन्यथेति* । अनाकाङ्क्षेऽपि शास्त्रप्रवृत्तावित्यर्थः । शक्ततावच्छेदकभेदस्य तत्रापि सत्त्वादिति भावः ॥ ६२½ ॥

*सामानाधिकरण्यानुरोधादिति* । शानचः कृतिवाचकत्वे सर्वानुभवसिद्धाभेदा-

परीक्षा

नच 'तद्धेतु न्यायत' इत्यनुपपन्नम् । समुदायस्य शाब्दबोधजनकत्वे सहायत्वेऽपि पदार्थस्मारकत्वरूपबोधजनकत्वग्रहे सहकारित्वादित्यत आह—*अपि चेति* । *कृत्तिङोरिति* । अस्य यथासङ्ख्यमन्वयो न स्यात्, स्थानिनो लकारस्यैकत्वेन भेदसिद्धेरिति शेषः । इदम्प्रयोगान्तर्गतवर्णानां वाचकत्वव्यवस्थापनम्प्राचीननैयायिकान् प्रति, नव्यैस्तु तिबादिष्वेव वाचकत्वस्य स्वीकारात् । यत्र धातोः प्रत्ययस्य वा लोपः, तत्रार्थबोधजननोपायस्तूभाभ्यामपि समान इत्यवधेयम् । *इत्यस्त्विति* । कृत्याश्रयस्यैव कर्त्तृपदार्थत्वादिति भावः । *अन्यथा*—अर्थाकाङ्क्षाभावेऽपि शास्त्रप्रवृत्तौ । *प्रवर्त्तेतेति* ।तथाच यत्रार्थाकाङ्क्षा तत्रार्थव्यवस्थापकशास्त्रप्रवृत्तिर्भवतापि वाच्येति भावः ॥ ६२½ ॥

ननु मन्मते साधकान्तरमस्तीत्याह—*देवदत्त इत्यादिना* । नचैवं शतृशानचोर्लादेशत्वकल्पनमनर्थकम् । तृजादिवत्प्रत्ययान्तरत्वस्यैव स्वीकर्त्तुमुचितत्वादिति वाच्यम् । धात्वर्थे वर्त्तमानत्वस्यान्वयबोधजननस्य तत्फलत्वात् । *तरबाद्यन्तेति* कृत्स्विव तरबाद्यन्ततिङ्क्षु नामता स्फुटाऽस्तीत्यन्वयः । तिङन्तप्रकृतिकतरबन्तेषु

पचतितरां मैत्रः, पचतिकल्पं मैत्र इत्यादिषु नानार्थत्वाभेदान्वययोः सम्भव एवेति कर्तृवाचकता स्यादिति भावः । न च 'पचतिकल्पम्' इत्यत्र सामानाधिकरण्याऽनुरोधात् कर्त्तरि लक्षणा, 'पचमान' इत्यत्राप्यापत्तेरिति । "लः कर्म्मणि" इत्यनुशासनञ्च लाघवात् कल्पिते लकारे कर्त्रादिवाचित्वं कल्पितमादायेत्युक्तम् ॥ ६३½ ॥

इति वर्णस्फोटनिरूपणम् ।

---

दर्पणः

न्वयबाधानुपपत्तेरित्यर्थः । लडादेशत्वबोधनफलं धात्वर्थवर्त्तमानत्वप्रतीतिरेवेति बोध्यम् । *पचतिकल्पमिति* । इदञ्च स्वाद्यन्तं नामेति मतमनुसृत्य । 'सत्त्वप्रधानानि नामानि' इति निरुक्ताद् द्रव्यविशेष्यकबोधजनकत्वं नामत्वम् । तदेव च 'नामार्थयोः' इति व्युत्पत्तिघटकम् । अत एव निपातार्थस्य भेदाऽन्वय इति मतेनेदं दूषणमिति तु परे । लक्षणेत्यस्य लस्येति शेषः ।

*आपत्तेरिति* । नच सा तवेष्टेति भावः । नन्वादेशानां वाचकत्वे आदेशिशक्तिप्रतिपादक "लः कर्मणि" इत्यादिसूत्राणां वैयर्थ्यमत आह—*लः कर्मणीति* । *उक्तमिति* । आख्यातशक्तिनिरूपणावसर इति शेषः । एवञ्च प्रयोगे श्रूयमाणप्रकृतिप्रत्ययघटकवर्णेषु शक्तिर्वर्णस्फोटमिति पर्य्यवसन्नम् ॥ ६३½ ॥

इति भूषणसारदर्प्पणे वर्णस्फोटनिरूपणम् ॥ १३ ॥

---

परीक्षा

पचतितरामित्यादिषु नामत्वमस्तीति 'पचतितरान्देवदत्तः' इत्यादिषु सामानाधिकरण्यानुरोधात्कर्त्तुस्तिङ्वाच्यत्वमस्तु, कृत्प्रत्ययस्थले नामार्थयोरभेदान्वय इति नियमानुरोधो भवताङ्कर्त्तुर्वाच्यत्वमिति चेत्पचतितरान्देवदत्त इत्यादावपि तस्यानुरोधस्तुल्य इत्यर्थः । इदं सुबन्तन्नामेति मतेन । यदि तु 'सत्त्वप्रधानन्नाम' इति 'चत्वारि पदजातानि' 'नामाख्यातोपसर्गनिपातैः' इति उक्तवाक्ये उपसर्गनिपातयोः पृथगुपादाने नाश्रीयेते तदा नायन्दोष इत्यवधेयम् ।

अथवा—तरबाद्यन्तेत्यादिना कर्त्तुरादेशवाच्यत्वसाधिका भवदुक्तिः, सा न युक्ता । लकारस्य कर्त्तरि लक्षणव्यापिसामानाधिकरण्यस्योपपत्तिरिति कस्यचिच्छङ्कान्निरस्यति—*नचेत्यादिना* । नन्वादेशानामेव वाचकत्वे "लः कर्मणि" इति सूत्रविरोध इत्यत आह—*लःकर्मणीति* । *उक्तमिति* । आदेशिशक्तिनिरूपणावसर इति शेषः । एवञ्च प्रयोगे श्रूयमाणेषु प्रकृतिप्रत्ययेषु वर्णसमुदायरूपेषु शक्तिर्व्यासज्यवृत्तिरिति वर्णस्फोटपक्षः सिद्धः ॥ ६३½ ॥

इति वर्णस्फोटविवरणम् ।

## अथ पदस्फोटनिर्णयः ।

**अथाऽऽदेशा वाचकाश्चेत् पदस्फोटस्ततः स्फुटः ॥६४॥**

एवमादेशानां वाचकत्वे सिद्धे पदस्फोटोऽपि सिद्ध एवेत्याह—*अथेत्यादि* ॥ आदेशास्तिब्विसर्गादयः । अयम्भावः—समभिव्याहृतवर्णानां वाचकत्वे सिद्धे तादृशवर्णसमभिव्याहाररूपपदस्य वाचकता सिद्ध्यति । प्रतिवर्णमर्थस्मरणस्यानुभवविरुद्धत्वात् । प्रत्येकं वर्णानामर्थवत्त्वे प्रातिपदिकत्वापत्तौ "नलोपः प्रातिपदिकान्तस्य" (पा० सू० ७।२।७) इत्यादिभिर्धनं वनमित्यादौ नलोपाद्यापत्तिश्च ।

---

दर्पणः

अथ पदस्फोटनिर्णयः ।

पदस्फोटनिरूपण उपजीव्योपजीवकभावस्याऽपि सङ्गतित्वं सूचयन् मूलमवतारयति—*एवमिति* । उक्तरीत्येत्यर्थः । आदेशानामपि केषाञ्चित् प्रयोगान्तर्गतत्वादाह—*तिब्विसर्गादय इति* । प्रयोगान्तर्गतवर्णानामिति यावत् । ननु यावद्वर्णानां वाचकत्वे, कथं पदस्फोटसिद्धिरतो भावार्थमाह-*अयमिति* । समभिव्याहृतं तूक्तार्थम् । *सिद्ध इति* । आनुपूर्वीविशिष्टतावतां वर्णानामवाचकत्वे आनुपूर्व्वीरूपपदस्य-वाचकत्वाशा दुराशेति भावः ।

ननु समुदायस्य प्रत्येकानतिरिक्तत्वेन वाचकतायाः प्रत्येकवर्णे विश्रामो वाच्यः, तथाच कथं समुदिततादृशवर्णरूपपदस्य वाचकतेत्यतः प्रत्येकवर्णवाचकतां निरस्यति-*प्रतिवर्णमिति* । *अनुभवविरुद्धत्वादिति* । घटशब्दादमुमर्थं प्रत्येमीत्येव प्रतीतेरित्यर्थः । बाधकान्तरमप्याह—*प्रत्येकमिति* । *अर्थवत्त्व इति* । तदभ्युपगम

परीक्षा

अथ पदवाक्यस्फोट निरूपणम् ।

वर्णस्फोटनिरूपणपदस्फोटनिरूपणयोरुपजीव्योपजीवकभावसङ्गतिरिति सूचयन्नाह—*एवमिति* । पूर्वोक्तरीत्या वर्णस्फोटसाधनाय प्रवृत्या वराटिकान्वेषणाय प्रवृत्तिश्चिन्तामणिं लब्धवानिति वा शिष्टोक्ता जाणफन्यायेन पदस्फोटस्य सिद्धिरिति भावः । प्रयोगानन्तानामादेशानान्निरासायाह—*तिबित्यादि* । *तादृशवर्णेति* । आनुपूर्वीविशिष्टवर्णेत्यर्थः ।

ननु समुदायस्य वाचकत्वे तस्याऽवयवानतिरिक्तत्वात्प्रत्येकं वर्णानां वाचकत्वमस्त्वित्यत आह-*प्रतिवर्णमिति* । *अनुभवविरुद्धत्वादिति* । कलशशब्दादमुमर्थं प्रत्येमीत्येवानुभवोऽस्तीति भावः । प्रत्येकं वाचकत्वे दोषान्तरमप्याह—*प्रत्येकमिति* । *अर्थवत्त्वे* । अर्थवत्त्वस्यापत्या । तथा च समुदितानामेव वाचकत्वमुपेयमिति भावः ।

एतच्च, चरमवर्ण एव वाचकत्वशक्तिः, शक्तेर्व्यासज्ज्यवृत्तित्वे मानाभावात् । पूर्वपूर्ववर्णानुभवजन्यसंस्काराश्चरमेणार्थधीजनने सहकारिण इति न तन्मात्रोच्चारणादर्थधीरिति वर्णस्फोटवादिनां मतान्तरस्य दूषणायोक्तम् । रामोऽस्तीति वक्तव्ये राम इत्यनन्तरं घटिकोत्तरमकारोच्चारणेऽर्थबोधापत्त्या तादृशानुपूर्व्या एव शक्य-

---

दर्पणः

इत्यर्थः । नलोपादीत्यादिना जश्त्वादिपरिग्रहः । तथाच समुदितानामेव तेषां वाचकत्वमभ्युपेयम् । तत्र चोक्तयुक्त्या तत्समुदायस्य वाचकत्वं निराबाधम् । स एव चाऽस्माकं पदशब्दव्यपदेश्य इति भावः ।

ननु प्रत्येकवर्णानां वाचकत्वस्य गौरवपराहतत्वादेवासम्भवात्समुदायस्यैव तत् सेत्स्यतीत्यादेशा वाचकाश्चेति समभिव्याहृतवर्णानां वाचकताया हेतुत्वोपन्यासो विफलः । उन्मत्तप्रलपितत्वशङ्काया अवसरेणैव निरासादित्यत आह—*एतच्चेति* । समभिव्याहृतवर्णानां वाचकत्वोपन्यसनं चेत्यर्थः । *चरमवर्ण एवेति* । पदान्ते श्रूयमाणवर्ण एवेत्यर्थः । एवकारेण पदघटकतत्प्राक्तनवर्णव्युदासः । तत्र हेतुमाह-*शक्तेरिति* । स्वरूपसम्बन्धात्मिकायां बोधकारणतायां पर्याप्तत्वासम्भवाच्चरमवर्णादेव बोधोदयेनान्यत्र तत्सत्त्वे मानाभावादिति वाऽर्थः ।

ननु तस्यैव वाचकत्वे तन्मात्रश्रवणादर्थबोधापत्तिरत आह-*पूर्वपूर्वेति* । तत्पदघटकपूर्ववर्णेत्यर्थः । *मतान्तरेति* । तत्समभिव्याहृतवर्णानामवाचकत्वे तत्समुदायरूपपदस्य सुतरामवाचकत्वमिति यन्मतान्तरं तत्खण्डनायेत्यर्थः । उक्तमित्यस्य, मूल इति शेषः । *अर्थबोधापत्त्येति* ॥ वस्तुतस्तु नेयमापत्तिः । उद्बोधकस्य फलानुमेयत्वेन तादृशस्थले फलाभावेनोद्बुद्धसंस्काराभावादिति बोध्यम् ।

ननु समभिव्याहारो न समूहः । वर्णानां क्रमिकाणामाशुविनाशिनां च तदसम्भवादत एवाव्यवहितोत्तरत्वसम्बन्धेन न पूर्वपूर्ववर्णवत्त्वम् । पूर्वपूर्ववर्णस्यैवाभावात् । नाऽपि वर्णसमवेतं पदार्थान्तरं, मानाभावात् । अन्यथा तादृशधर्मानुगतीकृतवर्णानां वाचकत्वेनैवोपपत्तौ पदस्फोटस्य निरालम्बनतापत्तेः । पदप्रयुक्तकार्य्याणां वर्णेष्वेव दर्शनाच्चेति कथं पदस्फोटसिद्धिरित्यत आह—*दिगिति* । तदर्थस्तु वर्णसमुदायः पदं, न वर्ण इति प्रतीतेर्वर्णातिरिक्तपूर्वापरीभूततत्समुदायात्मकपदस्वीकार आव-

परीक्षा

नचैवम्प्रत्येकं वर्णानां वाचकत्वं गौरवादेव निरस्तम्भवति, किमर्थं भवतोक्तमुत्तरत्र समुदायस्य वाचकत्वं साध्यत इत्यत आह—*एतच्चेति*। समभिव्याहृतवर्णानां वाचकत्वोपन्यसनत्वमित्यर्थः । *चरमवर्णे* । पदचरमावयववर्णे । एतच्छ्रवणं विनाऽर्थबोधाभावेनान्वयव्यतिरेकाभ्यान्तत्र शक्तिः कल्प्यत इति भावः ।

ननु तर्हि तन्मात्रश्रवणाद्बोधापत्तिरत आह—*पूर्वपूर्वेति* । पूर्वस्मिन्मते दूषणान्तरमाह-*राम इत्यादिना*। एतच्च दूषणं यत्रोद्बोधकसमवधानात्तावतां स्मरणञ्जायते तत्रेति बोध्यम् ।

ननु वर्णानां समभिव्याहारो न समूहरूपः । वर्णानामाशुविनाशितया तस्यासम्भवात् । अव्यवहितोत्तरत्वसम्बन्धेनैकवर्णविशिष्टापरवर्णत्वमप्यत एव न सम्भवतीति,

तावच्छेदकत्वौचित्यादिति दिक् ॥ ६४ ॥

सुप्तिङन्तं पदमिति पारिभाषिकपदस्य वाचकत्वस्वीकर्त्तॄणां मतमाह—

**घटेनेत्यादिषु न हि प्रकृत्यादिभिदा स्थिता ।**
**वस्नसादाविवेहापि सम्प्रमोहो हि दृश्यते ॥ ६५ ॥**

घटेनेत्यादौ 'घटे' इति प्रकृतिः 'न' इति प्रत्ययः, 'घट्' प्रकृतिः 'एन' इति प्रत्यय इति विभागस्य, "सर्वे सर्वपदादेशा" इति स्वीकारे विशिष्य प्रकृतिप्रत्यययोर्ज्ञानासम्भवान्न वाचकत्वमित्यर्थः । वैयाकरणैर्विभागः सुज्ञेय इत्यतो दृष्टान्तव्याजेनाह—*वस्नसादाविति* ॥ "बहुवचनस्य वस्नसौ" ( पा०सू० ८।१।२१ ) इति समु-

---

दर्पणः

श्यकः । अत एव पदे वर्णे इति व्यवहारोऽपि स्वरसतः सङ्गच्छते । नित्याश्च वर्णास्तेषु पौर्वापर्य्यञ्च पूर्वपूर्ववर्णानुसन्धानस्याव्यवहितोत्तरत्वसम्बन्धेनोत्तरवर्णानुसन्धाने वाक्यस्फोटवक्ष्यमाणरीत्या सम्भवात्तद् विषयकानुसन्धानविशिष्टानुसन्धानविषयत्वरूपमिति स्वीकारेऽपि क्षत्यभावाच्च । यथा चैतत् तथा वाक्यस्फोटनिरूपणे वक्ष्यत इति तथा च वर्णसमुदायो वाचक इति पदस्फोटपक्षे पर्य्यवस्यति ॥ ६४ ॥

*पारिभाषिकेति* । शास्त्रकारसङ्केतितेत्यर्थः । पूर्वं तु प्रकृतिघटकवर्णसमुदायरूपस्य प्रत्ययघटकवर्णसमुदायरूपस्य च तस्य वाचकतोक्ता । इदानीन्तूभयसमुदायस्यैव सेति भेदः । घट् इति प्रकृतिरेनेति प्रत्यय इति प्रकृतिप्रत्यययोर्विभागस्य ज्ञानासम्भवादिति योजनाय-*सर्वे सर्वपदेति* ॥ वर्णानित्यताप्रतिपादकं भाष्यमेतत् । वस्नसादेरपि पक्षत्वादाह—*व्याजेनेति* । तथा च निश्चितसाध्यवत्त्वस्यैव दृष्टान्तत्वे

परीक्षा

समुदायपर्य्याप्तं वाचकत्वमित्यसङ्गतमत आह—*दिगिति* । दिगर्थस्तु—स्वसामानाधिकरण्य स्वाव्यवहितोत्तरक्षणोत्पत्तिकत्व उभयसम्बन्धेनैकवर्णविषयकज्ञानविशिष्टज्ञानविषयत्वमपरवर्णे इत्येवं रीत्या आनुपूर्वी कल्पनीया तस्या नानुपपत्तिरिति ॥६४॥

ननु 'शक्तम्पदम्' इति वदताम्परेषामपि पदस्य वाचकत्वं सिद्धमेवेत्यत आह—*सुप्तिङन्तमिति* । पूर्वोक्तरीत्या प्रकृतिप्रत्ययसमुदायस्य वाचकत्वसिद्धावपि यत्र प्रकृतिप्रत्ययविभागः सुज्ञानः, तस्यैव वाचकत्वमिति शङ्कानिवारणायायम्प्रयत्न इत्यवधेयम् । *स्वीकार इति* । शब्दानान्नित्यत्वसमर्थनाय भाष्यकृतेति शेषः । *न वाचकत्वमिति* । पार्थक्येनेति शेषः । किन्तु समुदायस्यैव तत्त्वमुपेयमिति भावः । *दृष्टान्तव्याजेनेति* । अयमत्र प्रयोगः—घटेनेत्यादिसमुदायाः-घटाद्यभिन्नकरणादिशक्ताः, घटाद्यभिन्नकरणादिप्रतीत्यन्वयव्यतिरेकानुविधायिज्ञानविषयत्वात् । *वस्नसादिवदिति* । नच वस्नसादीनामपि पक्षान्तर्गतत्वाद् दृष्टान्तत्वेनोपादानासङ्गतिरिति वाच्यम् । निश्चितसाध्यकस्य दृष्टान्तत्वं भवति, तच्च वस्नसादावप्यस्तीत्याशयात् । तत एव व्याजपदम् । *समु-

दायस्याऽऽदेशविधानान्नात्र तद्विभागः सम्भवतीत्यर्थः ॥ ६५ ॥

सुप्तिङन्तचयरूपवाक्यस्यापि तदाह—

हरेऽवेत्यादि दृष्ट्वा च वाक्यस्फोटं विनिश्चिनु ॥
अर्थे विशिष्य सम्बन्धाग्रहणं चेत् समं पदे ॥६६॥
लक्षणादधुना चेत्तत्पदेऽर्थेऽप्यस्तु तत्तथा ।

हरेऽव विष्णोऽवेत्यादौ पदयोः "एङः पदान्तादति" (पा०सू० ६।१।१०९)इत्येकादेशे सति न तद्विभागः सुज्ञानः।तथा च प्रत्येकं पदाज्ञानेऽपि समुदायशक्तिज्ञानाच्छाब्दबोधात् समुदायेऽप्यावश्यिकी शक्तिः ।

एवञ्च प्रकृतिप्रत्ययेषु विशिष्याज्ञायमानेष्वपि समुदायव्युत्पत्त्या

---

दर्पणः

तन्त्रत्वेन तस्य पक्षभिन्नत्वाभावेऽपि न दृष्टान्तत्वमनुपपन्नमिति भावः । *तत्र* । वस्नसादिस्थले । *विभागः*-तन्निर्णयः । अस्य वैयाकरणानामपीति शेषः ।

परे तु आमादौ प्रत्ययत्वस्य दृष्टत्वेन वामित्यादावामो न इत्यादेर्वसादेः प्रत्ययत्वमितरांशस्य प्रकृतित्वमनुमातुमशक्यमित्युक्तरीत्या न प्रकृतिप्रत्ययसमुदायरूपपदस्य वाचकत्वसिद्धिः । घटेनेत्यत्र तु नशब्दस्य टादेशत्वं भाष्यकृतैवोक्तमिति न तत्र विभागासिद्धिः । 'अजर्घाः', 'अचकात्' इत्यादौ त्वगत्या "शिष्यमाणं लुप्यमानाऽर्थाभिधायि" इति न्यायात् प्रकृतेरेव वाचकता । अस्तु वा तत्रापि लुप्तप्रत्ययानुसन्धानाद् बोधः । प्रकृतेः स्वार्थविशिष्टप्रत्ययार्थे लक्षणा वा । 'सर्वे सर्वपदादेशा' इत्यपि वर्णानित्यत्ववादिनां मते दूरापास्तमित्याहुः ॥ ६९ ॥

युक्तेरैक्यात् क्रमप्राप्तं वाक्यस्फोटनिरूपणमित्याशयेन मूलमवतारयति—*सुप्तिङन्तेति* । *तत्*-वाचकत्वम् । *समुदाय इति* । पदसमुदायरूपे वाक्ये इत्यर्थः । *एवमिति* । वाक्यशक्तिवदित्यर्थः । *विशिष्य* । सूत्रोपात्तरूपेण । अज्ञायमानेष्वित्यनेन तन्निष्ठबोधकत्वज्ञानाऽसम्भवः सूच्यते । *समुदायव्युत्पत्त्येति* । समुदा-

परीक्षा

दायस्य*—प्रकृतिप्रत्ययसमुदायस्य । *तद्विभागइति* । प्रकृतिप्रत्यययोः पार्थक्येन निश्चय इत्यर्थः । अत्र प्रक्रियाज्ञानवतां वैयाकरणानामपि न विभागज्ञानम् । "टाङसि" इति सूत्रेण नादेशस्य भाष्यकारोक्तरीत्या विधानेन प्रकृतिप्रत्ययविभागज्ञानसम्भवाद् घटेनेत्यादावित्यादिपदमुपात्तम् । तेन घट इत्यादिपरिग्रहः । वस्नसादौ प्रकृत्यादिकल्पनन्त्वाग्रहमात्रम् ॥ ६९ ॥

पदस्फोटन्निरूप्य युक्तिसाम्याद्वाक्यस्फोटं निरूपयति-*सुप्तिङन्तचयेति* । तद्वाचकत्वे युक्तिसाम्यन्दर्शयति-*हरेवेत्यादिना* । *तद्विभागः*—पदद्वयविभागः । *समुदायशक्तिज्ञानादति* । समुदाये हरेऽवेत्यादिसमुदायस्य शक्तिः स्वीकार्य्या ।

*एवमिति* । वाक्यशक्तिवदित्यर्थः । *विशिष्यः*—तत्तत्सूत्रप्रवृत्तिक्रमेण । यदि तत्तत्सूत्रप्रवृत्तिज्ञानं स्यात्; तदा प्रकृतिप्रत्यययोर्बोधकतारूपशक्तिज्ञानसम्भवः स्यात् तथा नास्तीति ध्वननाय ज्ञायमानेत्युक्तम् । *समुदायव्युत्पत्या* । "प्रकृति-

बोधात् तत्राप्यावश्यिकैव शक्तिरिति भावः ।

वस्तुतः पदैः पदार्थबोधवद्वाक्येन वाक्यार्थबोध इति पदार्थशक्तिः पदेष्विव वाक्यार्थशक्तिर्वाक्येऽभ्युपेयेति पदस्फोटवाक्यस्फोटौ व्यवस्थितौ । अन्यथा घटः कर्म्मत्वमानयनं कृतिरित्यादौ तादृशव्युत्पत्तिरहितस्यापि बोधप्रसङ्गः । घटमानयेत्यत्रेव पदार्थानामुपस्थितौ,

---

दर्पणः

यस्य वाचकत्वग्रहेणेत्यर्थः । *बोधात्*-प्रकृत्यर्थविशिष्टप्रत्ययार्थबोधादित्यर्थः । *तत्रापि* । सुप्तिङन्तरूपपदेऽपि । *शक्तिरिति* । तत्कल्पनेत्यर्थः ॥

ननु घटेनेत्यादिमूलेन समयुक्तिकस्फोटद्वयोपादानात् कथं पदस्फोटे साध्ये वाक्यस्फोटस्य दृष्टान्तत्वम् । किञ्च प्रथमं पदस्फोटस्य सिद्धौ तदर्थसम्बन्धरूपवाक्यार्थाप्रसिद्ध्या क्व वाक्यशक्तिकल्पनावसर इत्याद्यपरितोषात् पदस्फोटमेव दृष्टान्तीकृत्य वाक्यशक्तिं साधयति—*वस्तुत इति* । तथाच यत्र पदोपस्थित्या पदशक्तिग्रहसम्भवस्तत्र पदशक्त्यैव वाक्यार्थबोधो, यत्र तदसम्भवो हरेऽवेत्यादौ तत्रानापत्त्या वाक्यशक्त्यैव तद्बोध इति । यद्यपि व्यवस्थिताविति पदमहिम्ना पक्षद्वयं व्यवस्थितमिति लभ्यते, तथापि आवश्यकवाक्यस्फोटेनैवोपपत्तौ पदस्फोटकल्पनं नावश्यकमिति सिद्धान्ते वाक्यस्फोट एव पर्य्यवस्यतीति बोध्यम् । वाक्यस्फोटस्यावश्यकतामेव दर्शयति—*अन्यथेति* । वाक्यशक्त्यनभ्युपगमे इत्यर्थः । *तादृशेति* । वाक्यार्थबोधजनकत्वरूपवाक्यशक्तिज्ञानरहितस्यापीत्यर्थः । तत्सत्त्वे तु तत्राऽपि बोध इष्ट एवेति भावः । *बोधप्रसङ्गः* । घटकर्मकानयनानुकूलकृतिबोधापत्तिरित्यर्थः । पदवृत्तिज्ञानजन्यपदार्थोपस्थितेः सत्त्वादिति भावः । *घटमानयेत्यत्रेवेति* । अत्र तादृशव्युत्पत्तिरहितस्येत्यनुषज्यते ।

परीक्षा

विंशति" इत्यादि सूत्रनिपातितसमुदायस्य सहस्रादिशब्दानाञ्च व्युत्पत्त्या । *शक्तिग्रहेण एकैवेति* । एवकारेण प्रकृतिप्रत्यययोः पृथक्शक्तिव्यवच्छेदः ।

ननु 'घटेन' इत्यादिमूलेन समानयुक्त्या पदस्फोटवाक्यस्फोटयोर्व्यवस्थापनमसङ्गतम्, पदस्फोटासिद्धौ पदार्थसंसर्गरूपवाक्यार्थाप्रसिद्धेस्तादृशार्थबोधकत्वं वाक्येन सिध्यतीति कथं वाक्यस्फोटस्य व्यवस्थापनमित्यभिप्रायेण मूलस्य 'घटेन'इत्यादौ पदस्फोटसाधकत्वम्पदस्फोट सिद्धौ तद्दृष्टान्तेन वाक्यस्फोटस्यापि सिद्धिरित्यत्र तात्पर्य्यमित्याशयेनाह-*वस्तुत इति* । *व्यवस्थिताविति* । यत्र हरेऽवेत्यादौ पदविभागसम्मोहः, तत्रैव वाक्यस्य शक्तिरिति न,किन्त्वसम्मोहस्थलेऽपीति व्यवस्था । *अन्यथेति* । एवमनङ्गीकारेऽसम्मोहस्थले पदशक्यैव वाक्यार्थबोधस्वीकार इत्यर्थः । *तादृशव्युत्पत्तिरहितस्य* । वाक्यार्थबोधकत्वरूपवाक्यशक्तिज्ञानरहितस्य । एतेनैतादृशसमुदायस्य बोधकत्वज्ञानं यस्य भ्रान्तस्य तस्य बोधो भवत्येवेति सूचितम् । प्रामाणिकानान्त्वेतादृशस्थले समुदायशक्तिज्ञानाभावान्न घटकर्मकानयनमिति बोधः । समुदायशक्त्यस्वीकारेऽत्रापि पदार्थोपस्थितिसत्वात्तादृशबोधापत्तिरिति भावः ।

ननु तात्पर्य्यज्ञानरूपसहकारिकारणान्तराभावान्नापत्तिरत आह—*घटमानयेत्यादि* ।

सत्यपि तात्पर्य्यज्ञाने बोधाभावाच्च । तत्रैव घटकर्म्मकमानयनमिति बोधे घटार्थकप्रातिपदिकोत्तरं कर्म्मत्ववाचकविभक्तेस्ततो धातोस्तत आख्यातस्य समभिव्याहारः कारणमिति कार्य्यकारणभावज्ञानवतो बोधात्तज्ज्ञानमपि हेतुरिति चेत् ? तर्हि सिद्धो वाक्यस्फोटः ।

घटादिपदार्थबोधे बोधकतारूपपदशक्तिज्ञानकार्य्यकारणभावस्येव विशिष्टवाक्यार्थबोधे पदसमभिव्याहाररूपवाक्यनिष्ठबोधकतारूपवाक्यशक्तिज्ञानस्यापि हेतुत्वकल्पनात् । अर्थोपस्थापकज्ञानविषयशब्द-

---

दर्पणः

ननु शाब्दबोधकारणार्थतात्पर्य्यज्ञानरूपसहकार्यन्तराभावादेव न बोधोऽत आह–*सत्यपीति* । *बोधाभावादिति* । तादृशबोधाभावादित्यर्थः । तथाच पदाभावात् कार्याभावस्तस्य तद्धेतुतया वाक्यशक्तिरावश्यिकेति भावः । एतेन व्यतिरेकसहचार-कारणताग्राहकः प्रदर्शितः । अन्वयं प्रदर्शयन् वाक्यशक्तिं व्यवस्थापयति–*तत्रैवेति* घटमानयेत्यत्रैवेत्यर्थः । बोधादित्यनेन स्वरूपसतो हेतुत्वव्यवच्छेदः । तादृशसाकाङ्क्षनिष्ठबोधहेतुत्वस्यैवास्मन्मते वाक्यशक्तित्वेनाकाङ्क्षाशक्तिरिति परिभाषाभेदेऽपि वाक्यस्फोटसिद्धिर्निराबाधेत्याशेयनाह–*तर्हीति* ॥

ननु शाब्दबोधे हेत्वर्थोपस्थितिजनकत्वं शक्तित्वम् । तच्च पद एव, न वाक्ये । तन्निष्ठबोधकतायास्तादृशोपस्थित्यजनकत्वादत आह–*अर्थोपस्थापकेति* ॥ *शब्दवृत्तीति* । शब्दनिष्ठं यद्बोधकारणत्वमित्यर्थः । तथा चोपस्थितौ शाब्दहेतुत्वनिवेशे एतत्कल्पे प्रयोजनाभावेन तज्ज्ञानस्य तादृशोपस्थित्यजनकत्वेऽपि शक्तित्वाऽक्षतेः । बोधकशब्दस्य शब्दत्वेन निवेशाच्चाऽपभ्रंशस्यापि संग्रह इति भावः ।

ननु वाक्यशक्तिवादिमते संसर्गरूपवाक्यार्थस्य नानात्वात्तद्भेदेन शक्त्यानन्त्यम् । किञ्च पदवृत्त्या वाक्यशक्तिं विनाऽपि वाक्याऽर्थबोधजननाद्वाक्यशक्तिग्रहस्य तद्धेतुतायां व्यभिचारः । अखण्डवाक्यपक्षस्तु नेदानीं प्रक्रान्तः । कार्यतावच्छेदकऽव्यवहितोत्तरत्वनिवेशेन तद्वारणेऽप्यनुपस्थितसंसर्गे वाक्यशक्तिग्रहः शाब्दबोधात् प्रागसम्भवीति कथं तस्य कारणतेति चेत् ? सत्यम् । संसर्गस्य विशिष्यानुपस्थितावपि तदादिवत् कारकविभक्तिविशिष्टधातुपदं कारकविशिष्टक्रियाबोधकमिति सामान्यतस्तद्ग्रहात् तात्पर्य्यग्रहस्य त्वयाऽप्येवमेव वाच्यत्वात् । अनन्तरं पदविशेषसमभिव्याहारेण तात्पर्य्यवशात् संसर्गविशेषेण तत्कारकविशिष्टतत्क्रियाभानम् । नापि संससर्गाऽऽनन्त्यप्रयुक्तशक्त्यानन्त्यम् । सम्बन्धत्वस्यानुगमकस्य सत्वात्, तत्पदघटितसमभिव्याहारस्य नियामकताप्युभयोः समैवेति तन्मतनिष्कर्षः ।

परीक्षा

ननु तात्पर्य्यज्ञानसत्वेऽपि विलक्षणं किञ्चित्कारणङ्कल्प्यते, तदभावात्तादृशबोधाभाव इत्याशयेन कारणं दर्शयति—*नचैवेत्यदिना* ।

*घटादिपदार्थबोधे इति* । अस्य त्वयेत्यादिः । *कल्पनादिति* । तादृशसमभिव्याहार एवाकाङ्क्षेति तादृशाकाङ्क्षाज्ञानस्य हेतुत्वसिद्धौ वाक्यस्फोटस्य स्फुटं सिद्धिरिति भावः । *शब्दवृत्तीति* । अत्र शब्दपदम्पदबोधात्मकशब्दमात्रपरम् । श-

वृत्तिज्ञानकारणत्वस्यैव शक्तित्वात्। युक्तं चैतत्। विषयतासम्बन्धेन शाब्दबोधमात्रे वृत्तिज्ञानस्य लाघवेन हेतुत्वसिद्धेः। विवेचितञ्चैतद् भूषणे।

---

दर्पणः

ननु स्यादेवोक्तप्रकारो यदि वाक्यनिष्ठबोधकतायाः शक्तित्वं सप्रमाणं स्यात्, तदेव तु नेत्यत आह—*युक्तं चैतदिति*। *एतद्*—वाक्यनिष्ठबोधकत्वस्य शक्तित्वम्। युक्तिमेवाह—*विषयतेति*। शाब्दबोधमात्रे तत्सामान्य इत्यर्थः। *वृत्तिज्ञानस्येति*। वृत्तिज्ञानजन्योपस्थितेरित्यर्थः। विषयतासम्बन्धेनेत्यनुषज्ज्यते। *लाघवेनेति*। अन्यथा घटपदशक्तिमविदुषस्तत्पदज्ञानवतो घटमानयेति वाक्याद् बोधापत्त्या घटशाब्दबोधे घटार्थकपदवृत्तिज्ञानजन्योपस्थितित्वेन हेतुता वाच्येत्यर्थभेदेनानन्तकार्य्यकारणभावकल्पने गौरवम्। अस्मन्मते तु विषयतासम्बन्धेन घटवृत्तिज्ञानजन्योपस्थितेरसत्वान्न शाब्दे तस्य भानमित्येक एव कार्य्यकारणभावः कल्प्यत इति लाघवादित्यर्थः।

ननु घटघटत्वयोर्विशेष्यविशेषणभावे विपरीतव्युत्पन्नस्य घटमानयेत्यतो घटत्वविशिष्टबोधवारणाय घटत्वविशिष्टबोधोपस्थितेर्घटपदवृत्तिज्ञानजन्यघटत्वविशिष्टाया हेतुताया अवश्यवाच्यतया तत एवानतिप्रसङ्गे उक्तकार्य्यकारणभावे मानाभावोऽत आह—*विवेचितं चैतदिति*। पदपदार्थभेदेनानन्तकार्य्यकारणभावेषु वृत्तिप्रवेशमपेक्ष्य उपस्थितेः पदज्ञानजन्यत्वेनैव शाब्दसामग्रीकुक्षौ प्रवेश उचितः, तथा सति समावाये-

परीक्षा

त्यदनिष्ठं यज्ज्ञानकारणत्वन्तस्यैवेत्यर्थः। *युक्तमिति*। वाक्यनिष्ठबोधकतायाः शक्तित्वकल्पनं युक्तमित्यर्थः। *शाब्दबोधमात्र इति*। अत्र मात्रपदङ्कात्स्नें पदजन्ये वाक्यजन्ये चेत्यर्थः। रामठपदे छिन्नापदे च शक्तिज्ञानवतो 'रामठनीयम्प्रोक्तं छिन्नापुष्टिकरी स्मृता'इति वाक्यादबोधात्तच्छून्यस्य चाबोधादन्वयव्यतिरेकाभ्यां तत्तत्पदवृत्तिज्ञानस्य कारणत्वमवश्यं वाच्यमिति कार्य्यकारणभावानन्त्यमिति शाब्दबोधमात्रे वृत्तिज्ञानत्वेन कारणतेत्येकविधयैव कार्यकारणभावः कल्प्यः। विषयतासम्बन्धेनेत्यनेन पदार्थवाक्यार्थनिष्ठो बोधनिष्ठकार्यताया अवच्छेदकसम्बन्धः प्रदर्शितः। *वृत्तिज्ञानस्येति*। अस्य स्वविषयवृत्तिनिरूपकत्वङ्कारणतावच्छेदकसम्बन्धत्वम्। वृत्तिज्ञानजन्योपस्थितेस्तु विषयतैव कारणतावच्छेदकः सम्बन्धः।

नचैवमपि यत्किञ्चित्पदशक्तिज्ञानतो घटपदवृत्तिमविदुषो घटपदाद् घटत्वविशिष्टविषयकबोधापत्तिरिति विशेषतो घटत्वादिविशिष्टविषयकशाब्दबोधे घटादिपदवृत्तिज्ञानजन्यघटाद्युपस्थितित्वेन कारणतेत्येवंविधः कार्य्यकारणभावोऽप्यावश्यकः; इति विशेषकार्य्यकारणभावेनैवोपपत्तौ सामान्यकार्य्यकारणभावे मानाभाव इति वाच्यम्। कार्य्याभावे कारणाभावस्य प्रयोजकतायाः क्लृप्तत्वाद्विषयतासम्बन्धावच्छिन्नशाब्दबुद्धित्वावच्छिन्नाभावे विशेषाभावकूटस्य कारणत्वकल्पने गौरवमिति सामान्याभावस्यैव प्रयोजकत्वं वाच्यमित्याशयेन सामान्यकार्यकारणभावस्य प्रदर्शनादित्याशयेनाह—*विवेचितमिति*।

दर्पणः

नाकाशस्य जनकतयोपस्थितस्य देवदत्तादेश्च शाब्दे भानवारणाय विषयतया शाब्दसामान्ये वृत्तिजन्योपस्थितेर्विषयतया हेतुत्वं वाच्यम्। एवञ्च संसर्गस्य शाब्दे भानानुरोधेन संसर्गेऽपि वृत्तिकल्पनावश्यकम्। तथा च पदैः पदार्थानां वाक्येन वाक्यार्थस्य बोध इति न विशेष्यविशेषणव्यत्यासेन शाब्दबोधे पदार्थानां भानम्। पदोपस्थितानामेव संसर्गस्य वाक्यशक्त्या बोधादितिवृत्तिज्ञानस्येति यथाश्रुतार्थकमेव तत्र विवेचितम्।

वस्तुतस्तु वृत्तिज्ञानपदं यथाश्रुतार्थकमेव। वृत्तिज्ञानस्येत्यनन्तरमनुषक्तविषयतासम्बन्धेनेत्यस्य वृत्तिज्ञानविषयबोधकत्वघटकबोधीयविषयतासम्बन्धेनेत्यर्थः। अन्यथा वाक्यवृत्तिज्ञानजन्योपस्थितेरेव शाब्दबोधत्वेन तस्मिंस्तेन तद्धेतुत्वासम्भवेन वाक्यशक्तेर्गर्भस्रावादिति बोध्यम्।

अत्र वदन्ति—पदजन्यपदार्थोपस्थितिमन्तरेण शाब्दबोधानुदयात्तादृशपदार्थोपस्थितेः शाब्दबोधे हेतुतेति तावन्निर्विवादम्। पदस्य च प्रकृत्याद्यात्मकस्याऽर्थे सम्बन्धं विना तदुपस्थापकत्वासम्भवात्तस्मिन् वृत्त्यात्मकसम्बन्धोप्यावश्यक एव, न तु तत्समुदायरूपपारिभाषिकपदस्य; तत्समूहरूपवाक्यस्य विशिष्टार्थे सः। तं विनाऽपि तेभ्य आकाङ्क्षादिरूपकारणसमवधानादेव विशिष्टबोधोपपत्तेः। एकपदार्थविशिष्टापरपदार्थशाब्दत्वस्यैव तत्कार्य्यतावच्छेदकत्वात्।

यत्तु—लाघवाद् वृत्तिज्ञानजन्योपस्थितेर्विषयतासम्बन्धेन हेतुत्वमेव वाक्यशक्तौ प्रमाणमिति चेत्? न। स्वातन्त्र्येण तद्धेतुत्वस्यैवासिद्धेः। तथाहि—तादृशकार्य्यकारणभावे वृत्तित्वेन पदवृत्तेर्निवेशः किं वाक्यवृत्तेः, किं वा वृत्तिसामान्यस्य?। न तावदाद्यः। पदवृत्तिज्ञानजन्योपस्थितेः शाब्दहेतुत्वस्य सर्वैरेवाभ्युपगमात्। न द्वितीयः। वाक्यवृत्तेस्ततः प्रागसिद्धेः। अत एव न तृतीयः। किञ्च तव मते वाक्यशक्तिजन्योपस्थितेः शाब्दबोधात्मकत्वेन तस्मिंस्तद्विषयत्वासम्भवादपि नोक्तरीतिः साधीयसी। अपि च वाक्यवृत्तिज्ञानस्य शाब्दसामान्येन स्वातन्त्र्येण हेतुत्वं, यदा कदाचिद्विवरणादिना घटादिपदशक्तिज्ञानजन्यपदार्थोपस्थितिदशायां घटमानयेति वाक्यशक्तिमविदुष आकाङ्क्षादिवशाच्छाब्दबोधोदयेन व्यभिचारात्।

यदपि समभिव्याहाररूपाकाङ्क्षैव वाक्यमिति। तदपि न। तथा सति घटीयाकर्मतेत्यादिबोधे घटमानयेति वाक्यं साकाङ्क्षं, निराकाङ्क्षं च घटः कर्मत्वमिति सर्वसिद्धव्यवहारानुपपत्तिः। पदयोः समभिव्याहार इतिवत् पदयोर्वाक्यमिति व्यवहारप्रसङ्गश्चेति समभिव्याहृतपदानामेव वाक्यत्वमुपगन्तव्यम्। तथाच—समभिव्याहारस्य शाब्दबोधहेतुत्वेऽपि वाक्यस्य तत्त्वं दुरुपपादमेवेति क्व वाक्यशक्तिसिद्धिः। समभिव्याहारनिष्ठबोधजनकत्वग्रहवतो बोधात्तज्ज्ञानं हेतुरित्यपि रिक्तं वचः। अन्वयव्यतिरेकाभ्यां समभिव्याहारज्ञानस्यैव शाब्दधीहेतुत्वेन तन्निष्ठबोधजनकत्वज्ञानस्य हेतुताया एवाभावात्। न च तदपि सम्भवति। शाब्दबोधात् प्राक् संसर्गस्यैवानुपस्थितेः। सामान्यतस्तदुपस्थितावपि विशेषरूपेण भानाऽर्थं तात्पर्य्यज्ञानाद्यपेक्षणे च मूलशैथिल्यात् वाक्यशक्तेरेवासिद्ध्यापत्तिः। वक्ष्यमाणरीत्या शाब्दबोधात् प्राक् तदुपस्थित्यभ्युपगमे वाक्यवृत्तिज्ञानजन्योपस्थित्यनन्तरं शाब्दबोधाभ्युपगमे वा शाब्दप्रामाण्यभङ्गापत्तिः। अनधिगतार्थग्रहकारणस्यैव प्रमाणत्वात्। अत एव सूत्रकृता

ननु वाक्यार्थस्यापूर्वत्वात् कथं तत्र शक्ति ह इत्याशङ्क्याह—*अर्थ इति* ॥ वाक्यस्येति शेषः। वाक्यस्य वाक्यार्थे विशिष्य शक्तिग्रहणञ्चेत्तर्हि पदे एवान्वयांशे शक्तिरिति पक्षेऽपि तद्ग्रहासम्भवस्तुल्य इत्यर्थः।

यदि च पदशक्तिः पदार्थांशे ज्ञाता; अन्वयांशे वाऽज्ञातोपयुज्यत इति कुब्जशक्तिवादः, तदा ममापि वाक्यस्य शक्तिरज्ञातैवोपयुज्यत

---

दर्पणः

"कृत्तद्धितसमासाश्च" ( पा० सू० १।२।४६ ) इत्यत्र समासग्रहणं कृतम्। वाक्यशक्तौ तु तद्वैयर्थ्यं स्पष्टमेव। "सामयिकः शब्दादर्थप्रत्ययः" इति कणादोक्तेर्वाक्यशक्तिग्राहकानुशासनादेरभावेन तद्ग्रहाऽसम्भवाच्चेति वाक्यस्फोट आपातरमणीय एवेति। पूर्वोक्तशक्तिग्रहप्रकारस्य शैथिल्यं मनसि निधाय तस्मिन् प्रकारान्तरं वक्तुमग्रिमग्रन्थ इत्याशयेनाह-*नन्विति* ॥ *अपूर्वत्वात्*-शाब्दबोधात् प्रागनुपस्थितत्वात्।

ननु शाब्दबोधात् पूर्वं पदे प्रत्यक्षाद्युपस्थितपदार्थनिरूपितशक्तिग्रहः सुलभ एवेति, पदे सममिति मूलमनुपपन्नमत आशयं प्रकाशयति--*पद एवेति*। पदानामेवान्वितपदार्थे शक्तिरन्वयश्च सामान्यरूपेण ज्ञानम्, अत एव घटादिपदादन्वितघटाद्युपस्थितौ नियमेन तत्प्रतियोग्याकाङ्क्षा भवति--किमन्वितो घटः किमन्वितं कर्मत्वमित्याद्याकारा। सामान्यधर्मप्रकारकज्ञानस्य विशेषधर्मप्रकारकजिज्ञासाजनकत्वात्। विशेषरूपेण भाने त्वमादिपदसमभिव्याहारो नियामकोऽत एव तस्य शाब्दे भानम्। पदवृत्तिविषयत्वात्। अशक्यस्यापि भानेऽतिप्रसङ्गात्। न चैवं घटमानयेत्यत्रेतरान्वितं कर्मत्वमितिरीत्यानेकधा संसर्गस्य भानापत्तिस्तत्तत्पदेभ्यस्तथार्थोपस्थितावप्याकाङ्क्षावशादेकधैव तद्भानसम्भवात्।

नचाकाङ्क्षायास्तद्भाननियामकत्वावश्यकत्वे तत्र वृत्तिकल्पनाऽपार्थेति वाच्यम्,। अशक्यभानभियैव तदभ्युपगमात्। तथाच पदशक्त्यैव संसर्गभानोपपत्तौ तत्र न वाक्यशक्तिः। पदत्वापेक्षया वाक्यस्य गुरुत्वाच्चेति तन्मतम्। तथाचान्विताभिधानमतेऽपि पदे वाक्यार्थशक्तिग्रहासम्भवः समान इत्यर्थः॥ *ज्ञातेति*॥ पदार्थानां प्रागुपस्थित्या तत्र पदार्थशक्तिग्रहसम्भवादिति भावः। *अज्ञातैवेति*। वृत्त्यभ्युप-

परीक्षा

*अपूर्वत्वात्*—शाब्दबोधात्प्रागनुपस्थितत्वात्। *इति पक्ष इति*। पदानामन्वितपदार्थे शक्तिः। अन्वयश्च—सामान्यरूपेणैव भासते। अत एव घटादिपदादन्वितो घट इत्याद्यनुपस्थितौ किमन्वितोऽयमिति विशेषाकाङ्क्षा दृश्यते इति तन्मतम्। वस्तुतस्तन्न युक्तम्। 'घटमानय'इत्यादि वाक्याद् घटकर्मकमानयनमित्याद्याकारको बोध एवानुभवसिद्धो। ननु घटाद्यंशे इतरान्वितत्वस्य भानमिति सम्प्रदायात्।

परन्तु परस्य मतमाश्रित्य दृष्टान्ततयोपन्यास इति। *ज्ञातेति*। पदार्थानाम्प्रागुपस्थितत्वात्तदंशे पदशक्तिज्ञानस्य सम्भवादिति भावः। *कुब्जशक्तिवाद इति*। यथा 'हरिद्रायां नद्याङ्घोषः' इति वाक्यश्रवणोत्तरन्नदीपदसमभिव्याहाराद्धरिद्रापदस्य नदीविशेषपरत्वनिर्णये तत्सम्बन्धित्वेन पूर्वज्ञाततीरविशेषणप्रत्ययः, तथा संसर्गांशे वाक्यस्य शक्तिरज्ञातैव तद्भानोपयोगिनीति भावः। *वाक्यस्य शक्तिरिति*। वाक्यनिष्ठा

इति वादाभ्युपगमस्तुल्य इति भावः ।

ननु वृद्धव्यवहारं पश्यतो मनसा पदार्थवद्वाक्यार्थेऽपि तद्ग्रह इति चेत् तुल्यमित्याह—*लक्षणादिति*॥ लक्ष्यते तर्क्यतेऽनेनेति लक्षणं मनस्तस्मात् । अपिपदं पदपदोत्तरं बोध्यम् । पदेऽपि लक्षणात्तद्ग्रहश्चेत्तर्ह्यस्तु वाक्येऽपीति शेषः ।

वस्तुतस्तु समुदितार्थे विशिष्टवाक्यस्यैव प्रथमं तद्ग्रहः । आ-

---

दर्पणः

गमस्तु शाब्दे भानापत्त्यैवेति भावः ॥ पदार्थवदिति सप्तम्यन्ताद्वतिः । उपमेये सप्तमीदर्शनात् ॥ *वाक्यार्थेऽपि* । *संसर्गेऽपीत्यर्थः* । इदं च बोध्यत्वं शक्तिरित्यभिप्रेत्य ॥ *तद्ग्रहः*—शक्तिग्रहः । लक्षणशब्दस्य चिह्नादौ प्रसिद्धेः प्रकृतोपयोग्यर्थपरतया तं व्याचष्टे—*लक्ष्यत इति* ॥ मूले—*अर्थे इति* ॥ निरूपितत्वं सप्तम्यर्थः । तच्छब्दाऽर्थे शक्तिज्ञानेऽन्वेतीत्यभिप्रेत्य व्याचष्टे—*पदेऽपीत्यादि* ॥ *तदग्रह इति* । वाक्यार्थनिरूपितशक्तिग्रह इत्यर्थः ।

अयम्भावः-घटमानयेत्यादिवृद्धव्यवहाराद्यस्य पदे पदार्थशक्तिनिर्णयस्तस्य तद्वाक्यश्रवणे पदैः पदार्थोपस्थित्यादिसमवधाने मनसा तत्संसर्गोपस्थितिर्नानुपपन्ना । परन्तु मानसस्य प्रायः संशयात्मकस्यापि सम्भवात्तन्निश्चयार्थं शब्दाऽऽदरः । तत्र शक्तिग्रहहेतुलिङ्गादेर्निर्णायकस्य सत्त्वेन संशयत्वासम्भवादिति ।

ननु शब्दनिष्ठशक्तिनिर्णयस्यैव शाब्दबोधे हेतुतावधारणेन तस्य शाब्दबोधात् प्रागुक्तरीत्याऽसम्भवेन वाक्यशक्तेः शाब्दबोधहेतुत्वं दुर्घटमेवेत्यत आह—*वस्तुतस्त्विति* । *तद्ग्रहः* । विशिष्टवाक्यार्थशक्तिग्रहः । तथा च शक्तिग्राहकशिरोमणिना

परीक्षा

संसर्गनिरूपिता शक्तिरित्यर्थः । संसर्गांशे वृत्त्यभ्युपगमस्तु शाब्दबोधविषयत्वान्यथानुपपत्त्यैव प्रयोज्यप्रयोजकवृद्धव्यवहारम्पश्यतो बालस्य प्राथमिकशक्तिनिर्णयो यथा मानसो भवति, तथा पदैः पदार्थोपस्थितौ मनसा वाक्यार्थबोधो भविष्यति, न तु शब्दाच्छाब्दबोध इति ।

तदनुरोधेन तत्र शक्तिकल्पनं व्यर्थमित्याशयेन शङ्कते—*नन्विति*। *पदार्थवदिति*। अत्रोपमेये सप्तमीदर्शनात्सप्तम्यन्ताद्वतिः । *वाक्यार्थः*-संसर्गः । *तद्ग्रहः*—शक्तिग्रहः । मानस इति शेषः । लक्षणशब्दस्य लोके लाञ्छनपरत्वेऽपि प्रतियोग्यार्थमाह—*लक्ष्यत इत्यादिना* । मूले *अर्थ इति* । सप्तम्यर्थो निरूपितत्वम् । पदपदोत्तरसप्तम्यर्थस्त्वाधेयत्वमेव । *तत्तथेति* । अत्र तत्पदार्थः शक्तिज्ञानपरः । तुल्ययुक्त्या वाक्यार्थनिरूपितवाक्यविशेष्यकमानसशक्तिनिर्णयवत्पदेऽपि तथास्त्विति व्याकरणस्य शक्तिग्राहकसिद्धान्तभङ्गः । इष्टापत्तिस्तु न । मानसस्यैव तस्य स्वीकारे मानसं ज्ञानाश्रयो संशयात्मकं भवतीति संशयापत्तेः ।

यदि पदशक्तिनिर्णयो व्याकरणादिजन्यस्तथा शक्तिनिर्णायकस्य शाब्दबोधाङ्गत्वम्प्रागवधारितम्, तस्य च शाब्दबोधात्प्रागुक्तरीत्या संभव इति वाच्यशक्तिः शाब्दबोधाङ्गत्वं दुर्घटमेवेत्यत आह—*वस्तुतस्त्विति* । *तद्ग्रहः* । वाक्यार्थे विशिष्टे

वापोद्वापाभ्यां परं प्रत्येकं तद्ग्रह इति बोध्यम् ॥ ६६ ॥

दर्पणः

व्यवहारेण पूर्वं वाक्य एव शक्तिग्रहेण तस्यैव शाब्दबोधहेतुत्वाऽवधारणात्ताहशवृत्तेश्च स्वाश्रयविषयकत्वस्वविषयकोद्बुद्धसंस्कारसामानाधिकरण्योभयसम्बन्धेन वैशिष्ट्यस्ये-दानीन्ततः वाक्यज्ञानेऽप्यक्षतत्वान्न वृत्तिज्ञानस्य शाब्दबोधे हेतुतायां व्यभिचारः। मध्ये वाक्यार्थोपस्थितेरनपेक्षणाच्च नोक्तदोषावसर इति भावः।

ननु तर्हि पदस्फोटस्य निरालम्बनतापत्तिरत आह-*आवापोद्वापाभ्यामिति*। आनयनाऽपसारणाभ्यामेकपदोपादानापरापदानुपादानाभ्यामित्यर्थः। *तद्ग्रहः*। प्रत्येकपदे प्रत्येकपदार्थशक्तिग्रहः। तथा च प्रत्येकपदशक्तिसाचिव्येनाकाङ्क्षादिवशात् पदाद्वाक्यार्थशाब्दबोधस्तदा पदस्फोटो, यदा तु तन्निरपेक्षैव सा बोधं जनयति, तदा वाक्यस्फोट इति मतद्वयं पर्य्यवस्यतीति भावः।

केचित्तु—उपस्थिताः पदार्थास्तदुपस्थितिर्वा शाब्दबोधहेतुर्नतु पदज्ञानमपि। तद्विनापि शाब्दबोधोदयेन व्यभिचारात्। तदुक्तम्।

पश्यतः श्वेतमारूपं हेषाशब्दं च शृण्वतः।
खुरविक्षेपशब्दं च श्वेतोऽश्वो धावतीति धीः ॥ इति ॥

तन्न। शब्दं विना जायमानस्य घटादिचाक्षुषस्यापि शाब्दत्वापत्तेः। तत्र पश्यामि, न शाब्दयामीत्यनुव्यवसायान्न शाब्दत्वं यदि, तदा प्रकृतेऽपि समम्। उक्तप्रतीतेर-नुमानेनैव निर्वाहात्। तत्र शाब्दप्रत्ययस्त्वसिद्ध एवेत्यादि स्वयमूह्यम् ॥ ६६ ॥

परीक्षा

शक्तिग्रहः। अयम्भावः-शक्तिविशिष्टनिश्चयस्य शाब्दबोधहेतुरिति पूर्वं ज्ञाता या शक्ति-स्तस्याःस्वाश्रयशब्दविषयकत्व, स्वाश्रयशब्दविषयकोद्बुद्धसंस्कारसामानाधिकरण्यो-भयसम्बन्धेन। इदानीन्तद्वाच्यताज्ञानेऽपि सत्त्वान्नवृत्तिज्ञानस्य शाब्दबोधहेतुतायां व्यभिचार इति।

नन्वेवम्पदस्फोटपक्षो निरालम्बन एव स्यादत आह-*आवापोद्वापाभ्यामिति*। सङ्ग्रहत्यागाभ्यामित्यर्थः। *तद्ग्रहः*-प्रत्येकपदे प्रत्येकपदार्थशक्तिग्रहः। एवञ्च प्रत्येकपदशक्तिज्ञानजन्यप्रत्येकपदार्थोपस्थित्यनन्तरं तत्सहकृताकाङ्क्षा; ज्ञानादिना शाब्दबोधस्तदा पदस्फोट इति व्यवहारो, यदा तु तन्निरपेक्षवाक्यज्ञानमात्रेण वाक्या-र्थबोधस्तदा वाक्यस्फोट इति व्यवहारः।

यत्त्वर्थाध्याहारवादिन आहुः—शब्दज्ञानन्न शाब्दबोधहेतुरर्थोपस्थितिमात्रेण यत्र शाब्दबोधस्तत्र व्यभिचारात्। अत एव—

पश्यतः श्वेतमारूपं हेषां शब्दञ्च श्रृण्वतः।
खुरविक्षेपशब्दं च श्वेतोऽश्वो धावतीति धीः ॥

इति वृद्धाः। एवञ्च पदस्फोटादिविचार आपातरमणीय एवेति, तत्तुच्छम्। शब्दं विना जायमानज्ञानस्य शाब्दबोधपदव्यवहार्यत्वे चाक्षुषज्ञानस्यापि शाब्दत्वापत्तेः। तत्र पश्यामीत्येवानुव्यवसायो; नतु शाब्दयामिति। तस्य न शाब्दत्वमिति चेत्तदा प्रकृतेऽपि यत्र मनसा पदार्थोपस्थितिमात्रम्, तत्र जानामीत्येवानुव्यवसायान्न शा-

इयमेव मीमांसकानां वेदान्तैकदेशिनां च गतिरित्याह—

सर्वत्रैव हि वाक्यार्थो लक्ष्य एवेति ये विदुः॥
भाट्टास्तेऽपीत्थमेवाहुर्लक्षणाया ग्रहे गतिम्॥६७॥

*भाट्टा इति*। तदनुयायिनां वाचस्पतिकल्पतरुप्रभृतीनामुपलक्षणम्। ननूक्तपक्षद्वयमनुपपन्नम्, उत्पत्तेरभिव्यक्तेर्वैकदाऽसम्भवेन उत्पन्नानामभिव्यक्तानां वर्णसमूहरूपदज्ञानासम्भवात्। तथा च सुतरां तत्समूहरूपवाक्यज्ञानासम्भव इति चेद्? न।

---

दर्पणः

*उपलक्षणमिति*। त्वन्मते, 'गभीरायां नद्यां घोष' इत्यादौ प्रत्येकपदशक्त्या स्वशक्यसम्बन्धरूपलक्षणया वोक्तदिशाऽभीप्सितार्थान्वयबोधाऽसम्भवात्, स्वबोध्यसम्बन्धस्य लक्षणत्वाभ्युपगमेन वाक्यार्थमात्रे वाक्यलक्षणाङ्गीकारादिति भावः। *पक्षद्वयमिति*। पदवाक्यभेदेन व्यवस्थितं स्फोटद्वयमित्यर्थः। अनुपपत्तिमेवाह—*उत्पन्नानामिति*। वर्णानित्यतावादिमते वर्णानां योग्यविभुविशेषगुणत्वेन स्वोत्तरोत्पन्नगुणनाश्यत्वादेकदाऽवस्थानासम्भवः। तन्नित्यतावादिमते त्वाह—*अभिव्यक्तानामिति*। वर्णा नित्याः, किन्तु तदभिव्यक्तिरेवानित्या। वर्णोत्पादकत्वेनान्याभिमतानामेव कण्ठाद्यभिघातादीनां तदभिव्यञ्जकत्वाभ्युपगमात्। तथाचाभिव्यक्तेरपि योग्यविभुविशेषगुणतया स्वोत्तरोत्पन्नगुणनाश्यत्वाविशेषात्। क्षणिकत्वात्तद्विशिष्टवर्णानामपि युगपदवस्थानासम्भव एवेत्यर्थः।

नन्वस्तु वर्णानां युगपदनवस्थानं, किमस्माकमनिष्टमत आह—*वर्णसमूहेति*। वाक्यस्फोटकल्पेऽपि तदाह—*तथा चेति*। *ज्ञानासम्भव इतीति*। आशुविना-

परीक्षा

ब्दबोध इति। उक्तस्थले 'श्वेतोऽश्वो धावति'इति बुद्धिस्त्वनुमितिरूपैवेति बोध्यम्॥६६॥

*इयमेव*। स्फोटस्वीकाररूपैव। अयम्भावः-तन्मते स्वबोध्यसम्बन्धो लक्षणा। 'देविकायान्नद्याङ्घोषः'इत्यादिवाक्यं यत्र प्रयुज्यते; तत्र देविकाभिन्ननदीतीरवृत्तिर्घोष इति बोधो भवति। तस्य प्रत्येकपदशक्त्या शक्यसम्बन्धरूपलक्षणया वोपपत्तिर्न सम्भवति। शब्दस्याशुविनाशितया पदज्ञानस्यवासंभवादिति स्फोटस्य स्वीकार आवश्यक इति। *ये*-भाट्टाः। अविदुरित्यत्रान्वयः। *लक्षणाया इति*। वाक्यार्थे वाक्यस्य समुदायात्मकस्य शक्त्यभावात्तद्विषयकबोधोपपत्तये या लक्षणाऽङ्गीक्रियते, तस्या इत्यर्थः। *पक्षद्वयम्*—पदवाक्यभेदेन स्फोटद्वयम्। *उत्पत्तेरिति*। वर्णानामनित्यत्ववादिमतेनेदम्। तन्मते योग्यविभुर्विशेषगुणानां यौगपद्याभावात्स्वोत्तरोत्पन्नगुणनाश्यत्वाच्चैकदावस्थानासम्भवः। वर्णनित्यतावादिमताभिप्रायेणाह—*अभिव्यक्तेरिति*। तन्मते वर्णा नित्याः, तेषामभिव्यक्तिस्त्वनित्या। सा च वर्णोत्पादकत्वेन पराभिमतायाः कण्ठाद्यवच्छिन्नवायुसंयोगादिघटितासामग्रीतया ज्ञायते। एवञ्चाभिव्यक्तेरपि योग्यविभुर्विशेषगुणात्मकतयोक्तरीत्याऽसम्भव इति। *अभिव्यक्तवर्णसमूहरूपपदज्ञानासम्भवादिति*। वर्णा नित्या एवाभिव्यक्तिस्तु

उत्तरवर्णप्रत्यक्षसमये तस्मिन्नव्यवहितोत्तरत्वसम्बन्धेनोपस्थित-पूर्ववर्णवत्त्वं, तथा तदुत्तरप्रत्यक्षकाले उपस्थितविशिष्टतद्वर्णवत्त्वं तस्मिन् सुग्रहमिति तादृशानुपूर्व्वीघटितपदत्वस्येव वाक्यत्वस्यापि सुग्रहत्वात् ॥ ६७ ॥

* इति पदवाक्यस्फोटनिर्णयः *

---

दर्पणः

शिनां क्रमिकाणां मेलकाऽसम्भवादन्तिमवर्णोत्पत्तिकाले तदभिव्यक्तिकाले वा पूर्वपूर्ववर्णानां तावदभिव्यक्तानां वाऽवस्थानासम्भवेन तत्समूहरूपपदस्य वाक्यस्य वा तादात्म्येन प्रत्यक्षकारणस्याभावात् । प्रत्यक्षस्यैवाऽसम्भवेन तत्रोक्तशक्ति-ग्रहस्य गगनकुसुमायमानत्वादित्यखण्डलार्थः ।

अभिव्यक्तिपक्षमादाय समाधत्ते—*उत्तरवर्णप्रत्यक्षेति* । *अव्यवहितोत्तरेति* । एतन्नये वर्णानां नित्यत्वेन सर्वेषामेव वर्णानामव्यवधानेन स्वाधिकरणक्षणोत्तरकाल-वृत्तित्वादव्यवस्थापत्त्या स्वस्वाभिव्यक्तिगतमेवाव्यवहितोत्तरत्वं वाच्यम् । तदारो-पादेव वर्णेष्वव्यवहितोत्तरत्वव्यवहारः । अत एव तत्रोपस्थितेर्विशेषणतया निवेशः । तच्चाव्यवहितत्वे सत्युत्तरत्वम् । अव्यवहितत्वं च—स्वध्वंसानधिकरणक्षणसम्बन्धि-त्वम् । तेन 'घटित, घट' इत्यादौ नातिप्रसङ्गः । उत्तरत्वं तु स्वाऽधिकरणक्षणध्वंसा-धिकरणसमयोत्पत्तिकत्वम् । तेन, 'पिब, मधु, शीघ्रम्' इत्यादौ न शीधुभागस्य पद-त्वम् । अन्यनिरूपिताव्यवधानादेरन्यसम्बन्धत्वाभावेन स्वत्वस्य परिचायकतया प्रवे-शान्नानुगमशङ्काऽपि । उत्तरोत्तरवर्णोपस्थितेः पूर्वपूर्ववर्णोपस्थितिध्वंसानधिकरणसम-यसम्बन्धित्वात्तदधिकरणक्षणध्वंसाधिकरणत्वाच्च निरुक्तसम्बन्धेन तद्वत्त्वमविकलम् । इत्थञ्च पूर्वपूर्ववर्णांऽशेऽलौकिकस्य चरमवर्णांऽशे लौकिकप्रत्यक्षस्य सम्भवात्तत्राऽर्थं बोधकत्वरूपशक्तेः सुग्रहत्वादुक्तपदवाक्यस्फोटसिद्धिर्निराबाधेति भावः ॥ ६७ ॥

इति भूषणसारदर्प्पणे पदवाक्यस्फोटनिरूपणम् ॥ १४ ॥

परीक्षा

तेषामनित्येति पक्षालम्बेन समाधत्ते—*उत्तरवर्णेत्यादिना* । एतन्मते वर्णानान्नित्य-त्वात्सर्वेषामेव वर्णानां स्वाधिकरणक्षणोत्तरक्षणवृत्तितानुपूर्व्यसम्भव इत्यभिव्यक्ति-गतपौर्वापर्य्यमादायाभिव्यङ्ग्येष्वारोपितः क्रमः । अत एवाभिव्यक्ता वर्णा बोधका इति व्यवहारः । उपस्थितीनामव्यवहितोत्तरत्वञ्चाव्यवहिते सत्युत्तरत्वम् । अव्य-वहितत्वं च-स्वध्वंसानधिकरणक्षणवृत्तित्वम् । उत्तरत्वं च-स्वाधिकरणक्षणध्वं-साधिकरणसमयोत्पत्तिमत्वम् । एवञ्चोत्तरवर्णे पूर्ववर्णवैशिष्ट्यमुक्त्वा व्यवहि-तोत्तरत्वसम्बन्धेन स्वाभिव्यक्तिविशिष्टाभिव्यक्तिविषयत्वसम्बन्धेन । एवम्प्रथमवर्ण-विशिष्टद्वितीयवर्णवैशिष्ट्यं तृतीयवर्णे इति क्रमेण चरमवर्णप्रत्यक्षम् । तदनन्तरं चरम-वर्णांशे लाकिकमन्यवर्णांशे त्वलौकिकमिति ।पदवाक्यप्रत्यक्षस्य संभव इति ॥ ६७ ॥

इति सखण्डपदवाक्यस्फोटविवरणम् ॥ १४ ॥

## अखण्डस्फोटनिर्णयः ।

इदनीमखण्डपक्षमाह—

पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च ॥ ६८ ॥
वाक्यात् पदानामत्यन्तं प्रविवेको न कश्चन ॥

पदे पचतीत्यादौ न वर्णाः । नातो वर्णसमूहः पदमिति शेषः । दृष्टान्तव्याजेनाह—*वर्णेष्विति* ॥ एकारौकारलृकारऋकारादिवर्णेष्ववयवाः प्रतीयमाना अपि यथा नेत्यर्थः । क्वचिदित्येव पाठः । एवं वाक्येऽप्याह—*वाक्यादिति* ॥ पदानामपि वाक्याद्विवेको = भेदो नास्तीत्यर्थः ।

अयम्भावः—वाक्यं पदं चाखण्डमेव, न तु वर्णसमूहः । अनन्तव-

---

दर्पणः

अखण्डस्फोटनिर्णयः ।

अखण्डस्फोटनिरूपणेऽवसरस्य सङ्गतित्वं सूचयन्नाह—*इदानीमिति* । सखण्डस्फोटनिरूपणानन्तरमित्यर्थः । *अखण्डेति* । पदवाक्ययोरखण्डत्वं चाविद्यमानावयवकत्वम् । वर्णानामावयवाघटितत्वस्यापि सिपाधयिषितत्वादाह—*दृष्टान्तेति* । दृष्टान्तवाक्यस्येवादिघटितत्वनिवेशेन तदभावात् कथं वर्णेष्वित्यादेस्तत्त्वमित्याशङ्क्य यथाशब्दान्तर्भावेण मूलं व्याचष्टे-*यथेति* । *इवेतीति* । अवयवा इवेत्यर्थः । तथा च यथाश्रुतस्यैव दृष्टान्तत्वं नानुपपन्नमिति । 'विचिर् पृथग्भावे' इति प्रत्युपसृष्टघञन्तभावसाधनप्रविवेकशब्दार्थः पृथग्भावो भेदे पर्य्यवस्यतीत्याशयेनाह-*भेद इति* ।

ननु पदादिप्रतीतौ तदवयवानां वर्णानामुपलभ्यमानत्वात् कथं तदसत्त्वमत आह—*अयम्भाव इति* ॥ *अखण्डमेवेति* ॥ व्याख्यातार्थम् । एवकारव्यवच्छेद्यं स्पष्टयति-*न त्विति* ॥ *अनन्तेति* ॥ अनेकेत्यर्थः ॥ ननु 'ककारो, गकार' इति प्रतीतिरेव वर्णकल्पने मानम् । यदि च वर्णाभिव्यञ्जकत्वेनोत्पादकत्वेन वाऽभिमतवायुसंयोगविशेषाऽभिव्यक्तस्फोटे एव कत्वादिना तादृशप्रतीतिविषय इति विभाव्यते, तदापि 'उत्पन्नः, ककारः नष्टः ककारः' इत्यादिप्रतीत्यनुपपत्तिः । स्फोटाऽतिरिक्तककारादीनां त्वयाऽनभ्युपगमात् । तस्य च नित्यत्वात् । व्यञ्जकनिष्ठाया उत्पत्तेस्तद्विष-

परीक्षा

अवसरस्य सङ्गतित्वं सूचयन्नाह-*इदानीमिति* । अखण्डत्वञ्च-अवयवाघटितत्वम् । वर्णानामप्यवयवशून्यत्वं साधयितुमिष्टमित्याशयेन व्याजपदम् । ननु घटपटादिपदप्रत्यक्षे घटपटादीनामनुभूयमानत्वात्कथं वर्णानामसत्त्वं प्रतिपादयसीत्यतस्तदुपपादयति-*अयम्भाव इत्यादिना* । *अनन्तेति*-अनेकेत्यर्थः । ननु करोति गच्छतीत्यादौ

र्णकल्पने मानाभावात्। तत्तद्वर्णोत्पादकत्वेनाभिमतवायुसंयोगनिष्ठं तत्तद्वर्णजनकताया व्यञ्जकताया वाऽवच्छेदकं वैजात्यमादायैव ककारो गकार इत्यादिप्रतीतिवैलक्षण्यसम्भवात्। स्पष्टं हि भामत्याम्—"तारत्वादि वायुनिष्ठं वर्णेष्वारोप्यते" इत्युक्तं देवताधिकरणे।

नचैवं वायुसंयोग एव वाचकोऽपि किं न स्यादिति वाच्यम्। प्रत्यक्षोपलभ्यमानककारादेरेव वाचकत्वस्यानुभवसिद्धत्वात्।

---

दर्पणः

थत्वे सुखादीनामपि नित्यतापत्तिरत आह–*तत्तद्वर्णोत्पादकत्वेनेति*॥ वैजात्ये प्रमाणं दर्शयति–*वर्णजनकताया इत्यादि*। तथा च तादृशवैजात्यं समवायेन स्फोटांऽशे आदायारोप्योक्तप्रतीतिवैलक्षण्योपपत्तौ न तदनुपपत्तिरतिरिक्तककारादिवर्णसाधिका। नाप्युत्पन्नः क इत्यादिप्रतीतिस्तथा। 'सोऽयं क' इत्यभेदतत्प्रत्यभिज्ञारूपबाधकसत्त्वेन तादृशप्रतीतेर्भ्रमत्वात्। नाऽपि सुखादीनां नित्यतापत्तिः। तन्नाशकस्य स्वोत्तरवर्तियोग्यात्मकविशेषगुणस्य जागरूकत्वादिति भावः॥ *भामत्याम्*। तन्नामकवाचस्पतिग्रन्थे॥ *आरोप्यत इतीति*॥ एतदनुरोधेनैवादायेति पदमारोपपरतया व्याख्यातम्॥ मतान्तरन्तु वक्ष्यते॥

वायुसंयोगोऽपीत्यपिरेवाऽर्थे। कण्ठताल्वाद्यभिघातजवायुसंयोग एवेत्यर्थः। समवायस्यानारोपितस्य वाचकतावच्छेदकत्वे लाघवात्। तथाहि संयोगस्यैव काद्यात्मकत्वमस्त्वित्यर्थः॥ समाधत्ते—*प्रत्यक्षेति*॥ अयमाशयः–कादिवर्णानामुक्तसं-

परीक्षा

ककारो गकार इति विलक्षणप्रतीतिसत्वात्कथमसत्वमत आह–*तद्वर्णत्वमिति*। *अवच्छेदकमिति*। एतेन वैजात्ये प्रमाणन्दर्शितम्। एवम्प्रकारेण सिद्धं यद्वैजात्यं तस्य समवायसम्बन्धेन स्फोटे आरोपात्ककारादिविषयकविलक्षणप्रतीतिनिर्वाहः। न चोत्पन्नः क इत्यादिप्रतीतिवशादनित्यत्वम्। सोऽयं ककार इत्यभेदावगाहिप्रत्यभिज्ञया विरोधेन तस्याः प्रतीतेर्भ्रमत्वात्। अभिव्यञ्जकगतोत्पत्तिविनाशाद्यारोपेण तस्या उपपत्तेश्च। एवञ्च व्यञ्जकधर्माःस्फोटे आरोप्यन्ते। व्यञ्जकनिष्ठं वैजात्यमेव परम्परासम्बन्धेन कत्वादिकमिति सिद्धम्। *भामत्यामिति*। भामतीनामके वाचस्पतिनिर्मिते ग्रन्थे।

*वायुसंयोग एवेति*। कण्ठताल्वाद्यभिघातजनकवायुसंयोग इत्यर्थः। अनारोपितधर्मस्य वाचकतावच्छेदकत्वकल्पनापेक्षया आरोपितस्य वाचकतावच्छेदकत्वगौरवमितिभावः। वाचकविषयकं श्रावणप्रत्यक्षमनुभवसिद्धम्। यदि वायुसंयोग एव वाचकः स्यात्तदा तस्यातीन्द्रियतया प्रत्यक्षन्न स्यात्। स्फोटस्तु पदं वाक्यं वा शृणोमीत्यनुभवात्प्रत्यक्षमेव। भवन्मते कथं कत्वादिप्रत्यक्षन्तस्याभिव्यञ्जकधर्मत्वस्य भवतीत्युक्तत्वादिति वाच्यम्। सुरभिचन्दनमिति प्रत्यक्षे चक्षुरयोग्यस्यापि सौरभस्य भानवच्छ्रवणायोग्यस्याप्यभिव्यञ्जकधर्मस्य श्रावणप्रत्यक्षे आरोपात्मके भानसम्भवात्तस्याः प्रतीतेः। समवायसम्बन्धावच्छिन्नकत्वादिप्रकारकत्वे भ्रमत्वम्। यदि स्वाश्रयाभिव्यङ्ग्यत्वरूपपरम्परासम्बन्धस्य 'लोहितः स्फटिकः' इति प्रतीतेर्जपाकुसुमसन्निधाने जायमानाया अनुभवसिद्धत्वेन ककारतावच्छेदकत्वमस्तीत्याशयेन दूषयति–*प्रत्यक्षमित्यादिना*।

तथाच वाचकत्वान्यथानुपपत्त्या तदेवेदं पदं, तदेवेदं वाक्यं सोऽयं गकार इति प्रतीत्या च स्फोटोऽखण्डः सिद्ध्यति । एतेन गौरित्यादौ गकारौकारविसर्गादिव्यतिरेकेण स्फोटाननुभवाच्छ्रूयमाणवर्णानामेव वाचकत्वमस्त्वित्यपास्तम् । तेषां स्फोटातिरिक्तत्वाभावात् ।

यत्तु—वर्णानां प्रत्येकं वाचकत्वे प्रत्येकादर्थबोधापत्तिः । समुदा-

---

दर्पणः

योगात्मकत्वेऽतीन्द्रियतापत्तिः। न च सेष्टा, अनुभवविरोधात्। नचोक्तकत्वस्यातीन्द्रियधर्मत्वेन कथं साक्षात्कारविषयत्वमिति वाच्यम् । सुरभिचन्दनमिति प्रतीतौ चक्षुरयोग्यस्यापि सौरभादेश्चाक्षुषविषयत्ववत्तस्यापि श्रोत्रग्राह्यत्वसम्भवात् । विषयबाधेन परं स्फोटांऽशे कत्वमितिप्रतीतेर्भ्रान्तित्वमिति ।

अन्ये तु-कादिप्रतीतिर्यदि स्फोटांशे कत्वादिकं समवायेनावगाहेत, तदा तस्याऽभ्रान्तत्वसम्भावना, किन्तु स्वाश्रयाऽभिव्यङ्ग्यत्वसम्बन्धेनैव तदंशे वैजात्यम् । न च स्वाश्रयाऽभिव्यङ्ग्यत्वस्य सम्बन्धत्वे प्रमाणाभावः । कादिप्रतीतेरेव मानत्वात् । विशिष्टप्रतीतिनियामकविशेषो हि सम्बन्धः । अत एव 'लोहितः स्फटिक' इति बुद्धेः स्वाश्रयसंयोगस्य सम्बन्धतामामनन्ति । न च समवायविषयैव सा भ्रान्तिः । यथा-कथञ्चित् तत्प्रतीतेः प्रमात्वोपपत्तौ भ्रमत्वकल्पनाया अन्याय्यत्वात्, अधिकमग्रे वक्ष्यत इत्याहुः ।

उपसंहरति-*तथा चेति* ॥ *वाचकत्वाऽनुपपत्त्येति* ॥ पदवाक्ययोर्वर्णसमूहरूपत्वे उक्तरीत्या वर्णानां युगपदवस्थानासम्भवेन वाचकत्वग्रहाऽनुपपत्त्येत्यर्थः । वर्णानामनित्यत्वे प्रत्यभिज्ञाऽनुपपत्तिः साऽप्यस्मन्नये नास्तीत्याह-*तदेवेदमित्यादि*॥ तद्व्यक्त्यभेदावगाहिपदाविशेष्यकप्रत्यभिज्ञानुपपत्त्या चेत्यर्थः ॥ उक्तरीत्या कथञ्चिच्छक्तिग्रहोपपादनेऽप्यनित्यवर्णघटितपदवाक्ययोरनित्यतया प्रत्यभिज्ञाऽनुपपत्तिर्दुष्परिहरैवेति भावः ।

*एतेनेति* । प्रत्यभिज्ञानुपपत्तिसिद्धाखण्डस्फोटस्य वाचकत्वव्यवस्थापनेनेत्यर्थः । *अननुभवादिति* ॥ तथा च तत्रैव प्रमाणाभावेन वाचकत्वं दूरपराहतमिति भावः ॥ *तेषाम्*-गकारादिवर्णानाम् ॥ *स्फोटातिरिक्तेति* ॥ गत्वप्रकारकप्रतीतिविषयगा-

परीक्षा

*तथा च* । वर्णानामनङ्गीकारे वायुसंयोगानां वाचकत्वे च। *अखण्ड इति* । अस्मिन् पक्षे वर्णानामनावश्यकत्वेनाखण्ड इत्यर्थः । स तेन प्रत्यभिज्ञानुपपत्त्या नित्यत्वेन सिद्धस्यारितिक्तस्य स्फोटस्य वाचकत्वव्यवस्थापनेन अननुभवादिति । एतेन स्फोट एव प्रमाणाभावेन तस्य वाचकत्वं दूरत एव निरस्तमिति ध्वनितम् । *तेषाम्* । ककारादिवर्णानाम् । कत्वादिप्रकारप्रतीतिविषयकादिस्फोटस्यैवास्माभिर्वाचकत्वस्वीकारादिति भावः ।

कैयटसम्मतं स्फोटसाधनप्रकारन्दूषयितुं तन्मतमुपन्यस्यति-*यत्त्विति* । वर्णानाम्प्रत्येकं वाचकत्वं समुदायभावमापन्नानां वेति विकल्प्याद्यं दूषयति-*वर्णानामिति* । द्वितीये आह—*समुदायस्येति* । क्रमवत्त्वेऽपि स्थिरत्वे ज्ञानसंभवः स्यादत आह—

**यस्य तु क्रमवतामाशुतरोत्पन्नानां तथैवाभिव्यक्तानां वा ज्ञानमसम्भाव्यमेव । पूर्वपूर्ववर्णानुभवसंस्कारसहकारेणैकदा समूहालम्बनरूपस-**

दर्पणः

दिस्फोटस्यैवास्माभिर्वाचकत्वाभ्युपगमादिति भावः । क्रमिकाणामपि स्थायिनां सहावस्थानादुक्तम्-*आशुतरेति*॥ तृतीयक्षणवृत्तिध्वंसप्रतियोगिनामित्यर्थः । आशुतरविनाशिनां सहोत्पन्नानां समुदायसम्भवादुक्तम्-*क्रमवतामिति* ॥ *असम्भाव्यमेवेति*॥ प्रत्यक्षे तादात्म्येन विषयस्य हेतुतया समूहरूपविषयस्यैवाऽभावादिति भावः ॥

*पूर्वपूर्वेति* ॥ ननु वर्णानित्यतावादिमते तृतीयक्षणवृत्तिध्वंसप्रतियोगिनां तेषां प्रत्यक्षस्यैवासम्भवात् कथं तज्जन्यसंस्कारस्य सहकारितासम्भवः । तथाहि—कादिप्रतीतिः ककारादौ विशेषणतया कादित्वमवगाहते । विशिष्टबुद्धौ विशेषणज्ञानस्य हेतुतया ककाराद्युत्पत्तिर्द्वितीयक्षणे निर्विकल्पकमभ्युपेत्य तृतीयक्षणे विशिष्टज्ञानं वाच्यम् । तत्र न सम्भवति ।

सम्बद्धं वर्तमानं च दृश्यते चक्षुरादिना ।

इति वृद्धोक्तेः । प्रत्यक्षे विषयस्य कार्य्यसहभावेन हेतुतया तृतीयक्षणे तद्वर्णरूपविषयस्याभावात् । न च ककाराद्युत्पत्तिक्षणोत्पन्नकत्वादिस्मृत्यैव द्वितीयक्षणे एव स विकल्पसम्भव इति वाच्यम् । एवमपि प्राथमिकविशिष्टबुद्धेर्दुरुपपादत्वादितिचेद् ?

अत्र वदन्ति । संसारस्यानादितया बालस्य स्तनपानप्रवृत्तिहेतेष्टसाधनत्वस्मृतेरिव प्राथमिककत्वादिविशिष्टबुद्धिजनकस्मृतेः सम्भवान्न तदनुपपत्तिः । ककाराद्युत्पत्त्यनन्तरं ककारीयगकारवृत्तिविशिष्टबुद्धेरेव च तादृशकल्पने मानमिति ।

अन्ये तु प्रतियोगितासम्बन्धेन योग्यविभुविशेषगुणनाशं प्रति स्वसामानाधिकरण्य स्वाव्यवहितपूर्ववृत्तित्व उभयसम्बन्धेन यदि सामान्यतस्तादृशविशेषगुणस्य कारणता स्यात्तदा ककारादिप्रत्यक्षाऽनुपपत्तिः प्रसज्येतापि, सैव न । अन्तिमशब्द-

परीक्षा

*आशुतरोत्पन्नानामिति* । आशुतरोत्पन्नानाम्—तृतीयक्षणवृत्तिध्वंसप्रतियोगिनां तादृशानामप्येकक्षणोत्पन्नानाम्मुरजमृदङ्गवीणादिशब्दानाम्प्रत्यक्षमित्यनुभवसिद्धत्वादुक्तम्—*क्रमवतामिति* । *ज्ञानमसम्भाव्यमेवेति* । विषयतासम्बन्धेन प्रत्यक्षम्प्रति तादात्म्यसम्बन्धेन विषयस्य कारणतया विषयस्यैवासत्त्वे प्रत्यक्षासम्भवादिति भावः । परोक्तन्दूषयति—*पूर्वपूर्वेति*। ननु प्रत्यक्षे विषयस्य कार्य्यसद्भावेन कारणत्वम् । किञ्च विशिष्टबुद्धिम्प्रति विशेषणज्ञानस्य कारणत्वम् । तथा च वर्णोत्पत्तिक्षणे वर्णानाशकत्वादिप्रकारकप्रत्यक्षासम्भवः । द्वितीयक्षणे च कत्वादिनिर्विकल्पकस्य सम्भवः, तृतीयक्षणे वर्णस्यैव नाश इति-कथं कत्वादिप्रकारकप्रत्यक्षजन्यसंस्कारसम्भव इति चेद् ? न । तृतीयक्षणे वर्णनाशकता च स्वोत्तरोत्पन्नविशेषगुणस्य प्रतियोगितासम्बन्धेन योग्यविभुविशेषगुणतेत्येवं रीत्या कार्य्यकारणभावेन वाच्या, सा न सम्भवति । चरमशब्दनाशासंभवात् । किन्तु नाश्यतावच्छेदकं वैजात्यञ्च रमशब्दवृत्ति कल्पयित्वैव कार्यकारणभावो वाच्यः । एवं च तस्य वैजात्यस्य चरमशब्दवृत्तित्वमपि कल्प्यते, तावतैवेतस्य निर्विकल्पकोत्तरोत्पन्नस-
विकल्पकविषयत्वसम्भवात् ... चतुर्थक्षणे नाश इति तादृशप्रत्यक्षान्न

कलज्ञानसम्भवस्तु सरोरसो राजजरा नदीदीनादिसाधारण इत्यति-प्रसङ्ग इति स्फोट एवाखण्डो नादाभिव्यङ्ग्यो वाचक इति कैयटः। तत्तुच्छम् । पदज्ञानसम्भवस्योपपादितत्वात् । वर्णानां प्रत्येकं व्यञ्ज-कत्वं समुदितानां वेत्यादिविकल्पग्रासाच्च ।

---

दर्पणः

नाशे सुषुप्तिप्राक्कालोत्पन्नज्ञानादिनाशे च व्यभिचारात्। किन्तु विजातीयगुण-नाशे वैजात्यं चरमशब्दादिव्यावृत्तमिव प्राथमिकविशिष्टबुद्धिविषयवर्णव्यावृत्तमपि। नच तादृशवैजात्ये मानाभावः। नाश्यतावच्छेदककोटिप्रविष्टतयैव तत्सिद्धेः। तथा-चान्तिमशब्दनाशेन द्वितीयक्षणस्यैव तादृशवर्णनाशेऽपि न तृतीयक्षणस्थतद्व्य-क्तित्वेन हेतुत्वकल्पनान्न तृतीयक्षणस्थायिनस्तस्य प्रत्यक्षानुपपत्तिरुक्तहेतुहेतुमद्भाव-स्वीकारेऽपीत्याहुः।

*अतिप्रसङ्ग इति*। सरःशब्दघटकसकाराकाररेफविसर्गानुभवजन्यसंस्कारे रस-बोधापत्तिरित्यर्थः। *नादाभिव्यङ्ग्य इति*। ध्वन्यन्तर्गतवर्णाभिव्यङ्ग्य इत्यर्थः। *अखण्डः*–वर्णाघटितः। उपपादितत्वादित्यस्य सखण्डस्फोटनिरूपणावसर इति शेषः। तादृशप्रत्यक्षस्यान्तिमवर्णांशे लौकिकस्यातीतवर्णांशेऽलौकिकस्य सरो रस इत्याद्यन-तिप्रसक्तस्योपपादित्वादित्यर्थः। अतिरिक्तस्य वाचकत्वे दूषणमाह–*वर्णानामिति*। *विकल्पग्रासादिति*। प्रत्येकव्यञ्जकत्वे आद्यवर्णादेव तदभिव्यक्तिसम्भवे इतरोच्चा-रणवैयर्थ्यापत्तेरतिप्रसङ्गाच्च। समुदायस्य तूक्तरीत्या दुरुपपादकत्वेन तद्व्यञ्जकत्व-स्याप्यसम्भवदुक्तिकत्वादित्यर्थः।

परीक्षा

संस्कारानुपपत्तिरित्याशयात् । *अतिप्रसङ्ग इति*। सरःशब्दविघटकवर्णविषयक-संस्काराद् रस इति पदोच्चारणम्, तदापि सरःरसःप्रतीत्यापत्तिरिति रीत्याऽति-प्रसङ्ग इत्यर्थः । *नादाभिव्यङ्ग्य इति*। नादो ध्वनिस्तमारोपविषयवर्णाभिव्यङ्ग्य इत्यर्थः । *उपपादितत्वादिति* । प्रथमवर्णविशिष्टद्वितीयवर्णवत्त्वं तृतीयवर्ण इति रीत्या चरमवर्णविषयकं लौकिकमन्यवर्णविषयकमलौकिकम्पदज्ञानमित्यस्योपपा-दितत्वादित्यर्थः।

यदुक्तम्प्राङ् नादधर्मारोपविषयवर्णाभिव्यङ्ग्य इति, तद्विकल्प्य दूषयति—*वर्णा-नामिति*। *विकल्पग्रासादिति*। एवञ्च प्रत्येकं व्यञ्जकत्वे प्रथमवर्णमात्रश्रवणेऽ-प्यव्यक्त्यापत्तिः। समुदितानां व्यञ्जकत्वन्तु न सम्भवति, समुदायस्यैवासम्भवा-दिति भावः।

अपरे तु—पूर्वपूर्ववर्णसत्त्वक्षणे यदि द्वितीयादिवर्णोत्पत्तिः स्यात्तदा स्यादपि यथाकथञ्चित्पदवाक्यप्रत्यक्षम्, तत्तु न सम्भवति–पूर्ववर्णनाशानन्तरमेव द्वितीयवर्णो-त्पत्तेः। तदुक्तम् "परः सन्निकर्षः संहिता" इति सूत्रभाष्ये–यावद्गकारे वाग्वर्त्तते न तावदौकारे, येनैव यत्नेनैको वर्ण उच्चार्य्यते तेनैव विच्छिन्ने तस्मिन्वर्णे उपसं-हृत्य तं यत्नमन्ययत्नमुपादाय द्वितीयः प्रवर्त्तते" इति।

किञ्च–वर्णानामुच्चरितप्रध्वंसित्वादपि प्रत्यक्षासंभवः। किञ्च–पूर्वोक्तवर्णयोर-व्यवधानमपि दुर्घटम्। सम्बन्धिनोराशुविनाशितयाऽव्यवधानरूपसम्बन्धासम्भवात्।

**ननु त्वन्मतेऽप्येष दोषः। तत्तद्वर्णोत्पादकत्वेनाभिमतवायुसंयोगानां प्रत्येकं व्यञ्जकत्वं समुदितानां वेति विकल्पस्य सम्भवादिति चेद् ? उच्यते—प्रत्येकमेव संयोगा अभिव्यञ्जकाः, परन्तु केचिद् गत्वेन, केचिदौत्वेन, केचिद्विसर्गत्वेनानेकैः प्रकारः। अत एव वर्णानां तदतिरेकास्वीकारोऽप्युपपद्यते।**

---

दर्पणः

कैयटाऽनुयायिनस्तु—पूर्वपूर्ववर्णकाले चेद् द्वितीयादिवर्णोत्पत्तिः सम्भवेत् ! तदा स्यादपि कथञ्चिन्भवदुक्तरीत्या पदवाक्यप्रत्यक्षनिर्वाहः। सैव न, किन्तु यावद्गकारे वाग् वर्तते न तावदौकारे; येनैव यत्नेनैको वर्ण उच्चार्य्यते। तेनैव विच्छिन्ने तस्मिन् वर्णे उपसंहृत्य तं यत्नमन्यमुत्पादाय द्वितीयः प्रवर्त्तते" इति, "परः सन्निकर्ष" ( पा०सू० १।४।१०४ ) इति सूत्रस्थभाष्यप्रामाण्यात् पूर्ववर्णविनाशानन्तरं यत्नान्तरेण द्वितीयवर्णाऽभ्युपगमात्।

किञ्च भवन्मते वर्णप्रत्यक्षस्यैवाऽनुपपत्तिः। तेषामुच्चरितप्रध्वंसित्वेन तदुत्पत्तेरभिव्यक्तेर्वा क्षणिकत्वेनातीन्द्रियक्षणावच्छिन्नत्वात्। तथाच "इको यणचि" ( पा०सू० ६।१।७७ ) इत्यादिसूत्रोपयोगिनोऽयं पूर्वोऽयं पर इति प्रत्यक्षविषयार्थकेदंशब्दाभिलप्यमानपौर्वापर्यस्य व्यवहारस्यासम्भवः। एवं नष्टविद्यमानयोः सम्बन्धिनोरव्यवहितोत्तरत्वस्य सम्बन्धताया वक्तुमशक्यतयाऽपि पूर्वोक्तरीत्या पदप्रत्यक्षानुपपत्तिः। अपिच गृहीतशक्तिकस्यैव बोधकत्वमितिनियमेनोच्चारणभेदाद्भिन्नेषु शक्तिग्रहासम्भवः। आनुपूर्व्यास्तत्तत्कालघटिताव्यवहितोत्तरत्वघटितत्वेनाऽननुगतत्वाच्छक्ततावच्छेदकत्वासम्भवात्। अखण्डस्फोटाऽङ्गीकारे तु तत्तद्वर्णोपाध्यवच्छिन्ने तस्मिन् पौर्वापर्य्यादिव्यवहारविषयत्वस्य सूपपादत्वान्नोक्ताऽनुपपत्तिः। तस्य चाऽनुपूर्व्यन्तर्गतसमस्तवर्णा एव यद्यभिव्यञ्जकास्तथापि चरमवर्णाभिव्यक्त एव स बोधहेतुरिति नोक्तविकल्पस्याऽप्यवसर इत्याहुः।

ननु वायुसंयोगानां प्रत्येकमभिव्यञ्जकत्वाभ्युपगमेऽपि गौरित्यत्र घत्वेन टत्वेन च स्फोटोऽभिव्यज्येतेत्यत आह—*परन्त्विति*। तथाच विलक्षणवायुसंयोगस्य गत्वप्रकारकस्फोटाभिव्यञ्जकत्वाभ्युपगमान्नोक्तदोष इति भावः। *अत एवेति*। विलक्षणवायुसंयोगस्य तत्तद्रूपेण स्फोटाभिव्यञ्जकत्वाऽभ्युपगमादेवेत्यर्थः। *तदतिरेका-

परीक्षा

अत एव तत्तत्कालघटितायाः पूर्वोत्तरवर्णघटितानुपूर्वी तस्या असम्भवेन शक्ततावच्छेदकत्वासम्भव एवेति स्फोटस्तावदखण्डः स्वीकार्य्यः। तत्तद्वर्णोपाध्यवच्छिन्ने तस्मिन्नारोपित एव पौर्वापर्य्यादिसद्भावः। नित्ये ब्रह्मणि अन्तःकरणोपाधिभेदेन तत्तज्जीवव्यवहारवद् व्यवहारः, तस्य च स्फोटस्य चरमवर्णाभिव्यक्तस्यैवार्थबोधकत्वं कल्प्यते। कार्य्यकारणभावस्य फलबलकल्प्यत्वादिति कैयटाशयमाहुः।

ननु वायुसंयोगस्य प्रत्येकं व्यञ्जकत्वे गौरित्यत्र गकाराभिव्यक्तिकाले घत्वेन टत्वेन कुतो नाभिव्यञ्जकतेत्यत आह-*परन्तु केचिदिति*। तथा च वैलक्षण्यविशिष्टानामेव फलात्स्फोटाभिव्यञ्जकत्वं कल्प्यते। *अत एव*-विलक्षणवायुसंयोगस्य तत्तद्रूपेण स्फोटाभिव्यञ्जकत्वादेव। *तदतिरेकास्वीकार इति*। तत्तद्वायुसंयोगादेव कत्वादि-

एवञ्चाव्यवहितोत्तरत्वसम्बन्धेन घवत्त्वं टकारे गृह्यते। एतादृशपदज्ञानकारणताया अविवादात्। परं त्वव्यवहितोत्तरत्वं स्वज्ञानाधिकरणक्षणोत्पत्तिकज्ञानविषयत्वं वाच्यम्। अत एव घज्ञानानन्तरटज्ञानविषयत्वरूपानुपूर्वीत्यादिनैयायिकवृद्धानां व्यवहारः। एवञ्च न कश्चिद्दोषः।

एतेन पर्य्यायस्थलेष्वेक एव स्फोटो, नाना वा? नाद्यः।

---

दर्पणः

स्वीकार इति*। तत्तत्संयोगादेव कत्वादिप्रकारकककारप्रतीत्युपपत्तौ स्फोटातिरिक्ततत्कल्पने मानाभावादिति भावः।

ननु सरो रस इत्यादावतिप्रसङ्गस्तदवस्थ एव, सत्त्वादिरूपेणाभिव्यञ्जकवायुसंयोगानामुभयत्र तौल्यादत आह—*एवञ्चेति*। *घवत्त्वमिति*। तथा चौपाधिकभेदमादाय तस्मिन्नेव टकारात्मके घत्वप्रकारकप्रतीतिविषयाव्यवहितत्वग्रहविषये यथा घटपदव्यवहारविषयता तथा रात्मके स्फोटे सत्त्वप्रकारकप्रतीतिविषयाव्यवहितत्वग्रहे सरःपदव्यवहारविषयतेति न सरआत्मकस्फोटस्य रसरूपतेति भावः।

ननु तव मते गकारादिवर्णस्य नित्यस्फोटरूपतया नित्यत्वेन तद्ध्वंसाऽधिकरणक्षणाऽनुत्पत्तिकत्वविशिष्टतदधिकरणक्षणोत्पत्तिकत्वरूपाऽव्यवहितोत्तरत्वासम्भवात् कथमुक्तप्रकारसम्भवोऽत आह—*परं त्विति*। तथाच वर्णानां नित्यत्वेऽपि तदभिव्यक्तेरनित्यत्वस्य सांख्यानामपि सम्मतत्वेन तदव्यवहितोत्तरत्वस्य वर्णान्तराभिव्यक्तावबाधेन तदादाय घटादिपदप्रत्ययोपपत्तिरिति भावः। *अत एवेति*। अभिव्यक्तिनिरूपिताऽव्यवहितोत्तरत्वस्यानुपूर्वीव्यवहारनियामकत्वादेवेत्यर्थः।

नवीनैस्तथानभ्युपगमादाह—*वृद्धेति*। *एतेनेति*। आनुपूर्व्यवच्छिन्नवर्णात्मकस्फोटस्य वाचकत्वव्यवस्थापनेनेत्यर्थः। अपास्तमित्यनेनाऽन्वयि। *स्फोट इति*। वाचकत्वेनाऽभिमताखण्डपदार्थ इत्यर्थः। *नाद्य इति*। नैक इत्यर्थः।

परीक्षा

प्रकारककारादिविशेष्यकप्रतीतिनिर्वाहात्स्फोटातिरिक्तककारादिकल्पनाभावोऽप्युपपद्यत इत्यर्थः।

नन्वेवं सरो रस इत्यत्रोक्तातिप्रसङ्गस्तादवस्थ्यम्। सत्वेन रत्वेन चाभिव्यञ्जकवायुसंयोगानान्तौल्यात्। अतस्तद्दोषम्परिहर्तुं व्यवस्थामाह-*एवञ्चेति*। उपाधिभेदाद् घकारटकारयोर्भेदः स्फोटभेदकल्पकस्तत्र घवत्त्वं टकारे यथा कल्प्यते; तथा सर इत्यत्रापि तथैव कल्पनया सत्त्वं रेफे ततः सविशिष्टरत्वं विसर्गे गृह्यते; रस इत्यत्र तु वैपरीत्येन ग्रह इति तदर्थविशेषप्रतिपत्त्युपपत्तिरिति भावः।

ननु भवन्मते स्फोट एव चेद् घकारटकाररूपः, तदा घध्वंसाधिकरणक्षणानुत्पत्तिकत्वे सति घकाराधिकरणक्षणध्वंसाधिकरणक्षणोत्पत्तिकत्वरूपं घकाराव्यवहितोत्तरत्वं टकारे न सम्भवतीति कथं घवत्वं णकार इत्यत आह—*परमिति*। *एवञ्च*। ज्ञानघटितस्याव्यवहितोत्तरत्वस्य निर्वचने च अभिव्यक्तिनिरूपिताव्यवहितोत्तरत्वमेवानुपूर्वीसम्पादकन्तमादायैव शक्ततावच्छेदकस्य तत्तत्स्थले कल्पना कार्य्या।

*एतेन*-उक्तप्रकारसिद्धानुपूर्व्यवच्छिन्नस्फोटस्य वाचकत्वव्यवस्थापनेन। *स्फोट

घटपदे एव गृहीतशक्तिकस्य कलशादेर्बोधप्रसङ्गात्। नच तत्पर्याया-भिव्यक्ते शक्तिग्रहस्तत्पर्य्यायश्रवणेऽर्थधीहेतुरिति वाच्यम्। एवं सति प्रतिपर्य्यायं शक्तिग्रहावश्यम्भावेन तत्तत्पर्य्यायगतशक्तिग्रहहेतुताया उचितत्वात्। तथा सति शक्तिग्रहत्वेनैव हेतुत्वे लाघवाच्च। अन्यथा तत्पर्य्यायाभिव्यक्तगतशक्तिग्रहत्वेन तत्त्वे गौरवात्। न द्वितीयः। अनन्तपदानां तेषां शक्तिं चापेक्ष्य क्लृप्तवर्णेष्वेव शक्तिकल्पनस्य लघुत्वादिति परिमलोक्तमपास्तम्। पर्य्यायेष्वनेकशक्तिस्वीका-

---

### दर्पणः

तत्पक्षे दूषणमाह-*घटपद इति*। घट इत्यानुपूर्व्यवच्छिन्नस्फोटे गृहीतशक्तिकस्येत्यर्थः। कलशपदादित्यस्यागृहीततदवच्छिन्नस्फोटशक्तिकादित्यादिः। *बोधप्रसङ्गादिति*। घटबोधक्लृप्तकारणताककलश इत्यानुपूर्व्यवच्छिन्नस्फोटस्य तदानीं सत्त्वान्नित्यैकरूपत्वात् तस्य वर्णसमुदायरूपपदस्य वाचकत्वे तु नोक्तदोष इति भावः॥ *अर्थधीहेतुरिति*॥ उक्तस्थलेचाऽस्य स्फोटस्य कलशरूपपर्य्यायताभिव्यक्त्यवच्छिन्नशक्तिग्रहविषयत्वाभावान्न अर्थबोधप्रसङ्ग इति भावः। *एवमिति*॥ तत्पर्य्यायजन्यशाब्दबोधे तत्पर्य्यायाभिव्यक्त्यवच्छिन्नशक्तिग्रहस्य हेतुत्वाभ्युपगम इत्यर्थः॥ *शक्तिग्रहावश्यम्भावेनेति*॥ 'नागृहीतविशेषण'न्यायेन तत्पर्य्यायशक्तिग्रहस्यावश्यमभ्युपेयत्वादिति भावः॥ *उचितत्वादिति*॥ औचित्यमेवाह-*तथा सतीति*॥ *शक्तिग्रहत्वेनेति*॥ तत्पर्य्यायगतशक्तिग्रहत्वेनेत्यर्थः॥ *लाघवादिति*॥ उक्तरूपाऽपेक्षयैतस्य कारणतावच्छेदकत्वे लाघवादित्यर्थः॥ *चो-हेतौ। पूर्वकल्पे गौरवं प्रकाशयति—*अन्यथेति*॥ उक्तिवैचित्र्यमेतत्॥ *न द्वितीय इति*॥ पर्य्यायस्थले स्फोटनानात्वमित्यपि पक्षो नेत्यर्थः॥ *अनन्तेति*॥ प्रतिपर्य्यायभिन्नानां स्फोटानां कल्पनामित्यर्थः। *शक्तिमिति*। तद्भेदभिन्नानन्तशक्तिकल्पनां चापेक्ष्येत्यर्थः॥ *लघुत्वादिति*॥ तथाच वर्णातिरिक्तस्फोटकल्पनाऽपार्थेति तद्भावः॥ *पर्य्यायेष्विति*॥ एकधर्मावच्छिन्नबोधकनानापदेष्वित्यर्थः॥ *अनेकेति*॥ पर्य्यायभेदभिन्नेत्य-

### परीक्षा

इति*। वाचकत्वाभितोऽखण्डः पदार्थ इत्यर्थः। *बोधप्रसङ्गादिति*। प्रागगृहीतशक्तिकस्यैव स्फोटस्य तेनाभिव्यक्त्याऽर्थप्रतीतिप्रसङ्गादिति भावः। सामग्रीविशेषस्य कार्यविशेषनियामकत्वकल्पने नोक्तातिप्रसङ्गवारणं भविष्यतीत्याशयिकामुक्तिन्निरस्यति-*न चेत्यादिना*। *अवश्यं भावेनेति*। तत्तत्पर्यायाभिव्यक्तगतशक्तिग्रहत्वेन कारणत्वावश्यंभावे तत्तत्पर्यायगतशक्तिग्रहत्वेनैव कारणत्वमुचितमिति भावः। *लाघवाच्चेति*। चो हेतौ। *न द्वितीय इति*। पर्य्यायस्थले स्फोटस्य नानात्वमिति पक्षो नेत्यर्थः। *पदार्थानान्तेषाम्*। प्रतिपर्य्यायभिन्नानां स्फोटानाम्। *शक्तिञ्चेति*। स्फोटभेदेन भिन्नानन्तशक्तिकल्पनामित्यर्थः। *लघुत्वादिति*। एवञ्च वर्णातिरिक्तस्फोटकल्पना मुधैवेति भावः। *पर्यायेष्विति*। एकधर्मावच्छिन्नवाचकनानापदेष्वित्यर्थः। शक्ततावच्छेदकभेदेन शक्तिभेदस्य न्याय्यत्वादिति भावः। *अनेकेति*। पर्या-

रस्य सर्वसिद्धत्वात् तदवच्छेदकानुपूर्व्याः प्रागुपपादनादिति दिक् ।

दर्पणः

र्थः ॥ *सर्वसिद्धत्वादिति* । तथाच पर्य्यायेषु नानाशक्तिकल्पना नापूर्व्यैति न दोषः।
अयमाशयः—वर्णाः स्फोटाऽभिव्यञ्जका इति स्वीकारे भवदुक्तदूषणस्यावसरो; न तु स्फोटस्य वर्णानतिरेकपक्षे, तत्र पृथक्शक्तिकल्पनाया अभावेन गौरवासम्भवात् । पर्य्यायशक्तिग्रहकार्य्यताऽवच्छेदककोटावव्यवहितोत्तरत्वनिवेशेन व्यभिचारवारणं तूभयोः सममिति ।

ननु त्वन्मते स्फोटानतिरेकेण वर्णानां नित्यत्वादुत्पत्तिघटिताव्यवहितोत्तरत्वसम्बन्धेनोत्तरवर्णेषु पूर्वपूर्ववर्णवत्त्वरूपशक्ततावच्छेदकानुपूर्व्यसम्भवोऽत आह—*तदवच्छेदकेति* । शक्ततावच्छेदकेत्यर्थः । *प्रागिति* । स्वाऽभिव्यक्त्यधिकरणक्षणोत्पत्तिकाऽभिव्यक्तिविषयत्वमितिग्रन्थेनेति शेषः । ननु वर्णानां नित्यत्वाभ्युपगमे नित्यवर्णरेव स्फोटकार्य्योत्पत्तौ स्फोटस्यैवाऽसिद्धिः । तथाहि-आनुपूर्व्या भवद्भिरेवोपपादितत्वात्तद्विशिष्टानां तेषां पदत्वेन तत्प्रत्यक्षस्य सौलभ्येन शक्तिग्रहस्य सूपपपादत्वात्तदेवेदं पदं तदेवेदं वाक्यमिति प्रत्यभिज्ञोपपत्तेश्चेत्यत आह—*दिगिति* ।

परीक्षा

यभेदभिन्नेत्यर्थः । *सर्वसिद्धत्वादिति* । तथा चरममापूर्वकल्पनाप्रयुक्तन्दूषणम् ।
अयमत्राभिसन्धिः—यदि वर्णाः स्फोटस्याभिव्यञ्जका इति पक्ष एवास्मन्मते स्यात्तदा पर्यायभेदेन स्फोटस्य भेदो वापर्य्यायभेदेऽप्येकत्वं वेति विकल्पेन भवदुक्तदूषणावसरः स्यात्, तथा तु न मम मतम्, किन्तु स्फोटानतिरिक्ता वर्णा इत्येव प्रागुक्तम् । एवञ्च स्फोटस्यैकत्वात्तत्र पृथक् शक्तिकल्पना नेति न भवदुक्तगौरवसम्भावना । नचैवं घटपद एव गृहीतशक्तिकस्येत्यादिनोक्ताद्यपक्षदूषणमेवेति वाच्यम् । स्फोटभेदेऽपि तदभिन्नत्वे कल्पितानां घटकलशादिशब्दानां तत्तद्वर्णभेदेन कल्पितभेदवान् घटपदं घटे शक्तमित्याद्याकारकग्रहे विशेष्यत्वेन तादृशज्ञानानाम्भेदादव्यवहितोत्तरत्वसम्बन्धेन तत्तज्ज्ञानवैशिष्ट्यस्य कार्य्यतावच्छेदकशरीरे निवेशेनोक्तदोषपरिहारात् । तत्तत्कारणवैशिष्ट्यनिवेशप्रयुक्तगौरवन्तु स्फोटानङ्गीकर्त्तृमतेऽपीति न तदुद्भावनार्हमिति ।

ननु स्फोटस्य नित्यत्वेन तदभिन्नवर्णानामपि नित्यत्वादुत्पत्तिध्वंसघटिताव्यवहितोत्तरत्वघटितानुपूर्व्यापि वक्तुमशक्यमिति शक्ततावच्छेदकालाभोऽत आह-*तदवच्छेदकेति* । *प्रागुपपादनादिति* । अभिव्यक्तिघटिताया आनुपूर्व्याः प्रागुपपादनादित्यर्थः । ननु यदि वर्णा नित्यास्तदा भवदुक्तरीत्याऽभिव्यक्तिघटिताया आनुपूर्व्याः प्रागुपपादनादित्यर्थः ।

ननु यदि वर्णा नित्यास्तदा भवदुक्तरीत्याऽभिव्यक्तिघटितानां तेषामानुपूर्वी कल्पनीया । तस्याश्च शक्ततावच्छेदकत्वङ् कल्प्यम् । तद्विशिष्टानामेव तेषां वर्णानाम्पदत्वं वाक्यत्वं वाऽस्तु, नित्यत्वादेव तेषाम्प्रत्यक्षमपि भविष्यति । तत एव च तदेवेदम्पदं तदेवेदं वाक्यमिति प्रत्यभिज्ञाऽप्युपपत्स्यते, क्लृप्तस्फोटेनेत्यत आह—*दिगिति*। तदर्थस्तु—यदि स्वतन्त्रा नित्या वर्णाः स्युः, तदा भवदुक्तान्यथासिद्धिसम्भावनाया अवसरः स्यात्; तथा तु नास्ति; किन्तु कत्वादिना ज्ञायमानस्फोट एव ककार इत्य-

**शब्दकौस्तुभे तु वर्णमालायां पदमिति प्रतीतेर्वर्णातिरिक्त एव**

दर्पणः

तदर्थस्तु यदि स्वतन्त्रा नित्या वर्णाः स्युस्तदा स्यादेव तैः स्फोटाऽन्यथासिद्धिः। किन्तु कत्वादिना प्रतीयमानः स्फोट एव ककारादिवर्ण इत्यभ्युपगमेनोक्तान्यथासिद्ध्यऽसम्भवादत एव नानावर्णकल्पनाप्रयुक्तगौरवशङ्कापि नेति।

ननु कोऽसौ स्फोटो यदनतिरिक्ता वर्णा इति चेद्? अत्राहुः—ईश्वरसिसृक्षात्मकमायाबिन्द्वपरपर्य्यायत्रिगुणात्मकाव्यक्तप्रभवः शब्दब्रह्मापरनामा चेतनाधिष्ठितोऽनभिव्यक्तवर्णविशेषो रवः परादिशब्दैर्व्यवह्रियमाणो नादः स्फोट इत्युच्यते। स च सर्वगतोऽपि पुरुषस्य ज्ञातार्थविवक्षाधीनप्रयत्नाधिष्ठितमूलाधारस्थपवनेनाऽभिव्यक्तः परेति व्यवह्रियते। नाभिपर्य्यन्तमागच्छता तेनाऽभिव्यक्तः पश्यन्तीति। पुनर्हृदयमागच्छता तेनाऽभिव्यक्तः पश्यन्तीति। पुनर्हृदयमागच्छता तेनैवाऽभिव्यक्तस्तत्तदर्थोल्लेखिज्ञानविषयः परश्रोत्राग्राह्यत्वात् सूक्ष्मो मध्यमा वागिति। वक्त्रा तु कर्णपिधाने सूक्ष्मतरवाय्वभिघातेनोपांशुशब्दप्रयोगे च श्रूयते। स एव चाऽऽस्यपर्यन्तमागच्छता तेन वायुना कण्ठदेशं गत्वा मूर्द्धानमाहत्य परावृत्त्य तत्तत्स्थानेष्वभिव्यक्तः परश्रोत्रेणाऽपि ग्रहीतुं शक्यो वैखरीति व्यवह्रियते। उक्ताऽर्थे प्रमाणं च—

"चत्वारि वाक् परिमितानि पदानि। तानि विदुर्ब्राह्मणा ये मनीषिणः। गुहा त्रीणि निहिता नेङ्गयन्ति। तुरीयं वाचो मनुष्या वदन्ति" इति श्रुतिः।

बिन्दोस्तस्माद्भिद्यमानाद्रवोऽव्यक्तात्मकोऽभवत्।
स एव श्रुतिसम्पन्नः शब्दब्रह्मेति गीयते॥

इति पुराणवाक्यं च। भागवतेऽप्येकादशस्कन्धादौ स्फुटोऽयमर्थः। शिक्षायामपि—

आत्मा बुद्ध्या समेत्यार्थान्मनो युङ्क्ते विवक्षया।
मनः कायाऽग्निमाहन्ति स प्रेरयति मारुतम्॥
सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः।
वर्णान् जनयते—

इत्यनेन हृदयावच्छिन्नमध्यमायां यो नादांश आन्तरप्रणवरूपः, स एव वाचकः। "ओंकार एव सर्वा वाक् सैषा स्पर्शोष्मभिर्व्यज्यमाना नानारूपा भवति" इति श्रुतेः। सर्वप्राणिहृद्देशस्थत्वाच्च ब्रह्मपदव्यवहार्य्योऽपीत्यन्यत्र विस्तरः॥

*इति प्रतीतेरिति*॥ अन्यथा वर्णपरम्परारूपमालायास्तत्समूहरूपपदानतिरि-

परीक्षा

भ्युपेयते। अत एव नानावर्णकल्पनाप्रयुक्तगौरवस्यापि न मम मतेऽवकाश इति।

दीक्षितेनोक्तमनुवदति-*शब्दकौस्तुभे त्विति*। *वर्णमालायाम्*-वर्णपरम्परायाम्। *इति प्रतीतेरिति*। आधाराधेयभावावगाहिप्रतीतेरित्यर्थः। अतिरिक्तस्फोटानङ्गीकारे वर्णपरम्परारूपमेव पदमित्यभेदे आधाराधेयभावावगाहिप्रतीत्यनुपपत्तिः स्यात्। अन्यथा प्रतीतेर्विभिन्नपदार्थासाधकत्वे 'कपाले घट' इति प्रतीत्या कपालातिरिक्तस्य घटस्य सिद्धिर्भवति। यदि प्रतीतिः साधिका न भवेत्, तदा कपालघटयोर्भेदो न सिध्येत, कपालसंयोगरूपस्य कारणस्य कपालसमूहसाधकतयैवोक्तिरिति भावः। अत्र तुनाऽरुचिर्ध्वनिता। तथाहि—वर्णपरम्परातिरिक्तस्फोटानङ्गीकारेऽप्युक्तप्रतीत्यु-

स्फोटः । अन्यथा कपालातिरिक्तघटाद्यसिद्धिप्रसङ्गश्चेति प्रतिपादितम् ॥ ६८ ॥

---

दर्पणः

क्ततयाऽऽधाराधेयभावावगाहिप्रतीत्यनुपपत्तिरिति भावः ॥ *अन्यथेति* ॥ प्रतीतेः पदार्थासाधकत्व इत्यर्थः । *कपाले घट इति* ॥ प्रतीत्याभेदावगाहिन्या तत्सिद्धिः ; प्रतीतेस्तदसाधकत्वे तु घटाद्यसिद्धिः स्पष्टैव । कपालतत्संयोगानादायैव तादृशप्रतीत्युपपत्तेरिति भावः ॥ कौस्तुभे त्विति तुशब्देनाऽरुचिः सूचिता । तद्बीजं तु वर्णातिरि-

परीक्षा

पपत्तिर्भवत्येव । आनुपूर्व्यवच्छिन्नानां वर्णानाम्मालारूपत्वमानुपूर्वीरूपपदस्य च तद्भिन्नत्वमित्युक्तस्याधाराधेयभावस्योपपादयितुं शक्यत्वात्, प्रतीतेभेदासाधकत्वे कपालघटयोर्भेदो न सिद्ध्येदितित्ववशिष्यते, तदपि न । कपालस्याल्पपरिमाणवदवयवजन्यत्वम् । घटस्य तु तदधिकपरिमाणवदवयवजन्यत्वमिति, कारणवैजात्याद्वैलक्षण्येन तयोर्भेदस्य सिद्धेरिति ।

ननु कोऽसौ नित्यः स्फोटो यमाश्रित्योक्तव्यवस्थामुपपादयतीति चेत्? प्रणवरूपम्ब्रह्मतत्वमेव स्फोट इति गृहाण । तथाहि—ईश्वरस्य सिसृक्षात्मिका या माया चिद्रूपाऽपरपर्याया व्यक्तरूपा तत्प्रभवः शब्दब्रह्मापरनामा चेतनेनाधिष्ठितोऽनभिव्यक्तवर्णविशेषो रवपरादिशब्दे व्यवह्रियमाणे नाद एव स्फोट इत्यभिधीयते । स च यद्यपि सर्वगतः, तथापि पुरुषस्य ज्ञातार्थविवक्षया जायमानप्रयत्नविशेषेण मूलाधारस्य पवनेनाभिव्यक्तः परा इति व्यवह्रियते । नाभिपर्यन्तमागच्छता तेन पवनेनाभिव्यक्तः पश्यन्तीत्युच्यते । हृदयपर्यन्तमागच्छता तेनैवाभिव्यक्तस्तत्तदर्थाकारज्ञानविषयः परपुरुषश्रोत्रेन्द्रियाग्राह्यत्वात्सूक्ष्म इत्यनेन शब्देनाभिधीयमानो मध्यमावागिति कथ्यते । स एव च वक्त्रा कर्णपिधाने सूक्ष्मतरवाय्वभिघातेनोपांशुशब्दप्रयोगे च श्रूयते । तत आस्यपर्यन्तमागच्छता तेन पवनेन कण्ठदेशङ्गत्वा मूर्द्धानमाहत्य परावृत्य तत्तत्स्थानेष्वभिव्यक्तः परपुरुषेणापि ग्राह्यो वैखरीवागित्यभिधीयते । तत्र भाष्योक्ता श्रुतिः प्रमाणम्—

> चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः ।
> गुहात्रीणि निहितानि नेङ्गयन्ति तत्तुरीयं वाचो मनुष्या वदन्ति" इति ॥

तथा पुराणेऽपि—

> बिन्दोस्तस्माद्भिन्द्यमानाद्रवो व्यक्तात्मकोऽभवत् ।
> स एव श्रुतिसम्पन्नैः शब्दब्रह्मेति गीयते ॥ इति ।

शिक्षायामप्युक्तम्—

> आत्मा बुद्ध्या समेत्यार्थान्मनो युङ्क्ते विवक्षया ।
> मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ।
> सोदीर्णो मूर्द्ध्न्यभिहतो वक्त्रमापद्य मारुतः ।

वर्णान् जनयत इति ।

एवञ्च हृदयावच्छिन्नमध्यमायां यो नादांश आन्तरः प्रणवरूपः स एव वाचकः । "ओंकार एव सर्वा वागेषा स्पर्शोष्मभिर्व्यज्यमाना नानारूपा भवति" इति श्रुतेः । सर्वप्राणिहृदयदेशस्थत्वाच्च ब्रह्मपदव्यवहार्योऽपीति धेयम् ॥ ६८ ॥

नन्वेवं शास्त्राप्रामाण्यप्रसङ्गः । पदस्याखण्डत्वात् । शास्त्रस्य च प्रकृतिप्रत्ययाभ्यां पदव्युत्पादनमात्रार्थत्वादित्याशङ्कां समाधत्ते—

**पञ्चकोशादिवत्तस्मात् कल्पनैषा समाश्रिता ।**
**उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिताः ॥ ६९ ॥**

'उपेयप्रतिपत्त्यर्था' इत्यन्तेनान्वयः । अयम्भावः—यथा भृगुवल्यां

---

दर्पणः

क्तस्फोटानङ्गीकारेऽपि नोक्तप्रतीत्यनुपपत्तिः। आनुपूर्व्यवच्छिन्नवर्णानां मालापदार्थत्वेन तत्रानुपूर्वीरूपपदस्याधाराधेयभावसम्भवात् । घटकपालादीनां विजातीयकारणजन्यत्वेन तद्भेदस्यापलपितुमशक्यत्वेनोक्तातिप्रसङ्गाभावाच्चेति ।

अन्ये तु—न वर्णानां स्फोटात्मकत्वम् । किन्तु स्फोटस्य वर्णाभिव्यङ्ग्यत्वमेव । न च प्रत्येकव्यञ्जकत्वपक्षोक्तदोषः प्रयोगान्तर्गतसकलवर्णानां तद्व्यञ्जकत्वेऽपि चरमवर्णाभिव्यक्तस्यैव तस्य वाचकत्वोपगमादत एव नाद्यवर्णजाऽभिव्यक्त्युत्तरमर्थबोधः । तस्यैकत्वेऽपि तत्र व्यञ्जकरूपप्रतिविम्बनात्तद्रूपरूषितस्यैव प्रतीत्या नानात्वेन प्रतीतिरौपाधिकी । एकस्यैव मुखस्य कृपाणदर्पणाद्यभिव्यञ्जकवशाद्दैर्घ्यवर्तुलत्वादिप्रतीतिवत् । अत एवाऽभ्युपगमार्थं न तत्र जातिकल्पनापि । वर्णभिन्नव्यञ्जकाऽभावाच्च न कदाचिदपि वर्णराहित्येन तत्प्रतीतिस्तत्प्रतिबिम्बिसमर्पकाश्च संस्कारा एव । ते च येन क्रमेण चित्तस्थास्तेनैव व्यञ्जकरूपरूषितता तस्येत्यभ्युपगमाच्च, न सरो रसः इत्यनयोरविशेषः । व्यञ्जकरूपरूषितस्यैव तस्यार्थे शक्तिग्रहाच्च, न घटादिपर्य्यायाभिव्यक्तस्फोटे गृहीतशक्तिकस्याप्रसिद्धपदश्रवणेऽर्थबोधापत्तिरत एवेदमेकं पदमिदमेकं वाक्यमिति व्यवहारः स्वरसतः सङ्गच्छत इत्याहुः ॥ ६८ ॥

*एवमिति* । अखण्डस्फोटस्यैव वाचकत्वे इत्यर्थः । अप्रामाण्यप्रसङ्गमेवोपपादयति-*पदस्येति* । वाक्यस्याऽप्युपलक्षणमिदम् । *अखण्डत्वादिति* । प्रकृतिप्रत्ययविभागशून्यत्वादित्यर्थः । तथाभूतस्यैव वाचकताया भवद्भिरुपपादितत्वादिति भावः । *शास्त्रस्य*—व्याकरणात्मकस्य । *प्रकृतिप्रत्ययाभ्यामिति* । ताभ्यां यद् *व्युत्पादनं*—शक्तिबोधनं, तन्मात्रप्रयोजनत्वादित्यर्थः । तथाच प्रकृतिप्रत्ययविभागेन पदार्थवाचकत्वबोधकस्यास्य शास्त्रस्य पदस्याऽखण्डत्वेऽप्रामाण्यापत्तिरिति भावः ॥ *उपेयप्रतिपत्त्यर्थेति* ॥ वचनविपरिणामेन उत्तरत्राऽप्यन्वेति । उपेयस्य बोधनीयस्य प्रतिपत्तये एषा कल्पनाऽऽश्रिता स्वीकृता मुनिनेति शेषः ॥ तत्र दृष्टान्तमाह—*पञ्चकोशादिवदिति* । तत्र दृष्टान्तमेव स्फुटयति-*अयम्भाव इति* ॥ तत्र

परीक्षा

*एवमिति* । अखण्डस्फोटस्यैव वाचकत्व इत्यर्थः । *शास्त्रस्य*—व्याकरणशास्त्रस्य । प्रकृतिप्रत्ययाभ्यां व्युत्पादनस्य तत्तदर्थप्रतिपादनतात्पर्यकत्वादिति भावः । *तस्मात्*-अखण्डस्फोटस्यैव वाचकत्वात् । 'उपेयप्रतिपत्यर्था' इति लिङ्गवचनविपरिणामेन समाश्रितेत्यनेनाप्यन्वेतीत्याशयेनाह-*उपेयेति*। 'पञ्चकोशादिवद्' इति दृष्टान्तं स्फुटयति—*अयम्भाव इति* । अत्र क्वचिद्भृगुवल्लीप्रघटकमप्युदाहृतम् । तत्र हि—
"भृगुर्वै वारुणिर्वरुण[illegible] । [illegible]ब्रह्मेति । तथोक्तपदार्थादिकमनुभ[illegible]

"भृगुर्वै वारुणिर्वरुणं ब्रह्म पृष्टवान्। स उवाच अन्नम्" इति । तस्योत्पत्त्यादिकं बुद्ध्वा पृष्टे प्राणमनोविज्ञानाऽऽनन्दात्मकपञ्चकोशोत्तरं "ब्रह्मपुच्छं प्रतिष्ठा" इति ज्ञेयं ब्रह्म प्रतिपादितम्। तत्र कोशपञ्चकव्युत्पादनं शुद्धब्रह्मबोधनाय ।

यथा वा आनन्दवल्लीस्थपञ्चकोशव्युत्पादनं वास्तवशुद्धब्रह्मबोधनाय । एवं प्रकृतिप्रत्ययादिव्युत्पादनं वास्तवस्फोटव्युत्पादनायैवेति ।

ननु प्रत्यक्षस्य स्फोटस्य श्रवणादितोऽपि बोधसम्भवान्न शास्त्रं तदुपाय इत्यत आह—*उपाया इति* ॥ उपायस्योपायान्तरादूषक-

---

दर्पणः

हि, "भृगुर्वै वारुणिर्वरुणं ब्रह्म पृष्टवान् । स उवाचान्नं ब्रह्म" इति तस्योत्पत्त्यादि बुद्ध्वा पुनस्तेन पृष्टः "प्राणो ब्रह्म" इति तस्यापि तथात्वं बुद्ध्वा पृष्टो, "मनो ब्रह्म" इति तस्याऽप्यशितमन्नं त्रेधा भवति–"यत्स्थूलं तत्पुरीषं, यन्मध्यमं तन्मांसम्, यदणीयस्तन्मन" इति श्रवणादनित्यत्वमवधार्य्य पुनः पृष्टो, "विज्ञानं ब्रह्म" इति । तस्याऽपि वृत्त्युपहितत्वं ज्ञात्वा पुनः पृष्टेनोपदिष्टम्—"आनन्दो ब्रह्मेति व्यजानात्" । ततो वस्तुतत्त्वं प्राप्य स्थित इति प्रतिपादितम् ।

ननु नेयं वल्ली पञ्चकोशप्रतिपादिका । पञ्चमस्यानुपपाद्यत्वादकोशत्वाच्च तस्यैव तत्र ब्रह्मत्वात्, इत्याशङ्क्यानन्दवल्लिस्थपञ्चकोशोदाहरणमाह—*यथा वेति* । तत्रत्या हि पञ्चकोशा उपाया एव उपदिष्टपञ्चमानन्दकोषस्यापि वैषयिकतयानित्यत्वेनाब्रह्मत्वात् "ब्रह्म पुच्छं प्रतिष्ठा"इत्यतः श्रूयमाणब्रह्मपदस्यैव मुख्यब्रह्मपरत्वम् । अत एवाऽऽधारार्थकः पुच्छशब्दोऽप्युपपद्यते । तस्य लाङ्गुलरूपमुख्यार्थस्य बाधात्। एवञ्चानन्दवल्यां यथा पञ्चकोशाः सर्वाधारब्रह्मबोधनायोपायतयापात्ताः, न तु तेषां वास्तवब्रह्मत्वम् , तथेहाऽप्यवास्तवप्रकृतिप्रत्ययवाचकत्वव्युत्पादनं वास्तवस्फोटनिष्ठवाचकत्वबोधनायेत्याखण्डलार्थः ॥ *श्रवणादित इति*॥ आदिना मन आदिपरिग्रहः ॥ *न शास्त्र-

परीक्षा

पुनस्तेन पृष्टः प्राणो ब्रह्मेति । तस्यापि तथात्वं ज्ञात्वा पुनः पृष्टो मनो ब्रह्मेति । तस्याप्यशितमन्नन्त्रेधा भवति' यत्स्थूलं तस्यापि वृत्त्युपहितत्वं ज्ञात्वा पुनः पृष्टे "आनन्दं ब्रह्मेति व्यजानात्" ततो वस्तुतत्वम्प्राप्य स्थित इति ।

इयम्भृगुवल्लीन पञ्चकोशोदाहरणमत उदाहरणान्तरमाह–*यथा वेति*। उपदिष्टपदञ्चानन्दकोशस्यापि वैषयिकतयाऽनित्यत्वेनाब्रह्मत्वान्मुख्यब्रह्मप्रतिपादनाय 'ब्रह्मपुच्छम्प्रतिष्ठा' इत्युक्तम्। अत्र ब्रह्मपदम्मुख्यब्रह्मपरम्, पुच्छशब्दोपादानात्। अयं हि पुच्छशब्द आधारपरो; न तु लाङ्गूलपरस्तस्य बाधात्। एवञ्च यथा पञ्चकोशाः सर्वाधारब्रह्मप्रतिपादनायोपादेयतयोपात्ताः, न तु तेषां वास्तवब्रह्मत्वम्, तथेहाप्यवास्तवप्रकृतिप्रत्ययोर्वाचकत्वव्युत्पादनं वास्तवस्फोटनिष्ठवाचकत्वबाधनायेति समुदायार्थः । *श्रवणादित इति* । आदिना मननिदिध्यासनयोः परिग्रहः । *न शास्त्रं तदुपाय इति* ।

त्वात्। तथाच व्याकरणाभ्यासजन्यज्ञाने वैजात्यं कल्प्यते। मन्त्रजन्यमिवार्थस्मरणे। वेदान्तजन्यमिव ब्रह्मज्ञाने। तस्य च ज्ञानस्य यज्ञादीनामन्तकरणशुद्धाविव शरीरादिशुद्धावुपयोगः साक्षात्परम्परया वा स्वर्गमोक्षादिहेतुत्वञ्च। तदुक्तं वाक्यपदीये—

तद्द्वारमपवर्गस्य वाङ्मलानां चिकित्सितम्।

---

दर्पणः

मिति*। एतच्छास्त्रं विनापि श्रवणादिना तद्बोधेन व्यभिचारादिति भावः॥ उपायस्योपायान्तरादूषकत्वे सदृष्टान्तां युक्तिमाह—*तथाचेति*॥ व्याकरणाध्ययनस्य स्फोटज्ञानत्वं न कार्य्यतावच्छेदकत्वम्, किन्तु तादृशज्ञानगतवैजात्यं तदवच्छिन्नञ्च नोपायान्तरादिति न व्यभिचारः। वैजात्यस्य प्रागनुपस्थितावपि कारणताग्रहो विधिवादोक्तदिशाऽवसेय इति भावः॥ *मन्त्रजन्यमिवेति*॥ मन्त्रजन्यतावच्छेदकमिवेत्यर्थः। एवमग्रेऽपि।

ननु पुरुषार्थसाधकस्य तस्य सम्पादनवैयर्थ्यमत आह—*तस्य चेति*॥ स्फोटज्ञानस्य चेत्यर्थः॥ *यज्ञादीनामिति*। कामनापरित्यागेन विधीयमानानां तेषामित्यर्थः। यज्ञादीत्यादिना "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इति श्रुत्युक्तदानादिपरिग्रहः। शरीरादीत्यादिना वागिन्द्रियपरिग्रहः।

ननु शरीरादिशुद्धेरप्यपुरुषार्थतया तदुद्देशेनापि प्रवृत्तिर्दुर्घटेत्यत आह—*साक्षादिति*। स्वर्गादीत्यादिनाऽपवर्गपरिग्रहः। साक्षात्स्वर्गहेतुत्वं परम्परयाऽपवर्गहेतुत्वं चेत्यर्थः। स्वर्गहेतुत्वे "चैकः शब्दः" इति भाष्यपठितश्रुतिः, परम्परया मोक्षहेतुत्वे च, "द्वे ब्रह्मणी वेदितव्ये" इति स्मृतिः प्रमाणम्। परम्पराघटकं चात्मतत्त्वज्ञानम्। "तमेव विदित्वा" इति श्रुत्या तदतिरिक्तस्य साक्षान्मोक्षहेतुत्वव्यवच्छेदबोधनादिति बोध्यम्। उक्तार्थे हरिसम्मतिमाह—*तदुक्तमिति*। *तत्*—नादात्मकस्फोटप्रतिपादकं शास्त्रम्। *अपवर्गस्येति*॥ मोक्षस्येत्यर्थः। *द्वारमिति*॥ तदुपयोगीत्यर्थः। हेतुगर्भविशेषणमाह-*वाङ्मलानामिति*। *चिकित्सितमिति*। अपनयनाऽर्थकसन्न-

परीक्षा

यत्र श्रवणादिना तज्ज्ञानम्, तत्र व्यभिचारादिति भावः। *कल्प्यत इति*। एतेन व्याकरणाध्ययनस्य स्फोटज्ञानत्वमात्रन्न कार्यतावच्छेदकम्, किन्तु तज्ज्ञाननिष्ठवजात्यमेव। तदवच्छिन्नञ्च नोपायान्तरादिति न व्यभिचार इति भावः। जन्यतावच्छेदकवैजात्यकल्पनायान्दृष्टान्तमाह—*मन्त्रजन्यमिव*। मन्त्रजन्यतावच्छेदकमिव। एवं वेदान्तजन्येत्यस्याप्यर्थः। तथा च लघुनोपायेन शब्दानाम्प्रतिपत्तौ शास्त्रस्योपयोग इति फलितम्।

नन्वेवमपि शास्त्रजन्यस्य स्फोटज्ञानस्य पुरुषार्थासाधनतया तत्सम्पादनस्य वैयर्थ्यमेवेत्यत आह—*तस्य चेति*। *यज्ञादीनामिति*। एतेन यज्ञादीनां यथा—"तं वेदानुवचनेन ब्राह्मणा विविदिषन्ति, यज्ञेन दानेन तपसाऽनाशकेन" इति श्रुत्या परम्परया मोक्षसाधनत्वन्तथा शास्त्रजन्यस्यास्य ज्ञानस्यापि परम्परया मोक्षसाधनत्वमिति ध्वनितम्। तत्र हरिसम्मतिमाह—*तदुक्तमिति*। *तदिति*। *तत्*—व्याक

पवित्रं सर्वविद्यानामधिविद्यं प्रकाशते ॥
इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम् ।
इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः ।
अत्रातीतविपर्यासः केवलामनुपश्यति ॥ इति ।

न चालीकया प्रकृतिप्रत्ययकल्पनया कथं वास्तवस्फोट-बोधः । तस्या अलीकत्वासिद्धेर्वक्ष्यमाणत्वात् । एवं रेखागवयन्याय

दर्पणः

न्तात् कितेः क्तप्रत्यये वाङ्मलकर्मकापनयनसाधनं यतस्ततो मोक्षद्वारमित्यर्थः । मनःशुद्धौ यज्ञादीनामिव वाक्शुद्धावेव तस्योपयोगादिति भावः । यतः सर्वविद्यानां मध्ये पवित्रमतोऽधिविद्यं विद्यासु प्रकर्षेण दीप्यत इत्यर्थः । तथाचोक्तम्—"तेषां च सामर्ग्यजुषां पवित्रं महर्षयो व्याकरणं गिराहुः" इति । *इदमिति* ॥ सिद्धिसोपानपर्वणां मध्ये इदं प्रथमं पदस्थित्यधिकरणमित्यर्थः । अत्र स्फोटे अतीतविपर्यासो भ्रान्तिशून्य एतत्तत्त्वज्ञानवानिति यावत् । *केवलाम्* । पराख्याम् । *अनुपश्यतीति*। योगधर्मेण प्रत्यक्षीकरोतीत्यर्थः । तथाच योगित्वसिद्धौ किमिदमवशिष्यते ? तत्त्वज्ञानमित्यर्थः । तदुक्तं भागवते द्वादशे नादनिरूपणान्तरम्—

यदुपासनया ब्रह्म योगिनो मलमात्मनः ।
द्रव्यक्रियाकारकाख्यं धूत्वा यान्त्यपुनर्भवम् ॥

इति भावः । *अलीकत्वासिद्धेरिति* । पञ्चकोशादिवत् प्रकृतिप्रत्ययविभाग-

परीक्षा

रणम् । द्वारम्—मोक्षस्य शारीररोगाणामायुर्वेद इव व्याकरणमपि वाङ्मलानामपनुत् । व्याकरणतो हि प्रत्यवायहेतुभूतानपशब्दान्न प्रयुङ्क्ते । ज्ञानं हि तस्य शरणं भवति । *पवित्रमिति* । तथा चाप्रमत्तगीतश्लोकः—

आपः पवित्रम्परमम्पृथिव्यामपाम्पवित्रम्परमञ्च मन्त्राः ।
तेषाञ्च सामर्ग्यजुषम्पवित्रम्महर्षयो व्याकरणानि प्राहुः ॥ इति ।

*अधिविद्यमिति* । विभक्त्यर्थेऽव्ययीभावः । सर्वो हि विद्वान्स्वस्यां विद्यायां कारणमनुगच्छति । *इदमाद्यमित्यादि* । इदं व्याकरणन्नाम शास्त्रम्मोक्षसिद्धिसोपानपर्वणाम्मध्ये प्रथमम्पादस्थापनस्थलमित्यर्थः । *इयमिति* । इयम्—व्याकरणशास्त्ररूपा । मोक्षमाणानाम्—मुमुक्षूणाम् । *अवक्राराजपद्धतिः*—ऋजुराजमार्गः। *अत्र*—स्फोटेव्याकरणज्ञेये राजमार्गे । *अतीतविपर्यासः* । अतीतः अपास्तः विपर्यासो भ्रमो यस्य सः । भ्रमशून्य इति यावत् । *केवलाम्*—पराख्यां वाचम् । *अनुपश्यति*—योगजधर्मसहायेन जानातीत्यर्थः । एवञ्च योगित्वसिद्धौ तत्वज्ञाने न कोऽपि प्रतिबन्धक इति भावः । एतदेव भागवते द्वादशस्कन्धे उक्तम्—

यदुपासनया ब्रह्म योगिनो मलमात्मनः ।
द्रव्यक्रियाकारकाख्यः धूत्वा यान्त्यपुनर्भवम् ॥ इति ।

एतद्निरूपणानन्तरमुक्तमिति यच्छब्दवाच्योऽत्र नाद एव । *अलीकत्वासिद्धेः* । पञ्चकोशादिवत्प्रकृतिप्रत्ययविभागस्यापि मायिकत्वेन नासच्छशशृङ्गतुल्यत्वमिति

आदिपदेन गृह्यते ॥ ६६ ॥

ननु स्फोटस्य वर्णजातीनाञ्च नित्यतया ककार उत्पन्न इति न स्यात्। वायुसंयोगनिष्ठजातेः स्फोटे भाने कादिप्रतीतीनां भ्रमत्वा-

दर्पणः

स्यापि मायिकत्वेन नात्यन्तासच्छशशृङ्गादिवदलीकत्वमिति वक्ष्यमाणप्रायत्वादित्यर्थः। अवास्तवत्वेऽपि मणिप्रभाप्रतिबिम्बस्य मणिप्राप्तिविवैतस्याऽपि परमात्मनः दर्शनेन उपयोगसम्भवादिति भावः। *आदिपदेनेति*। पञ्चकोशादिवदित्यत्रोपात्तेनादिशब्देनेत्यर्थः। न्यायस्तु समासवादे प्रपञ्चितः ॥ ६९ ॥

उत्पत्तिविनाशप्रतीतिसाक्षिकं वर्णानामनित्यत्वं तादृशवर्णात्मकस्फोटाभ्युपगमे तस्याप्यनित्यत्वप्रसङ्ग इत्याशङ्कासमाधानपरतया मूलमवतारयति—*नन्विति*। *वर्णजातीनामिति*। वर्णानां तद्वृत्तिकत्वादिजातीनां चेत्यर्थः। *न स्यादिति*। अयम्भावः—उत्पन्नो नष्टो वा ककार इत्यादिप्रतीतेः ककारादिवर्णात्मकः स्फोटस्तद्वृत्तिजातिर्वोत्पत्त्यादिमत्त्वेन विषयो वाच्यः। तथाच न सम्भवति, द्वयोरेव नित्यत्वाज्जायमानायास्तस्या विषयबाधेन भ्रमत्वापत्तेरिति तादृशप्रतीतेर्भ्रान्तत्वे इष्टापत्तावाह—*वायुसंयोगेति*। *कादिप्रतीतीनाम्*—ककारो गकार इत्यादिबुद्धीनाम्। *भ्रमत्वापत्तिरिति*। यथाश्रुताऽभिप्रायेणेयम्, पूर्वोक्ताऽन्तिमकल्पे भ्रमत्वाप्रसङ्गात्॥

न च त्वन्मतेऽपि कत्वादीनां लौकिकविषयत्वानुपपत्तिः। तद्व्यञ्जकश्रोत्रसमवेतसमवायस्य लौकिकसन्निकर्षस्याभावादिति वाच्यम्। तन्मते कत्वादीनां वायुसंयोगवृत्तिधर्मत्वेन कत्वं साक्षात्करोमीति प्रतीत्या स्वसमवेतव्यञ्जकसमवायस्यैव संसर्गतोपगमेन लौकिकविषयत्वाऽनपायात्। तादृशानेकप्रतीतीनां भ्रमत्वकल्पनापेक्षयैतत्कल्पनाया एवौचित्यात्। आरोपे सति निमित्तानुसरणमिति न्यायात्। मूलं तु तन्मते इत्थमवतारणीयम्। ननु स्वसमवेताभिव्यञ्जकगतसमवायस्य सम्बन्धता न केनाप्या-

परीक्षा

वक्ष्यमाणप्रायत्वादित्यर्थः। न च मायिकत्वेनावास्तवत्वमेवेति वाच्यम्। अवास्तवेनापि दर्पणस्य सूर्यप्रतिबिम्बो नान्धकारस्थघटादिप्रकाशकवदवास्तवमणिप्रभाप्रतिबिम्बेन वास्तवमणिप्राप्तिवच्च मायिको न। तेन परमात्मप्रकाशस्य सम्भवात्। *आदिना*—पञ्चकोशादिवदित्यत्रोपात्तेनादिना ॥ ६९ ॥

ननूत्पन्नः को विनष्टः क इत्यदिप्रतीत्या कादिवर्णानामनित्यत्वम्परसम्मतम्। स्फोटोऽपि सादृश्यवर्णाभिन्न इति, भवदभिमतान्यथासत्त्वस्याप्यनित्यत्वमेव स्यादिति शङ्कानिराकरणपरतया मूलमवतारयति—*नन्वित्यादिना*। *वर्णजातीनाम्*—वर्णगतत्वादिजातीनाम्। *न स्यादिति*। यदि ककारो नित्यस्फोटाभिन्नस्तदा तादृशप्रतीतिर्न स्यादित्यर्थः। एवञ्च तादृशप्रतीत्युत्पत्तेर्निर्विचिकित्सत्वेनानित्यवर्णाभिन्नस्फोटस्याप्यनित्यत्वमेवोचितमिति तात्पर्यार्थः। ननु सा प्रतीतिर्वायुसंयोगनिष्ठजातिप्रकारिका स्फोटविशेष्यिका भ्रमरूपैवेत्यत आह—*वायुसंयोगेति*। *भ्रमत्वापत्तिरिति*। तस्यापि वायुसंयोगनिष्ठकत्वादिप्रकारकत्वादिति शेषः। इदमभिधानन्तस्याः प्रतीतेः समवायसम्बन्धावच्छिन्नवायुसंयोगनिष्ठजातिप्रकारकत्वमिति मतेन।

पत्तिश्चेत्यत आह—

कल्पितानामुपाधित्वं स्वीकृतं हि परैरपि ॥ ७० ॥
स्वरदैर्घ्याद्यपि ह्यन्ये वर्णेभ्योऽन्यस्य मन्वते ॥

स्वीकारस्थलमाह—*स्वरदैर्घ्याद्यपीति* ॥ आदिनोत्पत्तिविनाशसंग्रहः । उदात्तत्वादि न वर्णनिष्ठम् । तस्यैकत्वाद् नित्यत्वाच्च । तच्च स एवायमितिप्रत्यभिज्ञानात् । न च गत्वावच्छिन्नप्रतियोगिताकभेदाभावस्तद्विषयः । व्यक्त्यंशाभेदस्यापि भासमानस्य विना बाधकं त्यागायोगात् ।

नचोत्पत्तिप्रतीतिर्बाधिका । प्रागसत्वे सति सत्वरूपाया उत्पत्तेर्वर्णेष्वनुभवविरुद्धत्वात् । अत एव वर्णमुच्चारयतीति प्रत्ययो, ननु-

---

दर्पणः

द्वतेत्यत आह-*कल्पितानामिति* । कल्पितानाम्-समवायसम्बन्धेन तद्वृत्तीनामप्युक्तसम्बन्धेन तत्र कल्पितानाम् वायुसंयोगगतधर्मविशेषाणामुपाधित्वमुदात्तत्वादिप्रकारकप्रतीतिजनकत्वमित्यर्थः । अधिकं त्वग्रे वक्ष्यते । दृष्टान्तस्फुटीकरणाय मीमांसकमतमाह—*उदात्तत्वादीति* । आदिनाऽनुदात्तत्वपरिग्रहः । उदात्तत्वानुदात्तत्वयोः-परस्परविरोधाद्वर्णभेदेन तत्सत्ता वाच्या । वर्णभेदश्च तदनित्यत्वेऽनेकत्वे वा स्यात्, तदेव तु न सम्भवतीत्याह-*तस्यैकत्वादित्यादि* । नित्यत्वे प्रमाणमाह-*तच्चेति*। नित्यत्वमेकत्वं चेत्यर्थः । *त्यागायोगादिति* । अविषयत्वायोगादित्यर्थः । *बाधिकेति* । व्यक्त्यभेदे प्रतीतिर्बाधिकेत्यर्थः । *प्रागसत्वे सतीत्यादि*-स्वाऽधिकरणसमयध्वंसवत्त्वसम्बन्धावच्छिन्नप्रतियोगिताकाभाववत्वावच्छिन्नकालिकविशेषणतासम्बन्धरूपाया इत्यर्थः । द्वितीयादिक्षणसम्बन्धस्य निरुक्तसम्बन्धेन सत्त्वान्न तत्रातिप्रसङ्गः । *अत एवेति* । अनुभवविरुद्धत्वादेवेत्यर्थः । *प्रत्ययो*--ज्ञानम् ।

परीक्षा

*कल्पितानामिति* । समवायेन तादृशजातीनां स्फोटावृत्तित्वेऽपि स्वाभिव्यञ्जकसमवायस्य तत्र सत्वेन तस्य स्वाश्रयाभिव्यङ्ग्यत्वसम्बन्धेनोपाधित्वं सम्भवतीति । एवञ्चैतादृशसम्बन्धस्य वायुसंयोगसत्वकाल एव सत्वमित्युत्पत्यादिप्रतीतीनान्नानुपपत्तिः । कत्वादेर्वायुसंयोगगतधर्मस्य श्रोत्रग्राह्यत्वमपि स्वसमवेताभिव्यञ्जकसमवेतत्वसम्बन्धेन बोध्यम् । कल्पितानामुपाधित्वमित्यत्र परसम्मतन्दृष्टान्तमाह—*स्वरेति* । *वर्णेभ्योऽन्यस्येति* । तन्मते वर्णा नित्याः, एकत्ववन्तश्च । उदात्तत्वानुदात्तत्वे च विरुद्धधर्मौ तावेकत्र सम्भवत इति । व्यञ्जकध्वनिधर्मवत्तयोस्ताभ्याङ्कल्पिताभ्यां वर्णस्याप्युदात्तत्वादिव्यवहार इति हि तन्मतम्, तदेतदाह—*उदात्तत्वादिति* । *तच्च*-हीत्ययञ्च । *त्यागायोगादिति* । तत्प्रतीत्यविषयत्वकथनायोगादित्यर्थः । *बाधिका* । व्यक्त्यभेदप्रतीतेर्भ्रमत्वसाधिका । *प्रागसत्वे सतीति* । स्वाधिकरणसमयध्वंसादिकरणत्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्समयवृत्तित्वरूपाया इत्यर्थः । *अत एव*-अनुभवविरुद्धत्वादेव । *प्रत्ययो*-ज्ञानम् ।

त्पादयतीतिप्रत्ययो व्यवहारश्च । उच्चरितत्वञ्च ताल्वोष्ठसंयोगादिज-न्याभिव्यक्तिविशिष्टत्वम् ।

किञ्च व्यञ्जकध्वनिनिष्ठात्पत्त्यादेः परम्परया वर्णनिष्ठत्वविषयत्वे-नाऽप्युपपत्तेर्न साऽतिरिक्तवर्णसाधिका । परम्परया वर्णनिष्ठत्वाभ्यु-पगमाच्च न भ्रमत्वम् ।

साक्षात्सम्बन्धांशे भ्रम इत्यवशिष्यते । तदपि सोऽयमित्यत्र व्य-क्त्यभेदांशे तव भ्रमत्ववत्तुल्यम् । परन्तु ममातिरिक्तवर्णतत्प्रागभा-वध्वंसकल्पना नेति लाघवमतिरिच्यते ।

---

दर्पणः

*व्यवहारः*—शब्दप्रयोगः ॥

ननूच्चारणमपि तदुत्पत्त्यनुकूलो व्यापार एव । तथाच सैव प्रतीतिर्वर्णानित्यत्व-साधिकेत्यत आह-*उच्चरितत्वञ्चेति* । अभिव्यक्तिविशिष्टत्वं तद्विषयत्वम् । तथाच तादृशप्रत्ययाभिव्यक्तिनिष्ठं वर्णनिरूपितविषयित्वमेव विषयीक्रियते । नतूत्पत्तिनिष्ठं वर्णवृत्तित्वमिति न साऽनित्यत्वसाधिकेति भावः । ननु वर्णाऽभिव्यक्तिजनकः कण्ठ-ताल्वाद्यभिघात एवोच्चारणपदार्थो, न वर्णोत्पत्तिजनक इत्यत्र किं प्रमाणम् । किञ्च वर्णाऽनित्यत्ववादिनामुत्पद्यते वर्णो वर्णमुत्पादयतीत्यादिप्रयोगा इष्टा एवेति नाऽनुभ-वविरोधोऽपीत्यत आह-*किञ्चेति*। उत्पत्त्यादेरित्यादिना विनष्टो वर्ण इति प्रतीति-साक्षिकविनाशः परिगृह्यते । परम्परया स्वाश्रयध्वनिव्यङ्ग्यत्वरूपया नाऽतिरिक्तेति वर्णानित्यत्वसाधिकेत्यर्थः । न तु स्फोटोऽतिरिक्तेति तदर्थः । तैः स्फोटाऽन-ङ्गीकारात् ।

नन्वेवं ध्वन्युत्पत्त्यादेस्तादृशप्रतीत्या वर्णेष्ववगाहने भ्रान्तत्वापत्तिरत आह-*परम्परया वर्णेति* । स्वाश्रयसंयोगाऽवगाहिन्या लोहितः स्फटिक इति प्रतीतेर्यथा न भ्रमत्वं, तथाऽस्या अपीति भावः । अवशिष्यत इत्यस्योत्पन्नो वर्ण इति प्रतीते-रिति शेषः । ननु तादृशप्रतीतेर्नियमेन परम्परासम्बन्धविषयत्वकल्पने गौरवमत आह—*परन्त्विति* । *अतिरिक्तेति* । अधिकेत्यर्थः ।

तथाचाऽनेकवर्णतद्ध्वंसादिकल्पनाऽपेक्षया तत्प्रतीतेर्नियमतस्तादृशसम्बन्धाऽव-गाहित्वकल्पनैव लघीयसीति भावः । यदि वर्णस्थले ध्वनिनैयत्यं स्यात्; स्यादेव त-दोत्पत्तेस्तद्घटितपरम्परासम्बन्धेन वर्णनिष्ठता । तत्रैव च मानाभाव इत्याशङ्क्य

परीक्षा

*व्यवहारः*-परम्प्रतिशब्देन बोधनम् । ननूच्चरितत्वमपि प्रयत्नविशेषजन्यत्वमेवेति कथिन्नत्यत्वमत आह—*उच्चरितत्वञ्च* ।

ननु वर्णानित्यत्ववादिनामुत्पत्यादिसत्वमिष्टमेवेति नतु भवद्विरोधी, अत आह—*किञ्चेति* । *सा*—उत्पन्नककारादिप्रतीतिः । *अतिरिक्तेति* । वर्णानि-त्यत्वसाधिकेत्यर्थो; न तु स्फोटाभावात् परम्परया स्वाश्रयध्वनिव्यङ्ग्यत्व-सम्बन्धेन ।

ननु तादृशप्रतीतेर्नियमेन परम्परासम्बन्धविषयकत्वे गौरवमत आह—*परन्त्व-

न च वर्णस्थले ध्वनिसत्वे मानाभावः । तदुत्पादकशङ्खाद्यभावेन तदसम्भवश्चेति वाच्यम् । ककाराद्युच्चारणस्थले तत्तत्स्थानस्य जिह्वाया ईषदन्तरपाते वर्णानुत्पत्तेर्ध्वन्युत्पत्तेश्च दर्शनाज्जिह्वाभिघातजवायुकण्ठसंयोगादेर्ध्वनिजनकत्वकल्पनात् । तस्य च वर्णोत्पत्तिस्थलेऽपि सत्त्वात्तत्रैव प्रतिबध्यप्रतिबन्धकभावकल्पना निष्प्रमाणिका स्यादिति विपरीतगौरवम् ।

एवं परस्परविरोधादुदात्तत्वानुदात्तत्वह्रस्वत्वदीर्घत्वादिकमपि न वर्णनिष्ठं युक्तमितितेषामभिप्रायः । एवञ्चोत्पत्त्यादिप्रतीतीनां तत्प्रमात्वस्य च निर्वाहः परेषामपि समान इति प्रतिबन्द्यैवोत्तरमिति भावः ॥ ७० ॥

---

दर्पणः

निराचष्टे—*नचेति* । वर्णपार्थक्येन ध्वनेरनुभवादिति भावः । हेत्वसमवधानादपि तत्सत्त्वं न घटत इत्याह—*तदुत्पादकेति* । शङ्खौष्ठाभिघातजवायुसंयोगादेरित्यर्थः ॥ *वर्णानुत्पत्तेरिति* । वर्णानभिव्यक्तेरित्यर्थः । *दर्शनादिति* । दृशिर्ज्ञानसामान्यार्थः । *सत्वादिति* । तथाच पार्थक्येनानुभूयमानायाः प्रतीतेर्जिह्वाभिघातजकण्ठवायुसंयोगादेर्हेतोश्च सत्वान्न वर्णाभिव्यक्तिस्थले ध्वनिनैयत्यमित्युक्तसम्बन्धविषयकप्रतीतिर्निराबाधेति भावः । *तत्रैवेति* । वर्णस्थले ध्वन्यसत्त्ववादिन एवेत्यर्थः । *विपरीतगौरवमिति* । स्वकारणबलाज्जायमाने ध्वनौ वर्णोत्पादकसामग्र्याः प्रतिबन्धकत्वकल्पना ध्वन्यकल्पनाप्रयुक्तलाघवापेक्षया विपरीतगौरवग्रस्तेति यावत् । *तेषामिति* । वर्णनित्यतावादिनां मीमांसकानामित्यर्थः । *एवञ्चेति* । उत्पत्त्यादीनां वर्णाऽवृत्तित्व इत्यर्थः । *प्रतिबन्द्यैवेति* । पराऽभिमतसमाधेयमुत्तरं प्रतिबन्दिस्तयेत्यर्थः । तथा च तत्र मीमांसकैरुत्पत्यादिप्रतीतेः प्रमात्वे यः समाधिराश्रितः स एवास्माभिरप्यनुसर्त्तव्य इति भावः । तथा चाऽखण्डवाक्यस्फोटस्वीकारे न किञ्चिद् बाधकमिति फलितम् ।

नन्वेतत्कल्पे पदानामसत्त्वेन मीमांसकसिद्धान्तविरोधः । तथाहि—'व्रीहिभिर्यजेत' इत्यत्र यागेन द्रव्यमात्राक्षेपे व्रीहिश्रुतिर्नियमार्था व्रीहिभिरेव नान्यैरिति । तत्र व्रीह्यभावे नित्यकर्मणः प्रारब्धकाम्यकर्मणश्च लोपो मा भूदिति प्रतिनिधिरुपादीयते । व्रीहित्वस्य शक्त्युपलक्षणत्वेन प्रतिनिधेरपि श्रौतत्वात् । भवन्मते तत्र प्रतिनिध्युपा-

परीक्षा

ति* । वर्णपार्थक्येन ध्वनेरननुभवान्नध्वनिसत्वमित्याशङ्कान्निराचष्टे—*नचेति* । *वर्णानुत्पत्तेः*–वर्णानभिव्यक्तेः । *जिह्वाभिघातजेति* । संयोगजसंयोगाभिप्रायेणेयमुक्तिः । *वर्णोत्पत्तिस्थले* । वर्णाभिव्यक्तिस्थले । *तत्रैव* । ध्वन्युत्पत्तौ । *प्रतिबध्यप्रतिबन्धकभावेति* । अवच्छेदकतासम्बन्धेन ध्वनिम्प्रति समवायेन कर्णवायुसंयोगः प्रतिबन्धक इत्येवं रूप इत्यर्थः ।

*एवम्*—उत्पत्तिविनाशयोरिव । *परेषाम्*—वर्णनित्यतावादिनाम्मीमांसकानाम् । *समान इति* । एवञ्चाखण्डस्फोटस्वीकारे बाधकाभावः । नन्वेवं सति समा-

दर्पणः

दाने तद्वाक्याखण्डार्थाऽननुष्ठानान्नित्यादेर्विलोपापत्तिः। नीवारकरणकक्रियाया अन्यत्वात्। 'क्रिया न प्रतिनिधीयते, द्रव्यं तु प्रतिनिधीयते एव' इति परिभाषाया उच्छेदश्च। एवं "श्वेतं छागमालभेत" इत्यत्र क्रियायाश्छागद्रव्येण सम्बन्धः श्रौतो, द्वितीयाश्रुत्या तस्य साक्षात्प्रतिपादनात्। श्वेतगुणस्य तु वाक्यीयः सः। तत्सामानाधिकरण्यात्तस्य निर्गुणस्य द्रव्यस्य निरधिकरणस्य गुणस्य वाऽसम्भवात्। श्वेतगुणस्य छागसम्बन्धमुपजीव्यैव क्रियासम्बन्धाच्छ्रुतिप्रतिपादितद्रव्यसम्बन्धाद् वाक्यप्रतिपादितपुरःस्थितगुणसम्बन्धस्य दुर्बलत्वात्, श्वेतच्छागाभावेऽन्यगुणकच्छाग आलभ्यते, न तु श्वेतगुणयुक्तो मेषः। श्रुतिबाधापत्तेः। तस्य चाखण्डपक्षे असम्भवात्। एवमेव पदार्थनिबन्धनमीमांसान्यायासम्भवोऽपि। अखण्डस्फोटस्यैत्र भवन्मते अखण्डार्थत्वेन केन कस्य बाधो भवेदिति चेत्? अत्राहुः–अखण्डवाक्यादखण्डतत्तदर्थाच्च रेखागवयन्यायेन पदपदार्थावापोद्वापाभ्यां कल्पितपदपदार्थमादाय प्रतिनिध्युपादनस्योपपत्तिः। ऋषीणां तत्वार्थावबोधेऽपि तत्वभूतेन वस्तुना व्यवहाराऽसम्भवाद् व्यवहारकालेऽनिर्द्धारिततत्वसदृशैस्तैर्नानाप्रकारैः पदतदर्थानां व्यवह्रियमाणत्वान्न तद्वचोभिः पदपदार्थानां वास्तवसत्यत्वम्। वाक्यार्थस्यापि तदापेक्षिकमेव। परमार्थदशायां सर्वस्याऽपि व्यावहारिकस्यासत्यत्वादिति।

नैयायिकास्तु—सर्वमिदं वर्णानां नित्यत्वे सम्भवेत्। तत्रैव तु प्रमाणाभावः। शब्दमात्रस्याकाशसमवायिकारणकत्वात्। भेरीदण्डसंयोगादीनां ध्वन्यात्मकशब्दं

परीक्षा

नाधिकरणपदार्थयोरभेदान्वयः 'पूर्वपदार्थप्रधानोऽव्ययीभाव' इत्यादिव्यवहाराणाङ्का गतिः पदानां तत्रासत्वादितिचेद्? न। यथा पदेषु कल्पितप्रकृतिप्रत्ययविभागमादाय प्रत्ययानाम्प्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति व्यवहारस्तथा वाक्येष्वखण्डेषु। वस्तुतः पदानामसत्वेऽपि अवापोद्वापाभ्याङ्कल्पितपदान्यादायोक्तव्यवहारस्याऽप्यभ्युपपत्तेः। बलाबलाद्यधिकरणेषु श्रुतिलिङ्गादीनां प्रबलदुर्बलभावविचारो जैमिनीयानामेवोपपाद्यः। यद्यप्यर्षयः-सर्वेऽपि तत्त्ववेत्तारः, तथापि व्यवहारकालेऽनिर्द्धारिततत्वसदृशैस्तैः पदपदार्थे वाक्यार्थविचारः क्रियत इति स्वीकारेण तेषां वचनावलम्बेनैव तदीयानां विचारप्रवृत्तिरिति सर्वमनवद्यम्।

नैयायिकास्तु—वर्णानामुत्पत्त्यादिप्रतीतिवशादनित्यत्वमेव। भेरीदण्डसंयोगादीनान्ध्वनिजनकतावत्कण्ठवायुसंयोगादीनामपि वर्णोत्पादकत्वमेव। एवं वर्णानां तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वमेव। तदेवौषधमिति, 'वत्स एवाङ्कुर' इत्यादिप्रत्यभिज्ञाऽपि साजात्यावगाहिन्येव। पदानि वाक्यानि वा नातिरिक्तानि, किन्त्वापेक्षाबुद्धिविशेषविषयताविशिष्टवर्णघटितान्येव। वर्णानान्द्विक्षणावस्थायित्वेन तेषामानुपूर्व्यपि निर्वक्तुं शक्या। सत्कार्यवादीयसिद्धान्तरीत्या वर्णानामभिव्यक्तिरिति तु न युक्तम्। कण्ठाद्यभिघातात्प्राग्वर्णाभिव्यक्तिसत्वे पदप्रत्यक्षापत्तेः। अभिव्यक्तेः सामग्रीसाध्यत्वे सत्कार्यवादस्यायुक्तत्वमेव। अनन्तवर्णप्रागभावध्वंसकल्पनाप्रयुक्तगौरवन्तु प्रामाणिकत्वान्न दोषावहमिति वदन्ति ॥ ७० ॥



इति व्यक्तिस्फोटविवरणम्।

दर्पणः

प्रतीव कण्ठादिस्थानवाय्वभिघातस्याऽपि वर्णात्मकशब्दं प्रत्यन्वयव्यतिरेकाभ्यां निमित्तत्वाऽवधारणाच्च । एवञ्च तादात्म्यसम्बन्धेन जन्यभावस्य प्रतियोगितासम्बन्धेन ध्वंसत्वाऽवच्छिन्नं प्रति हेतुतयोच्चरितवर्णस्य क्षणाऽन्तरितस्याऽप्रतीतेर्नष्टो वर्ण इत्येव प्रतीतेश्च । स्वाव्यवहितोत्तरवर्णस्यैव नाशकताकल्प्यते प्रतियोगितासम्बन्धेन योग्यविभुविशेषगुणनाशं प्रति स्वसामानाधिकरण्यस्वाव्यवहितवर्णत्वोभयसम्बन्धेन योग्यविभुविशेषगुणस्य हेतुताया ज्ञानादिस्थले क्लृप्तत्वाच्च । कण्ठताल्वाद्यभिघातस्य च कत्वादिकमेव कार्य्यतावच्छेदकं, न तु तत्तद्वर्णाऽभिव्यक्तित्वं गौरवात् । न च लौकिकविषयितया कत्वमेव तदवच्छेदकं वाच्यमिति न गौरवमिति वाच्यम् । तथा सति कोलाहलाऽप्रत्यक्षप्रसङ्गात् । न हि कोलाहलप्रत्यक्षं कत्वादिविषयकं, येन तल्लौकिकविषयितायाः कार्य्यतावच्छेदकघटकता सम्भाव्येत । किञ्च घटाद्युत्पादकदण्डादेरपि तदभिव्यक्तित्वस्यैव कार्य्यतावच्छेदकत्वापत्तौ घटादीनामपि नित्यत्वापत्तिरिति बहुव्याकोपः ॥

न च सत एवाभिव्यक्तिरिति साङ्ख्यमताश्रयणादुक्तापत्तिरिष्टैवेति वाच्यम् । तन्मतस्याऽप्यापातमनोरमत्वात् । तथाहि—अभिव्यक्तिः सत्यसती वा । नाद्यः । घटानुत्पत्तिदशायां घटस्येव तस्या अपि सत्त्वाद् घट इति प्रतीत्यापत्तेः । अभिव्यक्तेरप्यभिव्यक्त्यङ्गीकारेऽपि तस्या अपि कार्य्यत्वेन सत्त्वादुक्तदोषो दुरुद्धर एव । अन्त्ये स्वसिद्धान्तव्याघातः । युक्तितौल्येन पदार्थान्तरस्याप्युत्पत्तिसिद्धेरिति । किञ्चोत्पन्नो घटो नष्टो घट इति प्रतीत्या घटादीनामनित्यत्ववदुत्पन्नः ककारो, नष्टः स इत्यविलक्षणप्रतीत्या ककारादीनामनित्यत्वमेवावधार्य्यते । कत्वादीनां संयोगधर्मत्वं तु दुरुपपादमेव । वर्णासमेवतत्वेन श्रोत्राग्राह्यत्वप्रसङ्गात् । न चोक्तसन्निकर्षादेव तत्प्रत्यक्षोपपत्तिः, तथा सति शब्दत्वादिप्रत्यक्षाऽनापत्तेः । न च तत्सम्बन्धस्य ककारं श्रृणोमीति प्रतीतौ भाने प्रमाणमपि शब्दं श्रृणोमीति प्रतीतेः समवायविषयकत्ववदुक्तप्रतीतेरपि तद्विषयकत्वेनोपपत्तेश्च । समवायांशे सर्वत्र तादृशप्रतीतीनां भ्रमत्वमित्यपि न । वर्णसमवेतत्वस्य तत्राभ्युपगमेन विषयाऽबाधात् । एवञ्च वर्णानामनेकत्वेन तत्रोदात्तत्वादिप्रतीतिरपि स्वरसतः सङ्गच्छते इति दृष्टान्तदौर्भिक्ष्यमेव ।

एवञ्च वर्णप्रागभावध्वंसानां प्रमाणसिद्धानामपलपितुमशक्यत्वान्न तत्कल्पनागौरवमपि । नच वर्णानित्यतावादिमते सोऽयं गकार इति प्रत्यभिज्ञानुपपत्तिस्तस्यास्तज्जातीयत्वविषयत्वेनोपपादने तु तज्जातीयोऽयमित्येवाकारः स्यादिति वाच्यम् । यत्र प्रत्यभिज्ञायां गत्वादेर्जातित्वेन भानं तत्रैव तस्यास्तज्जातीयोऽयमित्याकारो, यत्र तु स्वरूपेण तत्र सोऽयमित्याकार इत्यभ्युपगमात् । तज्जातीयाभेदावगाहिन्यास्तदेवौषधमित्याकारायाः प्रत्यभिज्ञायाः सर्वसिद्धत्वाच्च । तस्माद् वर्णात्मकस्फोटस्य वाचकत्वमसम्भवदुक्तिकमेव । स्फोटस्य ध्वन्यतिरिक्तत्वाभावाच्च योगशास्त्रादौ तस्य निरूपणं तूपासनार्थमेवेति प्रागुक्तप्रायम् । सखण्डस्फोटस्तु प्रागेव निरस्त इत्यानुपूर्व्यवच्छिन्नवर्णानां वाचकत्वमूह्यमिति वदन्ति ॥ ॥ ७० ॥

इति भूषणसारदर्पणे व्यक्तिस्फोटनिरूपणम् ॥

इत्थं च पञ्चधा व्यक्तिस्फोटाः। जातिस्फोटमाह—

**शक्यत्व इव शक्तत्वे जातेर्लाघवमीक्ष्यताम् ॥**
**औपाधिको वा भेदोऽस्तु वर्णानां तारमन्दवत् ॥७१॥**

अयम्भावः—वर्णास्तावदावश्यकाः। उक्तरीत्या च सोऽयं गकार इतिवद्, योऽयं गकारः श्रुतः सोऽयंहकारः इत्यपि स्यात्, स्फोटस्यैकत्वात्। गकारोऽयं न हकार इत्यनापत्तेश्च।

किञ्च स्फोटे गत्वाद्यभ्युपेयम्, न वा। आद्ये स एव गकारोऽस्तु। वर्णनित्यतावादिभिरतिरिक्तगत्वानङ्गीकारात्। तथाचाति-

---

दर्पणः

*इत्थमिति*। पूर्वोक्तप्रकारैरित्यर्थः। *पञ्चधेति*। वर्णपदवाक्याऽखण्डपदाऽखण्डवाक्यभेदभिन्ना इत्यर्थः।

क्रमप्राप्तं जातिस्फोटं निरूपयति, मूले-*शक्यत्व इवेति*॥ ननूक्तरीत्या स्फोटातिरिक्तवर्णानामसत्त्वात्तद्गतजातेर्वाचकत्वविचारः काकदन्तपरीक्षासमोऽत आह सारे-*अयम्भाव इति*॥ हकारगकारयोरभेदे साधकमाह-*स्फोटस्यैकत्वादिति*॥ तदभिन्नाभिन्नस्य तदभिन्नत्वनियमेन हकारात्मकस्फोटाभिन्नगकारे तदभेदावगाहिबुद्धेः प्रमात्वापत्तिरित्यर्थः॥ *अनापत्तेश्चेति*॥ अभेदादेव च तादृशभेदाऽवगाहिबुद्धेः प्रमात्वानुपपत्तेरित्यर्थः।

ननु वर्णात्मकस्फोटस्यैकत्वेऽपि गत्वादिविरुद्धधर्माऽध्यासमूलकभेदप्रतीतेर्नाऽनुपपत्तिः। प्रामाण्यं तु तस्या वर्णैक्यवादिमते दूरापास्तमेवेत्यत आह—*किञ्चेति*॥ उपाधित्वाभिमतगत्वादीत्यर्थः। *आद्ये*—स्फोटे गत्वाऽभ्युपगमपक्षे॥ *तदेव*—गत्वमेव। ननु गत्वादेर्वर्णधर्मतया भेदेन कथं तस्य तदात्मकत्वमत आह—*वर्णनित्यतावादिभिरिति*॥ मीमांसकादिभिरित्यर्थः॥ *अतिरिक्तेति*॥ धर्मधर्मिणोर-

परीक्षा

*इत्थमिति*। पूर्वोक्तैः प्रकारैः। जातीस्फोटवादिनाम्मतमुपस्थापयति-*जातीति*। *जातेः*—अर्थशब्दगतजातेः। *लाघवमिति*। व्यक्तीनाम्बाहुल्याद्वाच्यत्ववाचकत्वकल्पनापेक्षया जातेस्तथात्वे तासामेकत्वाल्लाघवमित्यर्थः। ननूक्तरीत्या स्फोटातिरिक्तवर्णानामसत्वाद्गतो जातेर्वाचकत्वविचारो गगनकुसुमायमान इत्याशङ्कामपनेतुं स्फोट एव व्यक्तिरूपस्तावन्नाङ्गीकार्यं इति प्रतिपादयति-*अयम्भाव इति*। *इत्यपि स्यादिति*। तदभिन्नाभिन्नस्य तदभिन्नत्वमिति न्यायात्स्यादित्यर्थः।

ननु स्फोटस्यैकत्वेऽपि कत्वगत्वादिविरुद्धधर्माध्यासमूलकभेदानुभवेन नोक्तापत्तिरत आह—*किञ्चेति*। *आद्ये*—गत्वाभ्युपगमपक्षे। *तदेव*—गत्वमेव। ननु गत्वादेर्वर्णधर्मत्वेन कथन्तस्याश्रयाभेदं वदसीत्यत आह—*वर्णेति*। वर्णानान्नित्यत्वे तेषामेकत्वादनेकसमवेतत्वासम्भवेन नातिरिक्ता गत्वादिजातिरिति भावः। *अतिरिक्तेति*। कत्वगत्वाद्यपेक्षयेत्यादिः।

रिक्तस्फोटकल्पन एव गौरवम् । अन्त्ये गकारादिप्रतीतिविरोधः ।

वायुसंयोगवृत्ति, ध्वनिवृत्ति वा वैजात्यमारोप्य तथा प्रत्यय इति चेद् ? न । प्रतीतेर्विना बाधके भ्रमत्वासम्भवात् । अस्तु वा वायुसंयोग एव गकारोऽपि । तस्यातीन्द्रियत्वं दोष इति चेद्धर्मवदुपपत्तेरिति कृतं स्फोटेन ।

---

दर्पणः

भेदाभ्युपगमादित्यर्थः ॥ *गौरवमिति* ॥ गकारादिप्रतीतीनां गत्वादिविशिष्टगकारादिविषयकत्वेनोपपत्तिसम्भवादिति भावः । अन्त्ये स्फोटे गत्वाद्यनभ्युपगमकल्पे इत्यर्थः । *विरोध इति* । गादिप्रतीत्यनुपपत्तिरित्यर्थः । गत्वस्यान्यधर्मस्य स्फोटावृत्तित्वेन तद्विशिष्टविषयकप्रतीत्यनुपपत्तिरिति भावः ॥

*वायुसंयोगवृत्तीति* ॥ स्वमते ध्वनिवृत्तीति, मतान्तरे पूर्वोक्तरीत्या तादृशवैजात्यारोपेण प्रतीतेः सूपपादत्वादाह—*आरोप्येति* ॥ *भ्रमत्वायोगादिति*॥ साक्षात्सम्बन्धेन प्रमात्वोपपत्तावारोपितसम्बन्धे तदुपपन्नत्वे प्रमाणाभावादिति भावः ।

नन्वतिरिक्तानेकवर्णकल्पनापेक्षया तादृशप्रतीतीनां भ्रमत्वमेव न्याय्यमत आह—*अस्तु वेति* ॥ तथाच तावतैव प्रतीतेः प्रमाण्यनिर्वाहेऽलं स्फोटकल्पनयेति भावः । *तस्य*-संयोगस्य । *अतिन्द्रियत्वमिति* । लौकिकविषयताशून्यमित्यर्थः । *दोषः* बाधकमित्यर्थः । प्रतिबन्द्योत्तरयति—*धर्मवदिति* ॥ यथा अतीन्द्रियमात्रवृत्तिधर्मत्वस्य साक्षात्काराविषयत्वव्याप्यत्वं त्वया न स्वीक्रियते, तथाऽतीन्द्रियसंयोगगतविशेषस्य मयाऽपीत्यर्थः । यद्यतीन्द्रियस्यैवैन्द्रियकत्वमत्यन्तासम्भवदुक्तिकं, तदा तादृशवैजात्यस्य स्फोटधर्मवत्वमपि तथैव । प्रत्यक्षानुपपत्तेरिति भावः । ननु कत्वादिधर्माणामतीन्द्रियत्वेऽपि ज्ञानलक्षणया कादिप्रतीतौ तज्ज्ञाने बाधकाभाव इति चेद् ? न । ककार इति प्रत्यये, कत्वं साक्षात्कारोमीत्यनुव्यवसायेन लौकिकविषयत्वावगाहेन नोक्तप्रकारोऽसम्भवात् । 'शङ्खः पीत' इति ज्ञानानन्तरोत्पन्नः, पीतत्वं पश्यामीति प्रत्ययस्तु भ्रम एव । दोषविशेषस्य तादृशविषयतानियामकत्वकल्पनगौ-

परीक्षा

*अन्त्यः*-स्फोटे गत्वाद्यनभ्युपगमपक्षे ।

*विरोध इति* । गत्वाद्यन्यधर्मस्य स्फोटावृत्तित्वेन तत्तद्धर्मप्रकारकप्रतीतीनामनुपपत्तिरिति भावः । परोक्तमनूद्य दूषयति-*वाय्विति*।*असम्भवादिति* । अतिरिक्तगकारादिविशेष्यकः समवायसम्बन्धावच्छिन्नगत्वादिप्रकारकत्वेन प्रमात्वस्य न्यायादिति भावः । नन्वतिरिक्तानन्तगकारादिकल्पनापेक्षया तादृशप्रतीतीनाम्भ्रमत्वमेवास्त्वित्यत आह-*अस्तु वेति*। एतावतैव गादिविषयकप्रमात्मकप्रतीत्युपपत्तेरलं स्फोटेनेति भावः । *तस्य*-वायुसंयोगस्य । *दोषः*-बाधकम् । *धर्मवदिति* । यथा भवता तादृशधर्मस्यातीन्द्रियमात्रवृत्तित्वेऽपि साक्षात्कारविषयत्वङ्कल्प्यते, तथाऽतीन्द्रियस्यापि तस्य संयोगस्य साक्षात्कारविषयत्वम्मन्मतेऽप्यस्त्विति प्रतिबन्दीवोत्तरम् । यद्यतीन्द्रियस्य सेन्द्रियकत्वं विरुद्धम्, तदा तेषाङ्गत्वादीनां स्फोटधर्मत्वमपि प्रत्यक्षानुपपत्त्या कल्पयितुमशक्यमिति भावः ।

तस्मात् सन्त्येव वर्णाः; परन्तु न वाचकाः। गौरवात्। आकृत्यधिकरणन्यायेन जातेरेव वाच्यत्ववद्वाचकत्वस्यापि युक्तत्वाच्च। इदं हरिपदमित्यनुगतप्रतीत्या हर्य्युपस्थितित्वावच्छेदेन हरिपदज्ञानत्वेन हेतुत्वात्तदवच्छेदकतया च जातिविशेषस्यावश्यकल्प्यत्वात्।

न च वर्णानुपूर्व्यैव प्रतीत्यवच्छेदकत्वयोर्निर्वाहः। घटघटत्वादेरपि संयोगविशेषविशिष्टमृदाकारादिभिश्चान्यथासिद्ध्यापत्तेः।

---

दर्पणः

रवादिति विभावनीयम्। उपसंहरति—*तस्मादिति*॥ कत्वादिविशिष्टविषयकसाक्षात्कारानुपपत्तिप्रमाणसद्भावादित्यर्थः॥ *सन्त्येवेति*॥ त्वदभिमतस्फोटातिरिक्ता वर्णाः सन्त्येवेत्यर्थः॥ *परमिति*॥ किन्त्वित्यर्थः॥ *गौरवादिति*॥ तत्तद्वर्णभेदभिन्नाऽनन्तशक्तिकल्पने गौरवादित्यर्थः।

ननु तावद्वर्णगतपदत्वादिजात्यनुगतीकृतेष्वेकस्या एव शक्तेरभ्युपगमान्न नानात्वप्रयुक्तगौरवमत आह—*आकृत्यधिकरणेति*। न्यायस्तु नामाऽर्थनिरूपणे प्रपञ्चितः। ननु तादृशजातौ मानाऽभावोऽत आह—*हरिपदमिति*॥ अनुगतधर्मं विना सकलतादृशपदेष्वेकाकारतादृशप्रतीत्यनुपपत्तेरिति भावः। नन्वनुगतप्रतीतिमात्रस्य जातिसाधकत्वे विभुत्वादेरपि जातित्वापत्तिरतः करणतावच्छेदकत्वादिनैव तत्सिद्धिर्वाच्या, तदभावात् प्रकृते कथं तस्य जातित्वमत आह—*हर्य्युपस्थितित्वावच्छेदेनेति*॥ कार्यतावच्छेदकप्रदर्शनमिदम्॥ *आवश्यकेति*॥ अन्यथा तावत्पदानां तत्तद्व्यक्तित्वेन हेतुताया व्यभिचारेणासम्भवादिति भावः॥ *प्रतीत्यवच्छेदकत्वयोरिति*॥ अनुगतप्रतीत्यवच्छेदकत्वयोरित्यर्थः। *वर्णानुपूर्व्येति*॥ तादृशजात्यभिव्यञ्जकत्वेनावश्यकल्प्यतयेत्यर्थः॥ *निर्वाह इति*॥ तथाचावश्यक्लृप्तनियतपूर्ववृत्तितावच्छेदकताकानुपूर्व्येवानुगतप्रतीतिकारणतावच्छेदकत्वयोः सम्भवेन तद्रूपविशिष्टपदोपस्थितित्वेन हेतुत्वमन्यथासिद्धिरिति भावः॥ *अन्यथासिद्ध्यापत्तेरिति*॥ न च सेष्टा, प्रत्यक्षाऽऽदिप्रमाणविरोधादिति भावः।

ननु जातेः शक्यत्वे जातित्वं शक्यतावच्छेदकं वाच्यम्। तस्य च तदितरावृत्ति-

परीक्षा

*तस्मात्*—उक्तहेतोः। *सन्त्येव*—त्वदभिमतस्फोटातिरिक्ताः सन्त्येव। *यस्तु*—किन्तु। *गौरवात्*। बहूनां वाचकत्वे गौरवात्। ननु पदत्वजात्याऽनुगममात्रगौरवावकाश इत्यत आह—*आकृत्यधिकरणेति*। तादृशजातिसद्भावे प्रमाणमाह—*इदमित्यादि*। अनुगमप्रतीतिमात्रेण जातिसिद्धौ विभुर्विभ्विति प्रतीत्या विभुत्वजातिसिद्ध्यापत्तिरतः साधकान्तरमाह—*हर्युक्तेति*। *अवश्येति*। अन्यथा तत्तदुपरि पदनिष्ठतत्तद्व्यक्तित्वस्य कारणतावच्छेदकतावच्छेदकत्वे आनन्त्यव्यभिचारयोरापत्तिः स्यात्।

तादृशजात्यभिव्यञ्जकतावच्छेदकतया क्लृप्तानुपूर्व्यैव भवदुक्तव्यवस्था ह्यतिरिक्ता, इति जातिर्मास्त्विवति शङ्कान्निराचष्टे—*न चेति*। *घटत्वादेरिति*। आदिना पटत्वादिपरिग्रहः। *आकारादिभिः*—अवयवसंयोगविशेषैः। परम्परासम्बन्धस्यावच्छेदकतावच्छेदकत्वप्रयुक्तगौरवन्तूभयोः सममिति भावः। ननु तत्तज्जातेः शक्तत्वनिष्ठन्तदितरावृत्तित्वविशिष्ट[illegible]

तस्मात् सा जातिरेव वाचिका, तादात्म्येनावच्छेदिका चेति ।

ननु सरो रस इत्यादौ तयोर्जात्योः सत्वादर्थभेदबोधो न स्यादित्यत आह—*औपाधिको वेति* ॥ वा त्वर्थे उपाधिरानुपूर्व्वी, सैव जातिविशेषाभिव्यञ्जिकेति भेदः, कारणीभूतज्ञानस्येति नातिप्रसङ्ग इति भावः । उपाधिप्रयुक्तज्ञानवैलक्षण्ये दृष्टान्तमाह—*वर्णानामिति*॥७१॥

ननु जातेः प्रत्येकं वर्णेष्वपि सत्त्वात् प्रत्येकादर्थबोधापत्तिः स्यादित्यत आह—

**अनेकव्यक्त्यभिव्यङ्ग्या जातिः स्फोट इति स्मृता ॥**
**कैश्चित् व्यक्तय एवास्या ध्वनित्वेन प्रकल्पिताः ॥७२॥**

---

दर्पणः

त्वविशिष्टसकलतद्वृत्तित्वरूपतया तत्त्वाऽसम्भवो गौरवादत आह—*तादात्म्येनेति*॥ अभेदेनेत्यर्थः । तथाच नोक्तदोष इति भावः । एतत्तत्त्वमभिहितं प्राक् ॥ *जात्योरिति* ॥ तयोः पदयो रेफाकारसकारविसर्गघटितत्वाविशेषाद्रसत्वविशिष्टोपस्थापकतावच्छेदकसरस्त्वविशिष्टोपस्थापकतावच्छेदकजात्योरेकतरस्या एव सत्ताया विनिगमकाभावात्ततो विलक्षणार्थबोधानुपपत्तिरित्यर्थः । वाशब्दस्य पक्षान्तरपरत्वभ्रमं निराकारोति—*वा त्वर्थं इति* ॥ अवधारणे इत्यर्थः ॥ *भेद इति* ॥ तथाच तत्र वर्णतौल्येऽप्यानुपूर्वी वैलक्षण्येन रसत्वविशिष्टोपस्थापकतावच्छेदकजातेर्निरुक्ताव्यवहितोत्तरत्वसम्बन्धेनर-विशिष्टसत्त्वादिरूपानुपूर्व्या एव व्यञ्जकतया तदभावेन न सरः-पदाद्रसत्वविशिष्टबोधापत्तिः । एवमप्यत्रापीति भावः । मूले तारमन्दवदित्यत्र तारमन्दशब्दौ धर्मपरौ । तथा च यथा वर्णानां नित्यैकत्वमते विजातीयवायुताल्वाद्यभिघातसत्त्वे तारत्वादिना भेदप्रतीतिस्तद्वदित्यर्थः ॥ ७१ ॥

वर्णजातिस्फोटमभिप्रेत्य शङ्कते, सारे-*नन्विति* ॥ *जातेरिति* ॥ अर्थबोधकजातेरित्यर्थः ॥ *प्रत्येकमिति* ॥ पदान्तर्गततत्तद्वर्णेष्वित्यर्थः । एवमग्रेऽपि ॥ *अर्थ-

परीक्षा

वाच्यमिति गौरवमत आह—*तादात्म्येनेति* ।

*जात्योरिति* । भाक्तयोः पदयोः सकाररेफाकारविसर्गघटितत्वाविशेषेणासरत्वोपस्थापकतावच्छेदकजातेः सरस्त्वोपस्थापकताच्छेदकताऽपि स्यादेकस्या एकत्रैव सत्त्वमित्यत्र विनिगमकालाभादिति भावः । वा शब्दस्य पक्षान्तरसूचकत्वमिति भ्रमनिरासायाह—*वा त्वर्थं इति* । एवञ्चैवकारार्थो वाशब्द इति फलितम् । *आनुपूर्वीति* । एवञ्च स्वाव्यवहितोत्तरत्वसम्बन्धेन रविशिष्टसत्वघटितायाश्च सरस्त्वोपस्थापकतावच्छेदकजातिव्यञ्जकतावच्छेदिका च सर इत्यत्र नास्तीति न सरःशब्दाद्रसत्वोपस्थित्यापत्तिरिति भावः । मूले—*तारमन्दशब्दौ*-तारत्वमन्दत्वपरौ । तथा च मीमांसकमते यद्यपि वर्णानान्नित्यैकत्वम्, तथापि विजातीयकर्णवायुसंयोगरूपाभिव्यञ्जकतारतम्येन यथा तारत्वमन्दत्वादिविभिन्नधर्मप्रतीतिसद्भावादित्यर्थः ॥ ७१ ॥

ननु जातेर्वर्णसमुदायवृत्तित्वाद्वर्णसमुदायस्याद्यावयवानतिरेकाज्जातेरव्यासज्यवृत्तित्वस्य स्वभावसिद्धत्वात्प्रत्येकवर्णादर्थबोधापत्तिरित्याशयेन शङ्कते—*नन्वि-

अनेकाभिर्वर्णव्यक्तिभिरभिव्यक्तैव जातिः स्फोट इति स्मृता। योगार्थतया बोधिकेति यावत्। एतेन स्फोटस्य नित्यत्वात्सर्वदार्थबोधापत्तिरित्यपास्तम्।

अयम्भावः—यद्यपि वर्णस्फोटपक्षे उक्तदोषोऽस्ति; तथापि पदवाक्यपक्षयोर्न। तत्र तस्या व्यासज्ज्यवृत्तित्वस्य धर्मिग्राहकमा-

---

दर्पणः

बोधापत्तिरिति* ॥ तदभिव्यञ्जकवर्णसत्त्वादिति भावः ॥ *योगार्थतयेति* ॥ स्फुटत्यर्थोऽस्मादिति वक्ष्यमाणावयवव्युत्पत्त्येत्यर्थः ॥ *एतेनेति*। तत्पदघटकयावद्वर्णाभिव्यक्तजातेर्वाचकत्वाङ्गीकारेणेत्यर्थः। *सर्वदा*। पदाश्रवणेऽपि। *अपास्तमिति* जातेः सनातनत्वेऽप्युक्तस्थले व्यञ्जकासमवधानात्तदभिव्यक्त्यभावेन बोधस्यापादायितुमशक्यत्वादिति भावः ॥

ननु वर्णजातिस्फोटपक्षे पटघटकयावद्वर्णगतजातीनामेवार्थबोधकत्वमुपगन्तव्यम्। तत्र चान्यवर्णगतजातेरन्यवर्णानभिव्यङ्ग्यत्वात्तत्तद्वर्ण एवाभिव्यञ्जको वाच्यः। तथा चोक्तदोषस्तदवस्थ एवेत्यत आह—*अयम्भाव इति* ॥ *उक्तदोष इति* ॥ तथाच दुष्टत्वात् स पक्षो नाश्रयणीय इति भावः॥ *तत्रेति* ॥ पदे वाक्ये च ॥ *तस्याः*—पदत्वादिजातेः ॥ *व्यासज्यवृत्तित्वस्येति* ॥ पर्याप्त्याख्यविलक्षणसम्बन्धेन वृत्तित्वस्येत्यर्थः।

ननु जातेः समवेतत्वस्यैव सार्वत्रिकतया कथमेतस्याः पर्य्याप्तत्वमत आह—*धर्मिग्राहकेति* ॥ धर्मवती जातिस्तद्ग्राहकं मानं पदत्वस्य वा वाक्यत्वस्य वाचकत्वाऽनुपपत्तिस्तत्सिद्धत्वादित्यर्थः। प्रत्येकवर्णविश्रान्तजातेर्वाचकत्वस्योक्तदूषणकवलितत्वेनासम्भवाद्वाचकत्वानुपपत्त्या कल्प्यमाना पदत्वादिजातिर्यदि पुनः प्रत्येकं विश्रान्ता स्यात्; तदा तत्सिद्धिरेव न स्यात् वाचकत्वाऽनुपपत्तेरपरिहारादतस्तत्साधकमेव तत्पर्य्याप्तत्वसाधकमेवं चानेकव्यक्त्यभिव्यङ्ग्येत्यस्यानेकव्यक्तिपर्याप्तेत्यर्थ इति भावः।

परीक्षा

ति*। *प्रत्येकवर्णेषु*। पदान्तर्गततत्तद्वर्णेषु। *वर्णव्यक्तिभिरिति*। आनुपूर्वीविशेषावच्छिन्नवर्णव्यक्तिभिरित्यर्थः। *योगार्थतया*—स्फुटत्यर्थोऽस्मादिति योगार्थतया। *एतेन*। तत्तत्पदघटकयावद्वर्णाभिव्यङ्ग्यत्वविशिष्टजातेर्बोधकत्वस्वीकारेण। *स्फोटस्य*—जातिरूपस्य।

*वर्णस्फोटपक्ष इति*। तस्मिन्पक्षे वर्णगतजातेर्बोधकत्वं वक्तव्यम्, तथा चान्त्यवर्णगतजातेरन्त्यवर्णविषयकप्रतीत्यविषयत्वात्तत्तद्वर्ण एव तत्तज्जातिव्यञ्जकस्तथा चोक्तदोष इति भावः। *तत्र*—पदवाक्ययोः। *तस्याः*—जातेः, व्यासज्यवृत्तित्वस्य पर्याप्तिसम्बन्धेन सत्वं प्रसिद्धम्। व्यासज्यवृत्तित्वन्तु जातेर्नास्ति। तस्या व्यासज्यवृत्तिस्वभावत्वात्। *धर्मिग्राहकमानेति*। धर्मो जातिरूपः पदार्थः, तद्ग्राहकन्तत्साधकं यन्मानम्पदवाक्ययोर्बोधकत्वान्यथानुपपत्तिरूपन्तत्सिद्धत्वादित्यर्थः। एतेन जाते: समवायसम्बन्धेनैव सत्वन्तु पर्याप्त्याख्यस

नसिद्धत्वादिति। कैश्चिद्व्यक्तयो ध्वनय एव ध्वनिवर्णयोर्भेदाभावादित्यभ्युपेयन्त इति शेषार्थः।

उक्तं हि काव्यप्रकाशे—"बुधैर्वैयाकरणैः प्रधानीभूतस्फोटरूपव्यङ्ग्यव्यञ्जकस्य शब्दस्य ध्वनिरिति व्यवहारः कृतः" इति ॥ ७२ ॥

---

दर्पणः

वस्तुतस्तु घटादिप्रत्येकव्यक्त्यैक्ये घट इति सर्वसिद्धप्रतीत्या व्यवहारेण च सिद्ध्यतु घटत्वादेः प्रत्येकमात्रवृत्तित्वम्। न ह्येकवर्णे घटपदादिव्यवहारो, येन पदत्वादेः प्रत्येकवृत्तिता स्यात्; किन्तु पटशब्दे पदं न प्रकार इति वैपरीत्यमिति तादृशजातेः पर्य्याप्तत्वमावश्यकम्। पदत्वं न पर्य्याप्तं जातित्वादित्यनुमानं त्वप्रयोजकमनुकूलतर्काभावादिति विभावनीयम्।

इदं पुनरिहावधेयम्—अनेकव्यक्त्यभिव्यङ्ग्येत्यस्यानुपूर्व्यवच्छिन्नवर्णाभिङ्ग्येत्यर्थः। नाऽतः सरो रस इत्यादौ अर्थभेदबोधाऽनुपपत्तिः। एवञ्च पूर्वोक्तार्थस्यैवाऽयं प्रपञ्चः। आनुपूर्वीवर्णयोर्विशेषणविशेष्यभावव्यत्यासः परं व्यतिरिच्यते। अत एवाऽग्रिमग्रन्थसङ्गतिरिति। व्यज्यतेऽनयेति व्युत्पत्त्या व्यक्तिपदार्थो वर्ण इत्यभिप्रेत्याह—*ध्वनिवर्णयोरिति*। वर्णानां ध्वनिनैयत्यादभेदोपचारोऽत एव पस्पशायां "अथ गौरित्यत्र कः शब्द" इति प्रश्ने "लोके ऽर्थबोधकत्वेन गृहीतो ध्वनिर्वर्णात्मकः समूह" इत्यर्थकम्। "अथवा प्रतीतपदार्थको ध्वनिः शब्द" इत्युक्तमिति भावः। *शेषार्थ इति*। प्रकृतकारिकोत्तरार्द्धार्थ इत्यर्थः। वर्णेषु ध्वनिव्यवहारे सम्मतिमाह—*उक्तं हीति*। *काव्यप्रकाश इति*।

"इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद् ध्वनिर्बुधैः कथितः"।

इति वृत्तिव्याख्यावसर इति शेषः। *स्फोटरूपव्यङ्ग्येति*॥ स्फोटरूपं यद् व्यङ्ग्यं, तद्व्यञ्जकवर्णात्मकशब्दस्येत्यर्थः॥ ७२ ॥

नन्वेतावता प्रबन्धेन पदत्वादेर्जातित्वस्य तद्वाचकत्वस्य च व्यपस्थापनमफलं,

परीक्षा

म्बन्धेनेनाति शङ्काया नावकाशः। यदि सा प्रत्येकं विश्रान्ता स्यात्तदा वाचकत्वानुपपत्तेरपरिहारात्तत्सिद्धिरेव न स्यादिति भावः। नन्वनेकाभिर्वर्णव्यक्तिभिर्व्यङ्ग्या जातिरित्यनुपपन्नम्वर्णव्यक्तीनाञ्जातिव्यञ्जकताया अप्रसिद्धत्वादित्याशङ्कामपनेतुं तत्र प्रामाणिकसम्मतिमाह—*कैश्चिद्व्यक्तय इति*। *अस्याः*—जातेः। आश्रयत्वं षष्ठ्यर्थः। व्यज्यतेऽनया सा व्यक्तिरिति व्युत्पत्त्या व्यक्तिपदवाच्यो वर्ण एवेत्याशयेनाह—*ध्वनिवर्णयोरिति*। *शेषार्थः*—प्रकृतकारिकाया उत्तरार्द्धार्थः। उक्तार्थे काव्यप्रकाशकारसम्मतिमाह—*उक्तं हीति*। *काव्यप्रकाशे*।

इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद् ध्वनिर्बुधैः कथितः।

इति पद्यव्याख्यावसर इति शेषः। *स्फोटव्यङ्ग्यव्यञ्जकस्य*। स्फोटरूपं यद्व्यङ्ग्यन्तद्व्यञ्जकस्य ॥ ७२ ॥

ननु जातेर्वाचकत्वमुक्तन्तदनुपपन्नम्। तादृशजातेरप्रसिद्धत्वादतो जातिं प्रकट-

ननु का सा जातिस्तत्राह—

**सत्यासत्यौ तु यौ भागौ प्रतिभावं व्यवस्थितौ ॥**

**सत्यं यत्तत्र सा जातिरसत्या व्यक्तयो मताः ॥ ७३ ॥**

प्रतिभावं प्रतिपदार्थम् । सत्यांशो जातिः, असत्या व्यक्तयः । तत्तद्व्यक्तिविशिष्टं ब्रह्मैव जातिरिति भावः। उक्तञ्च कैयटेन "असत्योपाध्यवच्छिन्नं ब्रह्मतत्वं द्रव्यशब्दवाच्यमित्यर्थः" इति । "ब्रह्मतत्त्वमेव शब्दस्वरूपतया भाति" इति च ।

---

दर्पणः

पुरुषार्थाऽनुपयोगित्वादित्याशङ्क्य समाधानपरतया मूलमवतारयति-*ननु का सेति* । सा वाचकत्वेनाभिमता जातिः केति योजना । *सत्यांश इति* । सत्यत्वं कालत्रयाबाध्यत्वं, तद्विपरीतमसत्यत्वम् । पर्य्यवसितार्थमाह—*तद्व्यक्तीति* । तद्व्यक्त्युपलक्षितमित्यर्थः । परमार्थब्रह्मणा व्यक्तीनां वैशिष्ट्यासम्भवात् । अत एव जगत्कर्तृत्वादीनां तदुपलक्षणत्वमामनन्तीति बोध्यम् । *जातिरिति* । तद्व्यवहारविषय इत्यर्थः । *असत्योपाधीति* । व्यक्तीनामुपाधित्वं च, वस्तुत एकस्या अपि नानाप्रतीतिजनकत्वं तदवच्छिन्नं तदुपलक्षितमित्यर्थः । *द्रव्यशब्देति* । गवादिशब्देत्यर्थः । गुणगतजातेरनङ्गीकारादथवा द्रव्यात्मको यश्शब्दस्तद्वाच्यमित्यर्थः । मीमांसकैः शब्दस्य द्रव्यत्वोपगमात् । *शब्दस्वरूपतयेति* । श्रुत्यात्मकशब्दरूपतयेत्यर्थः । "द्वे ब्रह्मणी वेदितव्ये" इति श्रुतेः ।

अयमाशयः—"तस्मादेतस्माद्वा आत्मन आकाशः सम्भूत" इत्यादितैत्तिरीयकश्रुतौ ब्रह्मणो जगदुपादानत्वश्रवणादुपादेयस्य चोपादानाभिन्नत्वस्य लोकप्रसिद्धत्वान्नामार्थयोरपि स्वाभिन्नोपादानाभिन्नत्वेन परस्पराभिन्नत्वे सुस्थे पृथक्प्रतीयमानजगतो, "नेह नानास्ति" इति श्रुत्या बाधे दृढे, बाधितार्थप्रतीतेरधिष्ठानसत्तैकनियम्यत्वेनावशिष्यमाणब्रह्मणः सद्रूपस्य साक्षाज्ज्ञातुमशक्यतयोपलक्षणीभूतरूपनामनिरूप-

परीक्षा

यति—*सत्यासत्याविति* । *सत्यम्* = कालत्रयाबाध्यम् । तद्विपरीतमसत्यम् ।

ननु जीवे ब्रह्मात्मकत्वे तस्यैकत्वात्पटेऽपि घटत्वव्यवहारापत्तिरतः पर्यवसितार्थमाह-*तत्तद्व्यक्तीति* । *विशिष्टम्*-उपलक्षितम्।जगत्कर्त्तृत्वादिकमप्युपलक्षित एव। जातिः जातिपदव्यवहार्यः । व्यक्तीनामुपाधित्वञ्च-यथा जपाकुसुमसन्निधाने लोहितः स्फटिक इति व्यवहाराज्जपाकुसुमे उपस्वसमीपवर्त्तिनि स्वनिष्ठं धर्ममादधातीत्युपाधिरिति व्युत्पत्या स्वसमीपवर्त्तिविशेष्यकस्वनिष्ठधर्मप्रकारकप्रतीतिजनके उपाधिव्यवहारस्तथा व्यक्तीनान्नानात्वात्तदुपश्लेषेण वस्तुत एकस्यापि ब्रह्मणो नानात्वप्रकारकप्रतिभासजनकत्वेन द्रव्यशब्देति द्रव्यप्रतिपादकघटपटादिशब्देत्यर्थः । यद्वा—द्रव्यात्मको यः शब्दस्तद्वाच्यमित्यर्थः । तेन गुणादिगतजातेरपि सङ्ग्रहः । मीमांसकमते—शब्दस्य द्रव्यरूपत्वात् ।*शब्दरूपतया*-वाचकशब्दरूपतया वेदात्मकशब्दरूपतया च।

अयम्भावः-द्वयोरपि वाच्यवाचकयोरुपाध्युपलक्षितब्रह्माभिन्नतया शास्त्रस्य चास्य वाच्यवाचकज्ञानाय प्रवृत्तेः "नेह नास्ति" इतिवाक्यसहायेन वस्तुमत्योपाधिव्यवच्छेदे

कथं तर्हि, 'ब्रह्मदर्शने च गोत्वादिजातेरप्यसत्त्वादनित्यत्वं "आत्मैवेदं सर्वम्" इति श्रुतिवचनात्' इति कैयटः सङ्गच्छताम्। अविद्या आविद्यको धर्मविशेषो वेति पक्षान्तरमादायेति द्रष्टव्यम् ॥ ७३ ॥

तमेव सत्यांशं स्पष्टयति—

**इत्थं निष्कृष्यमाणं यच्छब्दतत्त्वं निरञ्जनम् ॥**
**ब्रह्मैवेत्यक्षरं प्राहुस्तस्मै पूर्णात्मने नमः ॥ ७४ ॥**

---

दर्पणः

णद्वारा तज्ज्ञानाय शास्त्रस्योपयोग इति। *कथमिति*। सङ्गच्छतामित्यनेनान्वितम्। पूर्वापरविरोधादिति भावः। मिथ्याज्ञानरूपायास्तज्जन्यसंस्काररूपाया जातित्वासम्भवादाह—*आविद्यक इति*। अविद्याकल्पित इत्यर्थः। *धर्मविशेष इति*। अत्राऽवृत्तिवारणाय—*धर्मेति*। तद्व्यक्तित्वादिवारणाय—*विशेषेति*। तथाच मतभेदेनाऽर्थद्वयस्याप्याकरस्थितत्वान्न पूर्वापरविरोध इति भावः।

वस्तुतस्तु गवाद्युपाध्यवच्छिन्नसत्तात्वमेव गोत्वादिव्यवहारनियामकमद्वैतदर्शने च गवादेरवच्छेदकस्याभावान्न सत्ताया विशिष्टसत्तात्वं, तदानीं निर्द्धर्मत्वेनैवावस्थानादित्यर्थपरतयाऽपि विरोधः सुपरिहर इति बोध्यम् ॥ ७३ ॥

यद्यप्यविशेषेण वाक्यविषयेऽखण्डवाक्यतज्जातिरूपस्फोटद्वयमुक्तं, तथापि नादात्मकस्फोटकल्पे शास्त्रस्य पुरुषार्थे परम्परयोपयोगित्वमन्तिमकल्पे तु साक्षादेवेति तस्यैव मुख्यत्वमित्याशयेन मूलमवतारयति—*तमेवेति*। "अयमात्मा" "तत्सत्यम्" इत्यादिश्रुतिसिद्धं यत्सत्यं तत्र सा जातिरित्यनेनोक्तमेवेत्यर्थः। मूले, *इत्थमिति*। पूर्वोक्तप्रकारेण अध्यस्तवाचकत्वेभ्यः प्रकृत्यादिभ्यः पृथक्क्रियमाणम्। अत एव-*निरञ्जनम्*। उपाधिविनिर्मुक्तम्। अत एवाक्षरमविनाशि।

"यस्तु सर्वेषु भूतेषु नश्यत्सु न विनश्यति।"

इति स्मृतेः। सोपाधिकस्यैव विनाशप्रतियोगित्वात्। शब्दतत्त्वं, शब्दपदं रूपस्याप्युपलक्षणम्। तेन, नामरूपोपादानं यत्तद् ब्रह्मवेति विशेषणसङ्गतैवकारेण ब्रह्मतादात्म्याऽभावरूपे विशेषणाऽयोगव्यवच्छेदे शब्दतत्त्वरूपान्वयितावच्छेदकव्यापकत्वं बोध्यते। *प्राहुः*। प्रकर्षेण कथयन्ति। ब्रह्माऽभेदेन जानन्तीति यावदिति तदर्थः।

परीक्षा

सिद्धेऽस्माच्छास्त्राद् ब्रह्मज्ञानम्भवतीति। *कथन्तर्हीति*। सङ्गच्छतामित्यनेनान्वितम्। पूर्वापरविरोधादिति शेषः।

नन्वविद्या मिथ्याज्ञानरूपा तज्जन्यसंस्काररूपा वा तत्स्थाजातित्वन्न सम्भवति तस्याः, अतः वर्णधर्मत्वेन घटादिधर्मत्वासम्भवात्, अत आह—*आविद्यक इति*। अविद्याकल्पित इत्यर्थः। धर्मविशेष इत्युपादानेनावृत्तित्वशङ्काया घटपटादिसाधारण्यस्य च निरासः ॥ ७३ ॥

यद्यपि पूर्वत्राखण्डवाक्यस्फोटस्य प्रदर्शनसमये शास्त्रस्य पुरुषार्थसाधनत्वन्दर्शितमेव, तथापि तस्मिन्पक्षे परम्परया शास्त्रस्य तत्त्वम्। जातिस्फोटपक्षे तु साक्षादेव तथेत्यादिवेदयितुम्मूलमवतारयति-*तमेवेति*। "अयमात्मा, तत्सत्यम्"इत्यादिश्रुतिप्रतिपादितमित्यर्थः। *इत्थम्*-पूर्वोक्तिभिः, *निष्कृष्यमाणम्*-वाचकत्वेनाध्यस्तेभ्यः पृथक् क्रियमाणम्। *निरञ्जनम्*-उपाधिविनिर्मुक्तम्। अत एवाक्षरम्*—अविनाशि।

अयम्भावः—"नामरूपे व्याकरवाणि" इति श्रुतिसिद्धा द्वयी सृष्टिः। तत्र रूपस्येव नाम्नोऽपि तदेव तत्त्वम्। प्रक्रियांशस्त्वविद्याविजृम्भणमात्रम्।

उक्तञ्च वाक्यपदीये—

शास्त्रेषु प्रक्रियाभेदैरविद्यैवोपवर्ण्यते।

---

दर्पणः

तत्र शब्दोपादानत्वस्य तन्त्रान्तरे गगनादौ प्रसिद्धेः कथं ब्रह्मणस्तदुपादानत्वमित्याशङ्कायामाह—*अयम्भाव इत्यादि*। *नामरूपेति*। "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" इति श्रुतिसिद्धेत्यर्थः। *द्वयीति*। नामरूपात्मकद्व्यवयवसमूहरुपेत्यर्थः। *तत्रेति*। सृष्टिद्वयमध्ये। *रूपस्येवेति*। आकाशाद्यात्मकार्थस्येवेत्यर्थः। *नाम्न इति*॥ तद्वाचकशब्दस्यापीत्यर्थः। *तदेव*-ब्रह्मैव। तत्त्वमुपादानमित्यर्थः। "तस्मादेतस्माद्वा आत्मन" इत्यादिश्रुतेः। शब्दतन्मात्राकाशोपादानत्वे पर्य्यवसानाद्द्वयोरप्युपादानं ब्रह्मैव। अत एव तयोः परस्परमभेदसिद्धिः। स्वोपादानब्रह्माभिन्नत्वात्। न च ब्रह्मणो जगदुपादानत्वे विकारित्वाऽऽपत्तिः। जगदेतद्विवर्त्तते' इति वदता मूलकृतैव समाहितत्वात्। तथाच व्यावहारिकप्रातिभासिकपदार्थनिरासेन श्रुत्या ब्रह्मैव परिशेषीक्रियते इति प्रागुक्त एवाऽर्थः।

ननु नानात्वस्य सर्वथैव मिथ्यात्वे कथं स प्रत्ययो लोकानामत आह—*प्रक्रियांशस्त्विति*। प्रकृतिप्रत्ययपञ्चकोशादिव्यवहारांशस्त्वित्यर्थः। *अविद्येति*। मलिनसत्त्वाज्ञानविलास एवेत्यर्थः। तथाच ब्रह्माऽतिरिक्तत्वेनाऽसत्यानामपि तेषां पार्थक्येन प्रतीतिरधिष्ठानाऽज्ञानकृतैवेति। न यावदधिष्ठानाज्ञानं तावत् तन्निवृत्तिरिति भावः। यद्वा ननु तादृशब्रह्मज्ञाने कथं शास्त्राणामुपयोगोऽत आह—*प्रक्रियांश इति*। प्रकृतिप्रत्ययादिव्युत्पादनं त्वित्यर्थः॥ *अविद्येति*। तथाच पञ्चकोशादिन्यायेन शास्त्राणामुपयोगो, न तु तज्ज्ञाने साक्षादुपयोग इति भावः। *अविद्यैवोपवर्ण्यते इति*। वाक्यपदीयाऽनन्तरम्—

उपायाः शिक्ष्यमाणानां बालामुपलालनाः।
असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते॥

इति श्लोकः। "समारम्भात्तु भावनामित्यस्य" पूर्वार्द्धन्तु—

परीक्षा

एतादृशं यत्तद् ब्रह्म। "सर्वेषु भूतेषु नश्यत्सु न नश्यति"इति स्मृतेः। *शब्दतत्त्वमिति*। अत्र शब्दपदं रूपस्याप्युपलक्षणम्। *द्वयी*-नामरूपात्मिका। *तदेव* ब्रह्मैवेति। *तत्त्वम्* उपादानम्। तदुक्तं श्रुतौ-"अनेन जीवेनानुप्रविश्य नामरूपे व्याकरवाणि" इति। सृष्टेर्द्वयोरूपत्वन्त्ववयवकसमुदायरूपतया। "सृष्टेर्ब्रह्मण एव सम्भवश्च" "तस्मादेद्वाऽऽत्मन आकाशः सम्भूत आकाशाद्वायुः"इति श्रुतावपि प्रसिद्धम्।

ननु ब्रह्मण एव नामरूपसृष्ट्युपादानत्वञ्चेदुपादानोपादेययोस्तादात्म्याद् ब्रह्मणोऽपि नानात्वमेव सिद्धम्, तथा च कथं सत्यत्वमत आह-*प्रक्रियांशस्त्विति*। प्रकृतिप्रत्ययादिकथनञ्च कोशादिव्युत्पादनमाकाशादिसृष्ट्युपादानत्वस्य च प्रतिपादनांशस्त्वित्यर्थः। *अविद्याविजृम्भणम्*। मलिनसत्वाविद्यानामज्ञानविलास एवेत्यर्थः।

अत्र हरिसम्मतिमाह—*उक्तञ्चेति*। अत्र पूर्वार्द्धमस्यानोक्तम्। उत्तरार्द्धस्य

समारम्भात्तु भावानामनादि ब्रह्म शाश्वतम् ॥ इति ॥

ब्रह्मैवेत्यनेन, "अत्रायं पुरुषः स्वयं ज्योतिः, "तमेव भान्तमनुभाति सर्व्वम्" "तस्य भासा सर्वमिदं विभाति" इति श्रुतिसिद्धं स्वपरप्रकाशत्वं सूचयन् स्फुटत्यर्थोऽस्मादिति स्फोट इति यौगिकस्फोटशब्दाभिधेयत्वं सूचयति। निर्विघ्नप्रचारायान्ते मङ्गलं स्तुतिनति-

दर्पणः

घटादिदर्शनाल्लोकः परिछिन्नोऽवसीयते ॥ इति ॥

तदर्थस्तु यथा घटादिकं दृष्ट्वा लोको विश्वप्रपञ्चः परिच्छिन्नः किञ्चिन्निष्ठकारणतानिरूपककार्य्यतावत्त्वेनानुमीयते, एवं भावानामाकाशादीनाम्। *समारम्भादिति*। सम्यगारम्भो जननं यस्मात्। भावप्रधानश्च निर्देशः। तदुत्पत्तिहेतुत्वादित्यक्षरार्थः। भावोपादानत्वादिति यावत्। तादात्म्येन वा हेतुः। *समारम्भादिति*। शाश्वतं नित्यमपि ब्रह्म आदिमत्सकारणमिवाऽवसीयत इत्यनुषज्ज्यते। परिणाम्युपादानत्वे तस्मिन्नभ्युपगम्यमाने विकारित्वप्रसङ्गशङ्का। वस्तुतो न तत्प्रसक्तिर्विवर्त्तोपादानताया एवाङ्गीकाराद्रज्ज्वादौ प्रातिभासिकभुजङ्गस्येवेति भावः। "अनादि ब्रह्म शाश्वतम्" इति पाठस्त्वन्यतरविशेषणोपादानवैयर्थ्यापत्त्या नादरणीयः।

ननु नादेऽपि ब्रह्मव्यपदेशस्य प्रायशो दर्शनात् पुरुषार्थानुपयोगितदभेदज्ञानसम्पादनवैयर्थ्यमत आह—*ब्रह्मैवेति*। तथाच प्रकृते ब्रह्मपदस्य स्वप्रकाशरूपब्रह्मपरत्वान्नोक्तानुपपत्तिरिति भावः। "तमेव भान्तम्" इत्यस्य—

"न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः" इति पूर्वार्द्धम्। श्रुतीत्युपलक्षणम्—

यदादित्यगतं तेजो जगद्भासयतेऽखिलम्।

इत्यादिस्मृतेरपि। *स्वपरप्रकाशकत्वमिति*। तत्र परप्रकाशकत्वे मानमुक्तम्। स्वप्रकाशकत्वं च स्वभिन्नाप्रकाश्यत्वे सति प्रकाश्यत्वम् स्वात्मकनित्यज्ञानविषयत्वमिति यावत्। "नित्यं विज्ञानमानन्दं ब्रह्म" इति श्रुत्या ब्रह्मणो नित्यज्ञानानन्दस्वरूपत्वप्रतिपादनात् प्रकृतश्रुतिः।

स्वयमेवात्मनाऽऽत्मानं वेत्सि त्वं पुरुषोत्तम।

इति स्मृतिश्च स्वप्रकाशत्वे, पराप्रकाश्यत्वे च "न तद्भासयते सूर्य्यः" इत्यादि स्मृतिश्च मानमधिकमन्यत्राऽनुसन्धेयम्। *सूचयतीति*। स्फोटस्वप्रकाशपदयोः पर्य्यायत्वं बोधयतीत्यर्थः। तथाच जातिस्फोटवादिमते उपाधिनिरासद्वारा शब्दब्रह्मणः स्वप्रका-

परीक्षा

पूर्वार्द्धन्तु—

घटादिदर्शनाल्लोकः परिच्छिन्नोऽवसीयत। इति।

यथा घटादिदर्शनाल्लोको विश्वप्रपञ्चः परिच्छिन्नः किञ्चित्कारणन्तद् व्यवसीयते। तथा भावानामाकाशादीनां समारम्भः सम्यगारम्भः प्रकाशो यस्मादिति व्युत्पत्या प्रकाशोपादानमनादित्वम्ब्रह्मैवेत्यर्थः। अनादीत्यनेन—प्रागभावाप्रतियोगित्वम्, शाश्वतमित्यनेन—ध्वंसाप्रतियोगित्वमुक्तम्।

ननु नादेऽपि ब्रह्मपदव्यवहारात्कथमस्य शास्त्रस्य ब्रह्मणः अनादित्वप्रतिपादकतेत्यत आह—*ब्रह्मैवेत्यनेनेति*। स्वयं ज्योतिः पराप्रकाश्यः। *निर्विघ्नप्रचाराय*—अप्रति-

रूपमाह—*पूर्णात्मने इत्यादिना* ॥ ७४ ॥

अशेषफलदातारमपि सर्वेश्वरं गुरुम् ॥
श्रीमद्भूषणसारेण भूषये शेषभूषणम् ॥ १ ॥
भट्टोजिदीक्षितैः श्रेष्ठैर्निर्म्मिताः कारिकाः शुभाः ॥
कौण्डभट्टेन व्याख्याताः कारिकारताः सुविस्तरम् ॥ २ ॥

इति श्रीमत्पदवाक्यप्रमाणपारावारीणधुरीणरङ्गोजिभट्टाऽऽत्मज-
कौण्डभट्टकृते वैयाकरणभूषणसारे स्फोटवादः ॥
समाप्तोऽयं ग्रन्थश्च ।

---

दर्पणः

शत्वरूपेण पुरुषार्थोपयोगिनि ज्ञाने व्याकरणस्योपयोग इति सिद्धम् । नादस्फोटवादिमते यथोपयोगस्तथोपपादितं प्राक् । *निर्विघ्नेति* । अप्रतिबद्धस्वग्रन्थप्रचारार्थमित्यर्थः ॥ *अन्ते* । ग्रन्थावसाने । *मङ्गलमिति* ॥ नत्यात्मकं तदित्यर्थः । "मङ्गलादीनि मङ्गलान्तानि मङ्गलमध्यानि च शास्त्राणि प्रथन्ते" इति भाष्यकारोक्तश्रुतेरिति भावः । पूर्णत्वमखण्डानन्दत्वमप्रतिहतेच्छत्वं वा तेन रूपेण तन्नतिश्च स्वीयग्रन्थप्रचारेच्छाविषयसिद्धय इति बोध्यम् ॥ ७४ ॥

ज्ञात्वा श्रीफणिवाक्यजालमतुलं नैयायिकोक्तीरपि
मीमांसानयमाकलय्य च मया सम्यक्कृते दर्प्पणे ॥
अस्मिन् भूषणसारतां बुधजनः सोत्कण्ठमालोकतां
यन्निश्वासमलीमसो न मुकुरस्तत्त्वार्थबोधक्षमः ॥ १ ॥
आसीत् कूर्मगिरौ धरासुरवरः श्रीवल्लभः कोविदो
वेदान्तेषु विनोदमञ्जरिरिति ख्याताऽस्ति यन्निर्मितिः ॥
तत्सूनुर्हरिवल्लभः समकरोत्सद्युक्तिमण्युज्ज्वलं
श्रीमद्भूषणसारदर्प्पणमिमम्मोदाय विद्यावताम् ॥ २ ॥
उत्प्रेक्षितार्थो हि न मोदहेतवेऽभ्यस्तो भृशं सोऽपि बुधां तथैव ॥
इत्याकलय्योभयमत्र युक्तिप्रमाणसिद्धं समुदाहृतं मया ॥ ३ ॥
सर्वोऽप्यर्थो बुधैः स्पृष्टो यद्यपीह तथापि मे ।
सत्सन्दर्भांशवितता ममता केन वार्य्यते ॥ ४ ॥

इति श्रीमत्कूर्माचलाभिजनोत्प्रभातीयोपनामकश्रीवल्लभाऽऽत्मजहरिवल्लभविरचिते भूषणसारदर्प्पणे स्फोटवादः समाप्तः ॥

परीक्षा

बद्धप्रचाराय । स्तुतिरूपत्वम्पूर्णत्वकथनेन । तत्वञ्चाखण्डानन्दरूपत्वम् । *नम इति* नतिरूपमङ्गलाय ॥ ७४ ॥

इति स्फोटविवरणम् ।

इति श्रीमदगस्त्यकुलवंशावतंसदिगन्तविख्यातकीर्तिसुधाकरसङ्ख्यावत्सावंभौमभवदेवमिश्रात्मजभैरवनाथमिश्रविरचिता परीक्षानामिका वैयाकरणभूषणसारटीका समाप्ता । शुभमस्तु ।

श्रीरामाय नमः ।

## श्रीमद्दुर्बलाचार्यापरनामकृष्णमित्रकृत—

# भूषणसारव्याख्यायाम्-

## धात्वर्थनिर्णयः ।

पश्वा प्रतिपदं नित्यमखण्डं वाच्यवाचकम् ।
जगतां प्रकृतिः स्फोटः पदमन्यत्प्रकल्पितम् ॥ १॥

*श्रीलक्ष्मीति । रूपिणमिति* । ताच्छील्ये णिनिः । "रसादिभ्यश्च" इति मतुब्विधानस्यान्यमत्वर्थीयनिवृत्त्यर्थत्वात् । लक्ष्मीरमणस्य स्फोटरूपत्वोक्तिः स्वशास्त्रतत्त्वसूचनाय । यतः स्फोटरूपात्सर्वं जगद्विवर्त्ताकारं भवति । तदुक्तं हरिणा—

अनादिनिधनं ब्रह्म शब्दतत्वं यदक्षरम् ।
विवर्त्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥ इति ।

अत्र परावाक् स्फोटशब्देनोच्यते, सैव शब्दब्रह्मेत्युच्यते । शब्दतत्त्वं शब्दस्य पारमार्थिकं स्वरूपं स्फोटस्यैव मुख्यशब्दतया तस्य च ब्रह्मात्मकत्वात् । अक्षरनिमित्तत्वादक्षरं शब्दब्रह्मैव । तत्तत्पदार्थरूपेण विवर्त्तते, यथा रज्जुः स्वयमविकृतव सती मायया सर्पाकारेण विवर्त्तते । तत्वादप्रच्युतमेकं ब्रह्म–असत्त्यानेकरूपतां प्राप्नोति । यतः शब्दस्वरूपाज्जगद्रूपा विकाराः क्रियन्ते इति तदर्थः । तात्विकोऽन्यथाभावः परिणामः । अतात्विकोऽन्यथाभावो विवर्त्तः । *तीरम्*–नौकाम् । *शेपेति* । शेपसम्बन्धिनो शेषस्यार्थस्य लाभार्थमित्यर्थः । *द्वैतेति* । द्वैतवाद एव ध्वान्तं–तमः, तन्निवारणमेव फलं यस्याः । पुंसो भावो यस्यां तादृशीं, वाग्देवतां सरस्वत्येव पुरुषवेषं धृतवतीति भावः । द्वैतस्य ध्वान्तस्वं तु अविद्यायां सत्यामेव । द्वैतबुद्धेः 'एकमेवाद्वितीयं ब्रह्म' इत्यादिश्रुत्या अद्वैतस्यैव तात्त्विकत्त्वात् । *ढुण्ढिमिति* । प्रणम्येत्यत्रान्वयः । *श्रीफणीति* । फणिनः स्मरणं तु प्रकृतशास्त्रनिर्मातृत्वेनाभ्यर्हितत्वात् । अस्माभिः–भट्टोजिदीक्षितैः । एतेन भट्टोजिदीक्षितकृता एताः कारिका इति सूचितम् ।

अस्य ग्रन्थस्य कारिकारूपस्य वाक्ये क्रियायाः प्राधान्यात् क्रियावाचकस्य धातोरर्थं प्रथमतो निरूपयति—*फलव्यापारयोरिति* । दण्डादिव्यापारस्य धात्वर्थत्ववारणायाह—*व्यापारस्त्विवति* ।

ननु यथा किं करोति इति प्रश्ने पचतीत्युत्तरं भवति । एवमस्तीत्युत्तराभावादस्त्यादीनां क्रियावाचकत्वं न स्यादत आह–*यावत्सिद्धमिति* । अयम्भावः–क्रमपौर्वापर्यमाश्रित्य साध्यत्वेन विवक्षितोऽर्थः । क्रिया–घटः क्रियते इत्यत्रापि क्रियाद्वारैव घटस्य साध्यत्वं प्रतीयते, घट इत्येतावन्मात्रात्साध्यत्वाप्रतीतेः । एवञ्चैतदेव क्रियावाचकत्वमस्त्यादावप्यस्तीति । *सिद्धमसिद्धम्वेति* । सिद्धमपाक्षीदित्यादौ । असिद्धं पचति पक्ष्यतीत्यादौ ।

ननु क्रियते या सा क्रिया । न च समुदायः कर्तुं शक्यते इत्यत आह–*आश्रितेति* आश्रितः क्रमरूपो यया तथा चाऽवयवानामुत्पाद्यत्वात्तद्वारकं समुदायस्योत्पा-

घत्वमिति भावः । *पचति पाक इति* । पाक इत्यत्र क्रियान्तराकाङ्क्षाऽस्ति, नतु पचतीत्यत्रेत्यर्थः । *तथा चेति* । क्रियान्तराकाङ्क्षाया अनुत्थापिका पचतिशब्दोपात्ताक्रिया अनुत्थापकतावच्छेदकं रूपं पचत्यादिशब्दः, तद्वत्वं तच्छब्दबोध्यक्रियायामस्तीति लक्षणसङ्गतिः । क्रियान्तराकाङ्क्षानुत्थापकरूपवत्वमिति तु नोक्तम् । पचतीति शब्दस्य क्रियात्वाभावेन स्वक्रियाभिन्नक्रियात्वरूपक्रियान्तरत्वासम्भवात् । *तद्रूपवत्वमिति* । इदमेवासत्वभूतत्वमित्यर्थः । अन्यथा सङ्ख्याकारकाद्यनन्वयित्वमसत्वभूतत्वमित्युक्तौ 'पश्य मृगो धावति' इत्यादौ कारकान्वयित्वदर्शनात् । 'हतशायिका शय्यन्ते' इत्यादौ सङ्ख्यान्वयित्वदर्शनाच्चाव्याप्तिरिति भावः । *एतदेव = एतादृशासत्वभूतत्वमेव । *तिङ्पदैरिति* । यद्यपि क्रियाप्रधानं यत्तदाख्यातमिति निरुक्तभाष्यकारादिमते एधितव्यमित्यादीनामसत्वरूपमाख्यातत्वमेव । तथापि एधितव्यमित्यत्रापि अस्ति भविष्यतीत्यादिक्रियासम्बन्धस्य सम्भवात् क्रियान्तराकाङ्क्षेत्याद्यसत्वभूतो भावः तिङ्पदैरेवोच्यते, इत्यत्र न विवाद इति भावः । वर्जनादिक्रियावाचिनामपि हिरुगादीनां क्रियान्तराकाङ्क्षादर्शनात् न साध्यक्रियाभिधायित्वम् । क्रियाप्रधानत्वव्यवहारस्तु क्रियामात्रविशेषणत्वात् ।

ननु व्यापारसामान्यं प्रति धातुसामान्यस्य वाचकत्वे सर्वत्र सकलव्यापारबोधापत्तिरत आह–*अयं चेति* । *बुद्धिविशेषादीनामिति* । फूत्कारादीनामनन्तत्वात्फूत्कारत्वादिकं शक्यतावच्छेदकम् । फूत्कारत्वादीनामप्यननुगमको बुद्धिविशेष एव सर्वत्र व्यापार इति बुद्धेरेकत्वादिति भावः ।

ननु एका क्रियेति व्यवहारः कथमत आह–*गुणभूतैरिति* । क्रमोत्पन्नानां व्यापाराणां समूहः क्रिया । स च समूहः गुणभूतैः स्वावयवीभूतैः फूत्कारादिव्यापारैर्युक्तः ।

ननु क्षणनश्वराणां व्यापाराणां समुदायोऽसम्भवीत्यत आह–*बुद्ध्येति* । एकत्वबुद्ध्या प्रकल्पितो भेदरूपः समूह इत्यर्थः । क्रमिकाणां व्यापाराणां समूहे बुद्धिपरिकल्पितमेकत्वमाश्रित्य एकत्वव्यवहार इति भावः ।

तार्किकमते स्वरूपसम्बन्धविशेषस्याश्रयत्वस्याश्रयरूपतया नानात्वादत आह–*तत्तच्छक्तिरूपमिति* । अखण्डधर्मरूपमित्यर्थः । सप्तैव पदार्था इति वैशेषिकपरिभाषामूरीकृत्याश्रयत्वस्याश्रयस्वरूपत्वस्वीकारे स्वस्यैव धर्मत्वं धर्मित्वं चेत्यनुभवविरुद्धम् । तार्किकैरपि विषयत्वप्रतियोगित्वादीनामतिरिक्तत्वस्वीकारेण सप्तैवेति नियमाभावाच्च । अस्तु वा आश्रयत्वं जातिः, यथा एकस्मिन् घटे नष्टे घटान्तरे घटत्वमवतिष्ठते । व्यक्त्यन्तरे आश्रयत्वस्यावस्थानसम्भवात् । जननेन यत् प्राप्यते या सा जातिरिति भाष्यमते जातेर्नित्यत्वमिति नियमाभावाच्च । किञ्चाकृतिरेव शब्दार्थ इति मते अभावत्वगगनत्वादिकमपि जातिरेव । यथा घटत्वजातिरनेकघटदर्शनादेव बालैर्निश्चीयते । एवमाश्रयत्वेऽपि अनयोः कर्तृकर्मणोः प्रतीतेः सम्भवादित्यत्रान्वयः । *आक्षेपादिति* । कर्त्रादिकमन्तरा व्यापाराद्यसम्भवात् ।

ननु शाब्दिकमते आदेशानामेव वाचकतया लकाराणां कथं वाचकतेत्यत आह—*बोधकतारूपमिति* । तत्तत्स्थानित्वेन तिबादिस्थानित्वेन तार्किकमतं शङ्कते–*नचेति* । *अयोगादिति* । कृतेरपि व्यापारविशेषत्वादिति भावः । *अथेति* । मण्डनमिश्रमते फलमात्रं धात्वर्थः, भावनाऽऽख्यातार्थः । आख्यातार्थभावनाश्रयत्वादेव कर्त्तृत्वम् । *कृतामपीति* । तत्रापि कर्त्रादिपदस्य कर्त्तृत्वादिपरत्वापत्तौ व्यापारवाचकत्वापत्तेरिति भावः । ननु तत्र "कर्त्तरि कृत्" इति सूत्रे भाष्यमत आह*–लः कर्मणी-

त्यनेनेति* । तत एव कर्त्रादिपदस्यानुवृत्तेरिति भावः । अलब्धलाभो योगः, लब्धस्य परिपालनं क्षेमः ।

ननु पाचको देवदत्त इत्यदिसामानाधिकरण्यानुरोधात् कृतां कर्त्तृवाचकत्वमित्यारुचेराह–*अपिचेति* । यत्नार्थकत्ववादिनो नैयायिकान्निराकृत्य मीमांसकमतं दूषयति—*मीमांसकानामिति* । *कृदादिवदिति* । यथा कृदादौ भावनाऽक्षिप्यते, तथेहास्त्विति भावः । तथासति आक्षेपलभ्यत्वे सति न स्यादिति प्रत्ययार्थत्वाभावादित्यर्थः । *आक्षिप्तव्यक्तेरिति* । जातिशक्तिवादिनामाक्षेपेण व्यक्तेर्बोधात् । *कर्त्तुरपीति* । पचतीत्यस्य पाचक इति विवरणात् ततः विवरणम् ।

नन्वेवं सर्वत्र विवरणस्य शक्तिग्राहकत्वोच्छेद इत्यरुचेराह–*किञ्चेति* । *अभेदान्वयेति* । अन्यथान्यस्मिन्नपि पचति देवदत्तः पचतीति प्रयोगापत्तेरिति भावः । *तच्चात्र नास्तीति* । कर्त्तृवाचकत्वसाधकं सामानाधिकरण्यं नास्तीत्यर्थः। *इत्यादावपीति* । तस्मान्नामार्थधात्वर्थयोर्नामार्थयोश्च साक्षादभेदातिक्तसम्बन्धेनान्वयो नास्तीत्येव परेषां नियम इति भावः। *पिङ्गाक्ष्यादीति* । पिङ्गे अक्षिणी यस्या इति षष्ठ्यन्तेन विग्रहे "अनेकमन्यपदार्थे" इत्यनेन षष्ठ्यर्थसमासविधानात्पिङ्गाक्षिसम्बन्धि इत्येवार्थः स्यादतो गवादिसामानाधिकरण्यानुरोधात्सम्बन्धाक्षिप्तसम्बन्धिसमासार्थसिद्धान्तासङ्गतिः । आक्षेपितं सम्बन्धिनमादायैव सामानाधिकरण्यसम्भवादिति भावः । *षष्ठ्यर्थ एवेति* । अन्यपदार्थ इत्यत्र पदं सुप्तिङन्तम् । पदे च प्रत्ययार्थस्य प्राधान्यादन्यविभक्त्यर्थ इति लभ्यते इति भावः । *द्रव्यानुक्तेरिति*। एतच्च । उच्छेदापत्तिरित्यत्र हेतुः । *अरुण्यस्येति* । तन्मते जातिरेव शब्दार्थत्वात्स्ववाक्योपात्तद्रव्ये गवि उक्तरीत्या आक्षेपेण इदं तिङो वाचकत्वाभिधानम् । *फलं प्रतीति* । एतच्च कर्त्तृप्रत्ययस्थले । पक्व इत्यादौ तु व्यापारं प्रति फलस्यैव प्राधान्यम् । एतदर्थमेव फलव्यापारयोः पृथक् शक्तिरुक्ता, नतु फलावच्छिन्ने व्यापारे । *कर्त्तरीति* । विशेषणमित्यनुषज्यते । *समानप्रत्ययोपात्तत्वादिति* । एतेन शब्दान्तरानुसन्धानप्रयुक्तलाघवं दर्शितम् । *तथाचेति* । कर्त्राद्युपस्थितिर्विषयतया कर्त्रादौ, तत्र प्रकारतया संख्याबोधः । *इतराविशेषणत्वेति* । इवार्थसादृश्ये चन्द्रस्य विशेषणत्वान्न तत्र संख्यान्वयः । *इदमपि*–कार्यकारणभावलाघवमपि। *तच्च*–धातोरिति पदं च । *तत्रैव* = व्यापारे एव । *तदन्वयः* = कालान्वयः । *कर्त्तृकर्मणोरेवेति* । समानप्रत्ययोपात्तत्वादिति भावः । *प्रयोगापत्तिरिति* । फलरूपव्यापारस्य वर्त्तमानत्वादिति भावः । वचनविरोधमुक्त्वा युक्तिविरोधमप्याह—*अपिचेति* । तमित्यादि कर्माध्याहारे दोषमाह–*भाष्यसिद्धेति* । भाष्यसिद्धलौकिकैकवाक्यतेत्यर्थः । "एकतिङ् वाक्यम्" इति वार्त्तिकं तु निघातमात्रविषयकमिति भावः । यद्यपि तिङतद्वये एकवाक्यताभावादेव निघाताप्राप्तावतिङ्ग्रहणं व्यर्थमित्युक्तं भाष्ये, तथापि पचतिभवतीत्यत्र पाको भवतीत्यर्थादेकवाक्यता भाष्ये एव स्वीकृतेति भावः । किञ्च भिन्नवाक्यतां स्वीकृत्य निर्वाहेऽपि अध्याहारस्यासार्वत्रिकतयाऽपाक्षीद् देवदत्तोऽवेहीत्यत्र कदाचित् द्वितीयापि स्यादिति बोध्यम् । वाक्यार्थस्य कर्मत्वान्न द्वितीयेति असम्भवदुक्तिकत्वादन्यत्र निराकृतम् । अध्याहारे युक्तिविरोधमप्याह—*उत्कटेति* । 'पश्य देवदत्तो गायति' इत्यादावस्मन्मते अध्याहारादिना निर्वाहः संभवति । तार्किकाणां तु शृणु देवदत्तो गायतीत्यादावगतिरेव । फले कर्तर्यन्वयवारणायाह–*भावनात्वावच्छिन्नेत्यादि* ।

ननु नाशरूपव्यापारस्य नित्यत्वात्सर्वदा नश्यतीति प्रयोगापत्तिरत आह-*घटो नश्यतीत्यत्रापीति* । ननु नाशसामग्री नाशोत्पादको व्यापारः, तस्य घटादावभावात् घटादेः कर्तृत्वानापत्तिरत आह—*प्रतियोगित्वसहितेति* । समानदेशकालवृत्तित्वसम्बन्धेन नाशसामग्रिविशिष्टप्रतियोगित्वमित्यर्थः । नातो मुद्गरप्रक्षेपादिरूपव्यापारमादाय देवदत्तो नश्यतीति प्रयोगः। यद्यपि प्रागभाववत् ध्वंसोऽपि कपालादिवृत्तिरेव, न घटादिवृत्तिः, तथापि प्रतियोगित्वरूपव्यापारो घटादावस्त्येव । *तदत्यये इति* । सामग्रीरूपविशेषणाभावप्रयुक्त एव विशिष्टाभाव इति भावः । एवं चोक्तदोषवारणाय उत्पत्तेरप्याख्यातार्थत्वमिति तार्किकोक्तं नादर्त्तव्यम् । *ज्ञानेच्छादीति* । अत्र फलताघटकः सम्बन्धो विषयता । अत एव फलव्यापारयोर्भिन्ननिष्ठत्वात्सकर्मकत्वम् ।

ननु मनोयोगादिरूपव्यापाराभावादीश्वरो जानातीति प्रयोगानापत्तिरत आह-*अन्तत आश्रयतैवेति* । यद्यपि व्यापारसमुदायत्वरूपक्रियात्वमाश्रयताया न संभवति; तथापि 'तत्तत्कालिकानां राज्ञां क्रिया' इत्यादि वक्ष्यमाणरीत्यात्रापि आरोपो बोध्यः । *फले तङिति* । अत्र तङ् परस्मैपदिभ्य उत्पन्न उपसर्गप्रयुक्तश्च ग्राह्यः । तेन एधते निविशते इत्यादौ नातिव्याप्तिः । यद्यपि शबाद्यभावेऽपि लिङादौ कर्त्तुबोधः। गच्छ इत्यादौ च तिबाद्यभावेऽपि कर्त्तुर्बोध इति तुल्यत्वाद्विनिगमनाविरहाच्छबादीनां वाचकत्वं संभवति, तथापि गच्छेत्यादौ 'यः शिष्यत' इति न्यायेन बोधात्तिबादीनामेव वाचकत्वम् । यद्यपि नित्यशब्ददर्शने गच्छेत्येव बोधकम्, तथापि प्रक्रियादशामादायैवात्र सर्वो व्यवहारः । यक्चिणादीनामपि क्वचित्फलाश्रयत्वबोधकत्वं नास्तीत्याशङ्कते-*नन्वेवमिति* । *सामान्यविशेषज्ञानेति* । तच्च 'चयस्त्विषाम्' इत्यादिनोक्तम् । *सार्वधातुकेति* । तेन सज्जते इत्यादेर्निरासः । भावसाधारणो विधिः भावकर्मसाधारण्येन विहितः "सार्वधातुके यक्" इत्यादि । *प्राभाकरादीन्प्रति* । तन्मते फलानुकूलो व्यापारो धात्वर्थः । कृतिरूपा भावना आख्यातार्थः । साऽपि लिङादीनामेव वाच्या । तथाहि भावनानामप्रवृत्त्यनुकूलो व्यापारः । प्रवर्त्तकत्वं च लिङ् लोट् तव्यादीनामेवेति भावः ।

अत्र मीमांसकाः-धातुना सिद्धो भावो दानयागादिरुच्यते । तद्गतं साध्यत्वं तु आख्यातेनोच्यते इत्याख्यातार्थो भावना । तदाहुः-धात्वर्थव्यतिरेकेण यद्यप्येषान लक्ष्यते, तथापि सर्वसाधारणरूपेणैवाभिधीयते इति यत्न एव भावना । पचतीत्यस्य पाके पचतीतिप्रतीत्या यत्नस्य धात्वर्थत्वाभावात् रथो गच्छतीत्यादावाश्रयत्वरूपैव भावना, तस्याश्च साध्यत्वरूपत्वेन भानस्य पर्वताः सन्तीत्यादौ शाब्दिकैरपि स्वीकारादित्यन्ये।

सा चेयं सर्वाख्यातवाच्या अर्थभावनेत्युच्यते इति वदन्ति, तान् दूषयति-*व्यापारो भावनेति* । धात्वर्थस्य सिद्धरूपत्वाभावाद्व्यापार एव भावनेति भावः । भावना सकर्मिकैव क्रियात्वकर्मिकापीति । भेदे सत्यपि साध्यत्वाविशेषाद्भावनाव्यापारयोरभेद इति पुञ्जराजः । *अयत्नानाम् = यत्नभिन्नानाम् । भावनाशब्देन यत्नस्यैव शास्त्रान्तरे प्रसिद्धतया फूत्कारादिसंग्रहार्थं व्यापार इत्युक्तमिति भावः । *नचैवमिति* । व्यापारत्वस्योपाधित्वेन शक्यतावच्छेदकत्वासंभवात् फूत्कारत्वादीनां चाननुगतत्वात् फलानुकूलो यत्न एव धात्वर्थः । कृतित्वं शक्यतावच्छेदकमित्यर्थः । एतच्च न तेषां मतम् । व्यापारो धात्वर्थः, कृतिराख्यातार्थ इति तु तेषां सिद्धान्तः । अत एव नैयायिकमतमित्यपहाय रीतिरित्युक्तम् । नैयायिकखण्डने विवक्षित त्वित्थं व्या-

ख्येयम् । उक्तविवरणाद्भावनाया वाच्यत्वं लब्धम् । तत्र धारणात्तस्य कर्तृवाचितया परिशेषाद्भावना धात्वर्थ इति भावः ।

ननु परिशेषादित्युक्तमयुक्तम् । कर्तुराख्यातार्थत्वे अनन्तव्यापाररूपकर्तृत्वस्य शक्यतावच्छेदकत्वापत्तिरित्याशङ्क्ते—*न चैवमिति* । *व्यापारत्वादीति* । अनुकूलव्यापारे लक्षणा । आदिना विद्यते इत्यादावाश्रयत्वादौ लक्षणा शक्यतावच्छेदकस्यापीति आख्यातस्य कर्त्तरि शक्ती व्यापाररूपं कर्तृत्वं शक्यतावच्छेदकम् । तत्र तु लक्ष्यतावच्छेदकगौरवमित्यर्थः । *यत्न एवेति* । उक्तविवरणादाख्यातस्य यत्नोऽर्थ इत्यर्थः । नैयायिकान्निराकृत्य प्रकृतोपयोगितया मण्डनमिश्रमतं निराकरोति—*किञ्चेति* । तन्मते फलमात्रस्य धात्वर्थतया आख्यातार्था भावना, तथा च णिजर्थव्यापारजन्योत्पत्तिरूपफलाश्रयत्वाद्घटो भवतीत्यत्रापि द्वितीया स्यात् । तन्मते तु धात्वर्थव्यापाराश्रयत्वेन परया कर्तृसंज्ञया कर्मसंज्ञा बाध्यत इति भावः । *भावनाया अवाच्यत्वे इति* । यत्नो धात्वर्थ इति तार्किकैकदेशिमते मण्डनमते च व्यापारस्य धात्वर्थत्वाभावात् । *अन्यतमत्वमिति* । सकर्मकधातुत्वं तत्तद्व्यक्तित्वेनोपादाय एतदन्यतमत्वं सकर्मकत्वं वाच्यमित्यर्थः । *एकस्यैवेति* । यथा खद्धातुः स्थैर्येऽकर्मकः, हिंसायां सकर्मकः । पूर्वं केवलफलवाचकत्वनिराकरणपरतया व्याख्यातमिदानीं केवलव्यापारवाचकतानिराकरणपरतया व्याचष्टे—*अथ वेति* । *तत्साधयन्*-वाचकत्वं साधयन् । *व्यापार एवेति* । फलं तु कर्मप्रत्ययार्थः । प्रत्ययार्थफलाश्रयत्वादेव च कर्मत्वमिति भावः । *भाक्त इति* । भक्तिर्लक्षणा, भाक्तो गौणः । सविषयार्थकधातुयोगे विषयत्वं द्वितीयार्थः । सविषयार्थत्वं गौणसकर्मकत्वमिति तार्किकसिद्धात इति भावः । *फलमात्रमिति* । व्यापारस्थानीयमित्यर्थः । *युक्त्यन्तरमिति* । सकर्मकाकर्मकविभागोच्छेदस्य पूर्वमुक्तत्वात्तदपेक्षया युक्त्यन्तरमित्यर्थः । *सूत्रं लक्ष्यत इति* । सूत्रप्रवृत्तिर्लक्ष्यते इत्यर्थः । *उपपद्यन्ते इति* । कर्मावस्थायां या क्रिया सैव कर्त्रवस्थायां चेत्तदैव यगादयो भवन्ति । कृतिश्च न घटादिनिष्ठेति भावः । *निर्वर्त्यमिति* । सुवर्णं कुण्डलं करोतीत्यत्र कुण्डलं निर्वर्त्यं कर्म । सुवर्णं विकार्य्यम् । प्रकृतिपरिणाम एव विकृतिरिति मते तु कुण्डलं विकार्यमेव । तदुक्तं हरिणा—

सती वा विद्यमाना वा प्रकृतिः परिणामिनी ।
यस्य नाश्रीयते तस्य निर्वर्त्यत्वं प्रचक्षते ॥ १ ॥ इति

यस्य घटादेः सत्ता प्रकृतिर्मृदादिः, अविद्यमाना वाशब्दे संयोगादेर्वादिना अभिन्नत्वेन नाश्रीयते । तस्य निर्वर्त्यं कर्म । अभेदेन परिणामेन बहुनां तु विकार्य्यमिति तदर्थः । *क्रिया कृतेति* । यथा हि पाकादिना तण्डुलादौ विशेषो भवति । नैवं गमनादीनां ग्रामादौ । *उपलक्षणत्वेऽपीति* । संयोगोपलक्षितो व्यापारो गमधात्वर्थ इति भावः । वदन्तीत्यस्वरसस्तु तत्तत्फलबोधे तत्तद्धातुसमभिव्याहारस्य नियामकत्वान्न दोष इति । *निर्विवादमिति* । सकर्मकस्थले फलस्य द्वितीयार्थत्वात् व्यर्थत्वं सम्भवति । भवतीत्यादौ च सत्तादिरूपफलवाचकत्वं धातोरेव सम्भवतीति भावः । *द्व्यर्थः पचिरिति* । विक्लेदनो निर्वर्तना च पचेरर्थः । तण्डुलान् विक्लेदयन् ओदनं निर्वर्त्तयतीत्यर्थात् । *न्यायविरुद्धत्वादिति* । "प्रत्ययार्थः प्रधानम्"इति न्यायादाख्यातार्थं एव भावनेत्यर्थः । *स्वयुक्तेति* । स्वं धातुस्तद्युक्तं यदाख्यातं तदर्थ इत्यर्थः । सकलमीमांसकैः फलव्यापारयोर्धातुवाच्यत्वं स्वीक्रियते, नतु केवलफलस्येत्यभिप्रेत्याह—*मीमांसकम्मन्यमिति* । *तद्विधानलाभे इति* । कर्तृपदस्य कर्तृत्वपरतया

व्यापारवाचित्वलाभादिति भावः । *वैयर्थ्यापत्येति* । अत एव तद्विरोधः । *सकलव्यापारेति* । पराभिमतभावनारूपव्यापारस्यापि लाभादित्यर्थः । *मीमांसकोक्तं बाधकमिति* । "प्रत्ययार्थः प्रधानम्" इति न्यायविरोधरूपमित्यर्थः । *अरुणाधिकरणेति* । "अरुणया एकहायन्या पिङ्गाक्ष्या गवा सोमं क्रीणाति" इत्यत्र कारकाणां क्रियथैवान्वयादरुणया क्रीणाति एकहायन्या क्रीणातीत्यादिक्रमेण पृथगेवान्वयः । पश्चात् या अरुणा सा एकहायनीत्यादिको मानसोऽभेदबोधः । *वक्ष्यमाणेति* । क्रियायोग एव कारकसंज्ञाविधानात् । *सम्बन्धमात्रमिति* । भावार्थाधिकरणे "ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्युदाहृत्य भट्टपादैः सिद्धान्तितमाख्यातार्थभावनायां स्वर्गकामपदोपात्तः स्वर्ग एव फलत्वेन संबध्यते, न तु धात्वर्थो यागः । तस्यापुण्यरूपत्वेनापुरुषार्थत्वात् । नच स्वर्गस्य भिन्नवाक्योपात्तत्वादाख्यातरूपसमानरूपपदश्रुतेरेव चरितार्थत्वात् । सर्वत्रैव हि धात्वर्थभावनया सम्बन्धसामान्यमेव श्रुत्या प्रत्याय्यते, । तस्य सम्बन्धसामान्यस्य एकोंऽशस्सम्बन्धविशेषस्तस्य निवेशे बोधने तु श्रुतेः सामर्थ्यं नास्ति । यथा पचतीत्यत्र पाकसम्बन्धिनी भावनेत्येव श्रौतोऽर्थः । पाकानुकूलाभावनेति तु पश्चान्मानसो बोधः । अत एव 'दध्ना जुहोति' इत्यत्र दधि जुहोतीत्यर्थः । ज्योतिष्टोमेनेत्यत्र तु यागस्य मानसः पाष्ठिकः करणत्वबोधः । *लडाद्यन्ते इति* । लिङ् लोट् तव्यादिस्थले एव प्रवर्त्तकत्वादिप्रतीत्या तेषामेव भावना वाच्येति भावः । *विध्रियमाणस्यापीति* । उक्तविवरणाद्भावनाया वाच्यत्वमावश्यकम् । तत्र चाख्यातस्य कर्तृवाचकत्वापरिशेषाद्धातोरेवार्थो भावनेति भावः ।

ननु यदि कर्त्तुराख्यातार्थत्वं स्यात्तदैवोक्तयुक्त्या भावनाधात्वर्थः स्यात्, तदेव तु न । कर्त्तरि शक्तौ अनन्तव्यापाररूपकर्तृत्वस्य शक्यतावच्छेदकत्वे गौरवादित्याशङ्क्ते-*नचैवमिति* । असिद्धस्यापि यागस्य स्वकरणनिष्पन्नस्य करणत्वसम्भवात् सोमादीनां तु साक्षात् करणत्वं न सम्भवति, नहि क्रियामन्तरेण काष्ठादिमात्रात्पाक उत्पद्यते इति । *शक्यतावच्छेदकरूपेणैवेति* । तीरे प्रवाहत्वमारोप्य प्रवाहत्वेनैव रूपेण तीरबोधात् शैत्यपावनत्वादीनां प्रतीतिरिति भावः । *न नैयायिकादीनामिति*। 'कचतस्त्रस्यति वदनम्' इत्यत्र कचत्वादिना बोधे राहुत्वादिप्रकारकबोधाभावात् त्रासकत्वानापत्तेरिति भावः । *विपर्य्ययेणापि व्युत्पन्नानामिति* । व्याकरणाभिज्ञेन केनचित् द्वितीयाद्यर्थकर्मत्वादीन् कर्मत्वादिशब्दैरेव बोधयितुमिच्छता घटः कर्मत्वमित्यादिप्रयुक्तम् । प्रयोज्येन च व्याकरणलक्षणज्ञेनार्थमनुसन्धाय घटीया कर्मतेत्याद्यर्थोऽवगतः, तस्य तद्वाक्यं साकाङ्क्षमेवेति भावः । एवंप्रकारिकापि व्युत्पत्तिर्व्याकरणव्युत्पत्तिमतमिव भवतीत्यभिप्रेत्य विपर्य्ययेणापीत्यपि शब्द उक्तः, व्याकरणव्युत्पत्तिमूलकविपरीतव्युत्पत्तिमतामित्यर्थः । *तन्निराकाङ्क्षमेवेति* । घटीया कर्मतेति बोधे निराकाङ्क्षमेवेत्यर्थः । यस्य पदस्य यत्पदव्यतिरेकप्रयुक्तान्वयः ।

ननु भावकत्वं तत्पदे तत्पदवत्त्वमाकाङ्क्षेति नीलपदं विनापि घटमानयेत्यादावन्वयदर्शनादभेदबोधे समानविभक्तिकत्वमेवाकाङ्क्षा, घटः कर्मत्वमित्यादावपि अभेदबोधे आकाङ्क्षाऽस्त्येव, किंतु योग्यता नास्ति । योग्यताभ्रमे त्वभेदबोधो भवत्येवेति नैयायिकवचनं न कार्य्यमित्याकारकं प्रचीनवैयाकरणसूत्रं व्यर्थमित्यर्थः । *एवं सत्यपि* । व्युत्पत्त्यनुसारित्वे सत्यपि । *भाट्टरीतिरिति* । कर्त्रादिना भावनाऽऽक्षिप्यते इति तदुक्तेः । *तथात्वापत्तौ* = भावनाक्षेपापत्तौ । *कर्त्रुर्वाच्यत्वमिति* । कृदन्ते इत्यादि उ-

त्पत्तौ ग्रहे वेति अन्योन्याश्रयस्य दूषकत्वं च तर्कविधया। तथाहि–घटो यदि घटजन्यः स्यात्, घटाद्भिन्नः स्यादिति। एवं ज्ञप्तावपि बोध्यम्। स्थितावन्योन्याश्रयस्तु नोक्तः। व्याकरणे प्रयोजनाभावात्। *क्रियाशब्देनेति*। "कर्मवत्कर्मणा तुल्यक्रियः" इत्यत्र क्रियाशब्देन फलस्यैव ग्रहणात्। *अस्त्यादावपीति*। उत्पत्त्यनुकूलव्यापार आत्मधारणानुकूलो व्यापारश्चास्त्यादीनामर्थः। तत्र धर्मिणि उत्पाद्यत्वेन विवक्षिते सति "रोहितो लोहितादासीत्"इत्यादावुत्पत्त्यनुकूलव्यापारः प्रतीयते एव। *अन्यत्रेति*–आत्मधारणानुकूलव्यापारार्थके घटोऽस्तीत्यादौ फलव्यापारयोः समानाधिकरणत्वाद्भावना स्फुटं न प्रतीयते इत्यर्थः। *अन्तर्भावादिति*। आत्मरूपकर्मणो धात्वर्थेऽन्तर्भावादित्यर्थः।

ननु घटोऽस्तीत्यादौ साध्यभावना यस्य प्रतीयते, तदानीं वा सिद्धस्य घटस्य न कर्त्तृत्वसम्भवः, निष्पन्नेन घटेन साध्यमानत्वासम्भव इति चेन्न। बौद्धघटस्य बाह्य घटे स्वभेदमध्यस्योभत्रोपपादनात्। *भागरूपसत्वादिति*। तथा च तत्रापि पृथक् शक्तिमादाय धात्वर्थस्य सिद्धत्वापत्तिरिति भावः। वस्तुतः प्रत्ययेन कर्त्राद्यभिधानात्साधनवर्तित्वमित्यर्थ इति। *यथाक्रममिति*। पश्येत्यत्र साध्यरूपता धावतीत्यत्र सा न रूपतेत्यर्थः। धातुना=धातुभागेन, तथाभिधाने=साध्यत्वाभिधाने। *कर्मषष्ठ्य एवेति*। क्रियायोगं विना कर्मत्वासम्भवात् धातोः साध्यक्रियावाचकत्वे 'काष्ठैः पाकः, इत्यपि स्यादिति मीमांसकैर्यदुक्तं तत्रेष्टापत्तिमाह—*इष्टमेवेति*। *उपपद्यत इति*। पचतीत्यत्र विक्लित्तिमुत्पादयतीत्यर्थाद् व्यापारं प्रति फलस्यापि कर्मतया तद्विशेषणे स्तोकमित्यत्र यथा द्वितीया, तथा 'स्तोकं पाक' इत्यत्रापीत्यर्थः। क्रियाविशेषणानां कर्मत्वमित्यस्य वाचनिकत्वं वदतां तार्किकादीनां तु 'ज्योतिष्टोमेन यजेत' इत्यादावपि द्वितीयापत्तिः। 'स्तोकः पाकः' इति घञन्तार्थव्यापारविशेषणत्वात्प्रथमा। प्रयोगसाधुतामात्रमस्तु इत्याशङ्कते—*नचेति*। *समानवाक्ये इति*। 'आख्यातं सविशेषणं वाक्यम्' इति वार्त्तिककारोक्तेः सम्बोधनस्य विशेषणत्वमेव न्याय्यमिति भावः। *तत्क्रियायां विशेषणमिति*। सम्बोध्यमानदेवदत्तविषया या व्रजतिक्रिया सा असम्बोध्यमानदेवदत्तविषयकव्रजतिक्रियापेक्षया भिन्नेति भावः। सिद्ध्यावर्त्तकत्वरूपं विशेषणत्वम्। तथा चैकवाक्यत्वात्पदात्परस्यामन्त्रितस्येत्यनुदात्तः। देवदत्त व्रजतीति तु नोदाहृतम्। आमन्त्रितं पूर्वमविद्यमानवद्भावेन पदात्परत्वाभावात् सूत्ररीतिमाह—*इति सूत्रयतेति*। अन्यथा तिङन्तद्वये एकवाक्यत्वाभावेन "अतिङ" इति निषेधवैयर्थ्यादिति भावः। भाष्यकृता तु पचतिभवतीत्यस्य पाको भवतीत्यर्थः। स्वमुखेनैवोक्तः। तदुक्तं हरिणा—

एकतिङ् पश्य वाक्यं तु शास्त्रे नियतलक्षणम्।
तस्यातिङ्ग्रहणे नार्थो वाक्यभेदान्न विद्यते॥ इति।
बहुष्वपि तिङन्तेषु साकाङ्क्षेष्वेकवाक्यता।
तिङातिङो निघातस्य प्रतिषेधस्तथार्थवान्॥ इति च।

अत एव चोक्तम्—

तथा तिङन्तमप्याहुस्तिङन्तस्य विशेषणम्॥ इति।

एवं च पूर्वं स्वाभिमतो व्रजतीत्यत्र तत इत्यस्मात्परस्य व्रजतीत्यस्य "तिङ"इति निघातः सिद्धः। *यौगिक इति*। क्रियते सा सा क्रिया संज्ञाशब्दप्राबल्यादिति

ज्योतिष्टोमे श्रूयते रथन्तरमुत्तरयोर्गायतीति ऋचाङ्गानुविशेषो रथन्तरं तत्र "न अभित्वाशूरनो नुमः" इति ऋक् "रथन्तरं साम्नो योनिस्तदुत्तरं चत्वासिद्धि हवामह" इत्यादिका ऋचस्सन्ति । तत्र रथन्तरं साम गेयम् । उत्तराशब्दस्य संज्ञाशब्दतया उत्तरासंज्ञकग्रन्थे पठ्यमानकत्वेन रथन्तरं गेयं उत्तराग्रन्थे हि सर्वेषां साम्नां योनिमुत्तराऋचः विशिष्य सन्तीति सिद्धान्तः । *तद्व्यतिरेकेण* । क्रियाव्यतिरेकेण । आहुरित्यस्वरसस्तु क्रियारहितमपि त्वया एधितव्यमित्यादि वाक्यं स्पष्टमेव । तदुक्तं हरिणा-

वाक्यं तदपि मन्यन्ते यत्पदं चरितक्रियम् ॥

इति गर्भितक्रियं पिण्डीमित्येतदपि वाक्यमिति तदर्थः ।*इति महानसवदिति* । अत्र वृत्यर्थस्य महानससादृश्यस्य पर्वतेऽन्वयः । स चायुक्तः क्रियासादृश्ये एव वतिविधानादिति भावः । अत एव भवितुमर्हतीति अत्राध्याह्रियते इति प्रामाणिकाः । वस्तुतस्तु "तत्र तस्येव" इति सूत्रं क्रियाभावेऽपि वतिविधानार्थमिति ध्येयम् । *स्पृहिकल्पनेति* । पुष्पेभ्यः स्पृहयति इति पदाध्याहारोऽपि तत्र व्यर्थः स्यादित्यर्थः । *कृतपूर्वीति* । अत्र कर्मणोऽविवक्षया भावे क्तः । कृतं पूर्वमनेनेति विग्रहः । पश्चात्कटादिकर्मयोगः । आहुरित्यस्वरसस्तु "द्विर्वचनेऽचि"इतिनिर्देशादेव साध्यावस्थक्रियाया अपिग्रहणम् । "संख्यायाः क्रियाभ्यावृत्ति" इतिसूत्रे क्रियाग्रहणं तूत्तरार्थमिति ।

परे तु भोक्तुं गत इत्याद्यसाध्वेव । अत एव "उपपदमतिङ्" इति सूत्रे अतिङ्ग्रहणस्य क्रियावाचिनि लक्षणया कारको गत इत्यत्र समासनिषेधः फलमित्युक्तो नैतत्क्रियावाचीति उक्तं भाष्ये इत्याहुः । *भेद्यभेदकेति* । विशेष्यविशेषणयोः परस्परसम्बद्धयोर्बोधे यादृशानुपूर्व्या साधुत्वं सूत्रकारादिभिरुक्तं स तत्र साधुः । बोधस्त्वसाधुशब्दादपि जायते एवेत्यर्थः । *श्रुत्या = आख्यातश्रुत्या । प्रकरणात्* = तत्र तु प्रकरणपाठात्, क्रत्वर्थत्वे सति अनृतवदने क्रतोर्वैगुण्यम् । पुरुषार्थत्वे तु पुरुषस्य प्रत्यवायः । *जञ्जभ्यमानः* = जृम्भया विदारितमुखः । *अत्र विधिवदिति* । यथा सं मन्त्रप्रकरणात् क्रत्वङ्गं तथेत्यर्थः ।

इति धात्वाख्यातार्थनिर्णयः ।

---

## अथ लकारार्थनिर्णयः ।

अत्र केचित्कालं क्रियात्मकमाहुः । अपरे क्षणसमूहमाहुः । तन्त्रान्तरप्रणेतारस्त्वखण्डमतिरिक्तं कालमाहुस्तन्निखिलनयेऽपि वर्त्तमानकालस्य प्रत्यक्षेण निश्चेतुमशक्यत्वादनुमानगम्यत्वमाह—*प्रारब्धापरिसमाप्तत्वमिति* । अधिश्रयणान्ते इत्येतत्पर्यन्तं मध्ये इत्यस्य विशेषणम् । *तदस्ति* = वर्त्तमानत्वमस्ति । एतच्च लक्षणं क्रियाकालयोरैक्यमतेन, तयोर्भेदे तु प्रारब्धापरिसमाप्तक्रियोपलक्षिततत्वं वर्त्तमानत्वमिति बोध्यम् । 'क्रियाभेदाय कालस्तु' इति भाष्ये कालस्य क्रियाभेदकत्वलाभात् ।

ननु व्यापारसमुदायः क्रिया । आत्मास्तीत्यादौ च स्थितिरूपो क्रिया एकविधा । यथाहि पच्यादौ फूत्कारादीनामवयवानां वैलक्षण्यात्तत्समुदायस्य भवति क्रियात्वम् । तथात्रावयववैलक्षण्याभावेन तदसम्भव इत्याशङ्क्याह—*तत्तत्कालिकानामिति* । तेषां क्रिया हि विलक्षणावयवत्वेनानुमीयमाना तत्साहचर्यात्पर्वतादिक्रियाणामपि वर्त्तमानत्वमितिभावः । *स्थितेर्विभिन्नत्वमिति* । क्रियायाः कालत्वमभिप्रेत्येदम् ।

*आत्मा तु*-स्वरूपं तु। *न विकल्प्यते*—न भिद्यते। *पररूपेण*=परकीयक्रियारूपेण। *तम आसीदिति*। अन्धेन तमसा निगूढमप्रज्ञातमग्रे सृष्टेः प्राक् तदा हि न किंचिदासीत्, तुच्छेन—सूक्ष्मीभूतेन घटमण्डपस्थानीयेन कर्मणा यदपिहितमिव जगदासीत्। आसमन्ताद्भवतीत्याभु अज्ञानं तमः इति श्रुत्यर्थः। *अद्यतनानद्यतनेति*। अद्य भवोऽद्यतनः, अत्र समुदायावयवभेदपरिकल्पनया एकस्यैव कालस्याधाराधेयपदेन निर्देशः। अत एवोक्तं हरिणा—

कालस्याप्यपरं कालं निर्दिशन्त्येव लौकिकाः॥ इति।

*इत्येतादृशं विषयतेति*। एतादृशानुव्यवसायनिरूपिता या विषयता तन्निरूपकं यद्ज्ञानं तदविषयत्वमित्यर्थः। *पूर्वापरीभूतावयवमिति*। पिण्डीभावासम्भवबोधज्ञा या पिण्डीभूता या इति। अवयवानां क्षणिकत्वे पिण्डीभावस्यैवासम्भवादिति भावः। *क्रियाविष्टानाम्*—क्रियाविशिष्टानाम्। वदन्तीत्यस्वरसस्तु क्रियाप्रत्यक्षं विना तद्विशिष्टसाधनस्यापि प्रत्यक्षासम्भव इति। *तत्वं चेति*। *वर्त्तमानः प्रागभावः*=उत्तरसमयप्रागभावः। तत्प्रतियोगी उत्तरसमयः। *न्यायव्युत्पादनार्थम्=प्रवर्त्तनाभेदज्ञानार्थम्। *प्रपञ्चार्थम्*=शिष्यबुद्धिवैशिष्यार्थम्। *अर्थान्तरेऽपीति*। तद्यथा "स्वर्गकामो यजेत" इत्यादि उपदेशोऽनेन पथा यात्वित्यादिश्य विधावन्तर्भवति। कुरुष्व यथाहितमिति। प्रारब्धं कुर्विति चामन्त्रणं कामचारेण करणे प्रतिबन्धकशङ्कानिवर्त्तनं स्वामन्त्रणम्।

इति लकारार्थनिर्णयः।

## अथ सुबर्थनिर्णयः।

*सुपाङ्कर्मादयोऽप्यर्था इति*। *इति भाष्यत इति*। भाष्यादित्यर्थः। *इत्यापत्तेरिति*। पूर्वक्रमेण जानामीत्यस्यानापत्तेरित्यर्थः। *सत्कार्य्यवादेति*। कारणे सूक्ष्मरूपेण स्थितस्याविर्भाव एवोत्पत्तिः। असत एवोत्पत्तौ तु सर्वत्र सर्वमुत्पद्येतेति भावः।

ननु नाशस्यावस्तुतया कथं सत्तात्मकत्वमत आह-*तिरोभावेति*। अयम्भावः-नित्या ब्रह्मात्मिका सत्ताः न निरन्वयनाशसहेति। अभावो नाम न भावादव्यतिरिक्तः, किंतु सत्तैव। तिरोभूय स्वकारणेषु शक्तिरूपतया स्थिता वस्तूनां नाशः, सैव च तिरोभावावस्था। साधनसंपर्कात् क्रमवत्वेन प्रतीयमाना नश्यतीत्याख्यातेन न प्रत्याय्यते इति लब्धक्रमे इत्यनेन साध्यरूपता दर्शिता, नष्टे नश्यतीति प्रयोगश्च वारितः। *आद्यदोषेति*। गच्छन्तीत्यादौ कर्तुः कर्मत्वापत्तिरूपेत्यर्थः। *द्वितीयेति*। प्रयागात्काशीमित्यत्रत्येत्यर्थः। औदासीन्येन प्राप्यं तृणादि, अनीप्सितं विषादि, संज्ञान्तरैरनाख्यातम् "अकथितं च" इति विहितं अन्यपूर्वकम् "अधिशीङ्स्थासां कर्म" इत्यादिना विहितम्। असज्जायते इति तार्किकरीत्येदम्। असदुत्पत्तेर्निराकृतत्वादाह—*सहेति*। *धातुनोक्तेति*। धातुनोक्ता क्रिया यस्य तस्मिन् कारके नित्यं कर्त्तृतेष्यते इत्यर्थः। *कर्तृकर्मव्यपदेशाच्चेति*। "मनोमयः प्राणशरीर उपास्य" इति श्रुतं मनोमयत्वादिगुणकं ब्रह्मैव, नतु जीव इति पूर्वसूत्रे प्रतिपादितम्। तत्रैव हेत्वन्तरं प्राह-*कर्मकर्त्रित्यादि*। मनोमयादिशब्देन जीवस्यैव ग्रहणे तस्यैव कर्मत्वं कर्त्तृत्वं विरुद्धे स्यातामित्यर्थः। तस्य जीवस्य वाक्यशेषमाह-*एतमिति*। इतः अस्मात् लोकात् प्रेत्य गत्वा एवं मनोमयं अभिसम्भवितास्मि प्राप्तास्मीति श्रुत्यर्थः। *कर्त्ता शास्त्रार्थवत्वादिति*।

आत्मैव कर्त्ता न सांख्याभिमतमन्तःकरणं "यजेत स्वर्गकाम" इत्यादौ शास्त्रार्थस्यात्मन्येव सम्भवादिति सूत्रार्थः । *शक्तिविपर्य्ययादिति* । अन्तःकरणस्य कर्त्तृत्वेऽधिकरणशक्तिर्न स्यादिति सूत्रार्थः । *तदेतेषामिति* । *प्राणानामिति*–प्राणानां इन्द्रियाणां विज्ञानेन बुद्धया विज्ञानशक्तिमादाय ग्रहणशक्तिमादाय स्वापे जीव उदयमेतीति श्रुत्यर्थः । *यथा च तक्षोभयथेति* । आत्मनः कर्त्तृत्वेऽपि न | सर्वदा दुःखित्वादिकम्, यथा हि तक्षा वास्यादिहस्त एव व्यापारकरणाद्दुःखितो नान्यथा, एवमात्मापीति सूत्रार्थः । *बुद्धिकृतमपादानत्वमिति* । रूपे विभागरूपगुणासम्भवात् न प्रतिपत्तिरिति अध्वर्य्युणा दत्तं दण्डं यजमानः सोमक्रयपर्य्यंतं धारयतीति उपयुक्तत्वाद्दण्डप्रदानं प्रतिपत्तिकर्मेति पूर्वपक्षः । प्रतिपत्तिर्नाम उपयुक्तस्यादृष्टार्थ आदरः । यथा राज्ञा चर्वितस्य ताम्बूलस्य सौपर्णेयवत्तद्ग्रहे ग्रहः । *अथ कर्मेति* । मैत्रावरणो हि दण्डमवष्टभ्य प्रैषानुवक्ष्यतीति उपयोक्ष्यमाणत्वात् । तथा च श्रूयते दण्डी प्रैषान्वाहेति नियमः । प्रकृतेषु वेति "कर्मण्येव द्वितीया" इत्यादिनियमेषु कृतान्तःकरणादीनेव व्यावर्त्तयति, नत्ववयवार्थमित्यर्थः ।

इति सुबर्थनिर्णयः ।



## अथ नामार्थनिर्णयः ।

*स्वसमवेतेति* । स्वं व्यक्तिः तत्समवेतं सामान्यं तदाश्रयत्वं व्यक्त्यतरे । *नागृहीतेति* । "नागृहीतविशेषणाबुद्धिर्विशेष्यमुपसंक्रामति" इति न्यायः । *उपपद्यते इति* । लक्षणया व्यक्तेरपि प्रकृत्यर्थत्वात् अकारणत्वेऽपि दण्डत्वादेरलक्ष्यत्वेऽपि तीरत्वादेः छागो वेति "अग्नीषोमीयं पशुमालभेत" इत्यत्र पशुः छाग एव । "अग्नये छागस्य" इति मन्त्रे छागस्य श्रुतत्वादिति सूत्रार्थः । *अनुविद्धमिवेति* । सर्वं ज्ञानं शब्देनानुविद्धमिव भासते इति योजना । सोऽपि प्रातिपादिकार्थं इति । अत एव "ओमित्येकाक्षरं ब्रह्म" "रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिनः" इत्यादौ शब्दस्य बोधः । शब्दार्थयोस्तादात्म्यमित्यस्यायमेवाशयः । घटादिशब्दानामर्थे स्वशब्देऽपि प्रयोगेण शब्दार्थयोरात्यन्तिकविवेकस्य चाग्रहात् । स च शब्दः "अग्नेर्ढक्"इत्यादौ विशेष्यतया प्रतीयते, नह्यनियमानाशक्तिर्वचन इति नापि उत्पादयितुं शक्यते । 'नल आसीद्' इत्यस्य तु नलशब्दवानन्य आसीदित्येवं शब्दप्रकारको बोधः । अत एव देवदत्तः अयमेव भवतीत्यादौ देवदत्तशब्दवाच्योऽयमेवेत्यर्थः । किञ्च शब्दस्यावाच्यत्वे वाच्यत्वं केवलान्वयीति तार्किकप्रवादासंगतिः । *शक्यभावेनेति* । अनुकरणानां साधुत्वेऽपि शक्तित्वाभावादत्र लक्षणा न सम्भवतीत्यर्थः । *तदाशब्दोऽपीति* । अनुकार्य्यमपीत्यर्थः । अन्यभेदपक्षे स्वस्यैव वाच्यवाचकभावासंभव इत्यत आह– *अभेद इति* । *अतिप्रसङ्गवारणायेति* । घटपदात्समवायेनोपस्थितस्याकाशस्य बोधवारणायेत्यर्थः । *ग्राह्यत्वमिति* । यथा घटादिकं प्रकाशयन् प्रदीपः स्वात्मानमपि प्रकाशयति ।

इति नामार्थनिर्णयः ।

# अथ समासशक्तिनिर्णयः ।

*भेदान्योन्याभाव इति* । अयम्भावः—भेदः सामर्थ्यमिति पक्षे भेदवदर्थप्रतिपादकत्वमेवैकार्थीभावसामर्थ्यम् । संसर्गस्तु—भेदाविनाभूतत्वादनुमेयः । स्वत्वसमानाधिकरणो राजभिन्नस्वामिकभेदो हि राजसंसर्गव्याप्यः । तथा चानुमीयमानसंसर्गको यो भेदस्तद्वतोऽर्थस्य प्रतिपादनमेकार्थीभावः । *उत्तरकालमिति* । पुरुषगतराजसम्बन्धस्य राजभिन्नस्वामिकभेदव्याप्यत्वादिति भावः ।

*विनिगमनाविरहमिति* । उक्तरीत्योभयोः समनियततया विनिगमनाविरहाद्यौगपद्येनोपस्थितयोर्द्वयोरपि वाच्यत्वमिति भावः । *अस्वामिकेऽपीति* । केवलभेदपक्षे इत्यादिभेदसंसर्गो द्वन्द्वेऽपि साहित्यविशेषस्यैव प्रतीतेरिति वदन्ति । *राज्ञः पदार्थैकदेशत्वादिति* । लक्षणया राजसम्बन्धिनः पदार्थत्वात् । *रथकारेति* । क्षत्रियाद्वैश्यायामुत्पादितो माहिष्यः, वैश्याच्छूद्रायां करिणो भवन्ति । माहिष्यात्करिण्यामुत्पन्नो रथकारः । *अर्थवत्वाभावेनेति* । वृत्त्योपस्थापकत्वाभावेनेत्यर्थः । *समवायेनेति* । पदानां समवायसम्बन्धेनाकाशवृत्तेः । *वषट्कर्त्तुः प्रथमभक्ष इति* । अत्र वषट्कर्त्तुर्भक्षणं प्रथममिति नार्थः, एकपदोपात्तयोर्भक्षणप्राथम्ययोः परस्परमुद्देश्यविधेयभावासम्भवात् । किन्तु प्रथमभक्ष इति समुदितस्यैव विधिः प्राथम्यस्येत्यर्थालाभः । एवं च यत्रैकस्मिन्पात्रे वषट्कारनिमित्तकं प्राप्तं समाख्यायान्यस्य च सोमभक्षणं प्राप्तम्, तत्र प्रथमं वषट्कर्त्तैव भक्षयेत् । तथा च जैमिनिकात्यायनाभ्यां सूत्रितम्—"वषट्कारोऽत्र भक्षयेत्" इति । *अङ्गैः स्विष्टकृतमिति*। पशुयोगे हृदयस्याग्रे वपति, अथ जिह्वायाः, अथ वक्षस इत्येवमादिना एकादशानामङ्गानामवदानेन यागमभिधाय 'अङ्गैः स्विष्टकृतं यजति'इत्युक्तम्, तत्र प्रकृतेनैव येन केनचिदंगेन त्रिस्विष्टकृदिष्टव्य इति नार्थः । *अङ्गैरिति* । समस्तस्यैकपदत्वेनोद्देश्यविधेयभावासम्भवात् । किन्तु 'नाशयोरवपति शिरस' इत्यनेनाङ्गत्रयस्यावदाननिषेधात्तैरेवांगैः स्विष्टकृद् यष्टव्य इति । *निषादस्थपतीति* । स्थपतिः स्वामीनिषादश्चासौ स्थपतिश्चेति कर्मधारयः ; न षष्ठीतत्पुरुषः । पूर्वपदस्य सम्बन्धिनि लक्षणाप्रसङ्गात् ।

इति समासशक्तिनिरूपणम् ।

# अथ शक्तिनिरूपणम् ।

*दृष्टत्वादिति* । प्रवाहत्वेन रूपेण तीरस्यापि बोधः । प्रवाहत्वमेव च तत्रारोपितम् । अत एव गङ्गाशब्दस्य प्रवाहे प्रसिद्धत्वान्मुख्यत्वं तीरत्वप्रसिद्धत्वाद्गौणत्वम् । *नचाव्यवहितोत्तरत्वेति*। शक्तिजन्योपस्थित्यव्यवहितोत्तरशाब्दबोधं प्रति शक्तिजन्योपस्थितिः कारणमितिरीत्येत्यर्थः । *हस्तिपको — हस्तिनि यन्ता, साधुशब्दमनुमाय = स्मृत्वा । *ते साधुष्विति* । असाधुशब्दविषये ते साधव एव स्मृताः सन्तः बोधका इत्यर्थः । ग्रन्थकृतामसाधुशब्दानां लिपिस्थानीयत्वेन व्याख्यातत्वात् । 'असाधुरनुमानेन'इत्यक्षरमर्यादया तु असाधूनामेव परम्परया बोधकत्वं लभ्यते । एवं च ते असाधवः साधुष्वनुमानेन साधुस्मरणद्वारेति व्याख्येयम् । *तादात्म्यमुपगम्येवेति*। अपभ्रंशसाधुशब्दैरभेदेष्विवापन्नाः शब्दार्थस्य प्रकाशका इत्यर्थः । *न शिष्टैरिति* । इवशब्दो भिन्नक्रमः, साधवः पर्याया इव साधवः शिष्टैर्नानुगम्यन्त इत्यर्थः । *नयत इति* । नापि स्मृतिशा-।

सूत्रेणासाधवो व्युत्पाद्यन्ते इत्यर्थः । *एवं चेति* । शिक्ष्यमाणो बालः अव्यक्तं भाषते, साधुविदां व्यक्ते निश्चयो भवतीत्यर्थः । तेन चापभ्रंशेन साधुव्यवहितः = साधुद्वारकः । *शक्तिभ्रमादिति* । अशक्त्या गगरीशब्देनोच्चारित इत्याद्यपुरुषेण ज्ञाते ततो द्वितीयपुरुषस्य गगरीशब्दे एव बोधक इति भ्रम इत्यर्थः । *भ्रमासम्भवाच्चेति* । घटशब्दगगरीशब्दयोर्विजातीयानुपूर्वीकतया भ्रमहेतोः साधारणधर्मदर्शनस्याभावादिति भावः । *पारम्पर्यादिति* । इह स्त्रीशूद्रबालादिभिः प्रयुज्यमाना अपभ्रंशा रूढिमागतास्तै रेव प्रसिद्धतरो व्यवहारः सत्यपि साधुप्रयोगे तेषामपभ्रंशैरेवार्थनिर्णयेनासाधूनामिव वाचकत्वं प्रत्यक्षं मन्यन्ते । साधुत्वानुमानपक्षे व्यवस्थापयन्तीत्यर्थः । *दैवीति* । व्यवकीर्णा अपभ्रंशैः संकीर्णा पुराकल्पे दैवीवागसंकीर्णाऽऽसीत्तदानीं तेषां साधव एव रूढिमुपागताः । गम्यागम्यादिव्यवस्था च साध्वसाधुव्यवस्थाविशिष्टैर्नित्यमविच्छेदेन स्मर्य्यते । *अनित्यदर्शिनामिति* । ये साधूनां धर्महेतुत्वं न प्रतिपद्यन्ते तेषामित्यर्थः । *सम्बन्धिशब्देति*। सम्बन्धशब्दवाच्यः सम्बन्धो योग्यतैव कथमिदं ज्ञायते तत्राह— *योग्यताम्प्रतीति* । लक्षणेऽर्थे तृतीया; योग्यतावशादेवं ज्ञायते इत्यर्थः । अयं शब्द एतदर्थयोग्य इति व्यवहारात् योग्यतैव शब्दार्थयोः सम्बन्धः इति भावः । ग्रन्थकारस्त्वन्यथा व्याचष्टे—*सम्बन्धो विषय इति* । सम्बन्धशब्दे विषयीभूतो यः सम्बन्धस्तद्व्यवहारात् अपशब्द एतदर्थसम्बन्धवानिति व्यवहारादिति यावत् । *एवम् = योग्यताशब्देन । *योग्यताव्यवहारात्* । अयमेतयोग्यतावानिति व्यवहारादिति भावः ।

ननु योग्यताया एव सम्बन्धत्वे संकेतस्य कः उपयोग इत्यत आह—*समयादिति* । वृद्धव्यवहारपरम्परापर्यायात्स्वाभाविक्येव योग्यता।निश्चीयते । नहीयमस्य मातेति सामयिकः जन्यजनकभावः । वस्तुसिद्धस्यैव प्रतिपादनात् । अत्रेदं तत्वम्—पुत्रस्य वाच्यवाचकभाव एव शब्दार्थयोः सम्बन्ध इति प्रसिद्ध्यनुसारेण योग्यतैव सम्बन्ध इत्युक्तं शाब्दिकसिद्धान्तेन । अनवयवमेकं स्फोटात्मकं वाक्यं प्रतिभावाक्यार्थः । सोऽयमित्यध्यासश्च शब्दार्थयोः सम्बन्ध इति स्पष्टं वाक्यपदीयादौ । तार्किकादिनये तु संकेतलक्षण एव शब्दार्थयोः सम्बन्ध इति । इदं तु बोध्यम्—वृत्त्या पदजन्यपदार्थोपस्थितिः शाब्दबोधे कारणमित्यत्र पदशब्दो वाचकमात्रपरः, असाधुशब्दादपि बोधोदयात् । तार्किकाणां मते शक्तं पदं गङ्गापदं तीरे लाक्षणिकमिति व्यवहारः परस्परविरुद्धः । यथा हि मार्गोपदेशादावरण्यवासिनामाप्तत्वम्, तथा घटादौ गगरीत्यादिशब्दप्रयोक्तॄणामप्याप्तत्वमेव । तच्छब्दजन्यबोधस्य च प्रमात्वमेव शास्त्रीयादिकार्योपयोगित्वं नास्तीत्येतावानेव तु विशेषः ।

इति शक्तिनिर्णयः ।



## अथ नञर्थनिर्णयः ।

*अन्यथा*—सर्वभिन्न इत्यर्थे *सा*—सर्वनामता । *तस्य*—नञर्थस्य । *यत्विति* । भ्रान्त्या क्षत्रिये व्यवसितो ब्राह्मणार्थो निषिध्यत इति तु भाष्याशयो वर्णितो हर्य्यादिभिः । *विशेषणमितीति* । तथा चाभावप्रतियोगिघटकर्त्तृका सत्तेति बोध इति भावः ।

इति नञर्थनिर्णयः ।

## अथ निपातार्थनिर्णयः।

*स्वस्वयुक्तेति*। स्वं धातुः स्वार्थो यत्फलमथवा स्वयुक्तनिपातार्थो यत्फलमित्यर्थः। *तण्डुलः पचतीति*। अत्र कर्मत्वस्य संसर्गत्वेन प्रत्ययार्थत्वाभावान्न द्वितीया। *चतुर्विधपदे इति*। नामाख्यातोपसर्गनिपातभेदात् विशेषणसंभवात् इति अपयतीत्यादौ उपसर्गाणां प्रकर्षादिद्योतकत्वं प्रतिष्ठते; इत्यत्र तु धातोर्गतिनिवृत्तिवाचकतया प्रशब्दस्यैवातिरर्थं इति क्वचिद्वाचकत्वमपीत्यर्थः। यद्यप्युपसर्गाणां द्योतकत्वं धातूनां वाचकत्वमित्यत्र न लाघवम्, तथाप्येकस्य उपसर्गस्य धातुभेदेनार्थभेदात् क्वचिदनर्थकत्वाद्यद्योतकत्वमेव। अत एवोक्तं हरिणा—स्थादिभिः केवलैर्यत्र गमनादि न गम्यते। तत्रानुमानाद्विविधा तद्धर्मा प्रादिरुच्यते इति प्रतिष्ठते इत्यत्र "धातूनामनेकार्थत्वाद्"गतिरेवार्थः। तत्रापि प्रशब्दस्य द्योतकत्वमनुमानादिति तदर्थः।

इति निपातार्थविचारः।

## अथ त्वादिभावप्रत्ययार्थनिर्णयः।

*मीमांसकादीनां भ्रममिति*। कृत्तद्धितेत्यादिवार्त्तिकं भवतीति इत्याकारकमीमांसाभ्रममित्यर्थः। *सम्बन्धविशिष्ट इति*। 'राजपुरुष' इतिप्रयोगे राजसम्बधस्यैव निमित्ततया तस्यैव त्वप्रत्ययार्थत्वौचित्यात्। *पक्षभेदेनेति*। संसर्गपक्षे इत्यर्थः। *औपगवत्वमिति*। अत्रापत्यार्थकप्रत्ययार्थस्य "गोत्रं च चरणैरसह" इति जातिवाचितया इदमाद्यर्थस्यादिभ उदात्त इत्यर्थः। *जातिविशेषेणेति*। कृष्णसर्पसुपर्णादिशब्दानां जात्यवच्छिन्नद्रव्यवाचियाया जातावेव प्रत्यय इत्यर्थः। रूढिः कृष्णसर्पादौ गुणस्यैवेति, नतु सम्बन्धस्येत्यर्थः। गुणगुणिनोः सोऽयमिति प्रतीत्या भेदसम्बन्धेन सम्बन्धापेक्षेति भेदपक्षे न सम्भवतीति। वस्तुतस्तु राजपुरुषत्वमित्यत्र राजपुरुषसम्बन्धस्यैव शक्यतावाच्छेदकत्वमनुभवसिद्धम्। पाचकराजपुरुषादिशब्दप्रयोगे पाकराजसम्बन्धावच्छिन्नस्यैव पुरुषस्य प्रतीत्या सम्बन्धस्यैव निमित्तत्वेन तस्यैव त्वप्रत्ययार्थत्वाचित्यात्। सतो भावः सत्तेति। अत्र सदसतोः सम्बन्धस्याव्यभिचाराजातिरेव भावप्रत्ययार्थः। *सम्बन्धिभेदादिति*।

अयम्भावः—परब्रह्मस्वभावा महासत्ताख्या जातिरेकैव। सा च सम्बन्धिनां गवादीनां भेदाद्भिद्यमाना उपचारितभेदाद् गोत्वादिजातिरुच्यते, तस्यां ब्रह्मसत्तायामेव सर्वे शब्दा वाचकत्वेन व्यवस्थिता। अभावस्यापि बुध्याकारेणानुगमान्महासत्तया न वियोगः। अत एव प्रातिपदिकार्थः सत्तेत्युच्यते। एवं क्रियास्वपि उपाधिभेदेन भिन्ना महासत्तैव धातुवाच्या, सा च जातिः सिद्धत्वसाध्यत्वरूपोपाधिभिरपि भिद्यते। सैव सत्ता महानित्युच्यते। यतोऽखिलविवर्त्तः यस्य गुणस्येति गुणशब्देन धर्ममात्रमुच्यते। लोके गुणशब्देन परतन्त्र उच्यते। एवं च जात्यादीनामपि गुणत्वात्त्वप्रत्ययार्थत्वसिद्धः। अत एवोक्तं भाष्यकृता "अन्यो हि वीरत्वं गुणः, अन्यः पुरुषत्वम्"इति।

इति भावप्रत्ययार्थविचारः।

# अथाभेदैकत्वसंख्यानिर्णयः ।

*अभेदैकत्वसंख्येति*। अभेदरूपा एकत्वसंख्येत्यर्थः। *त्रित्वं न्यायादिति*। "कपिञ्जलानालभेत" इत्यत्र बहुत्वं त्रित्वरूपमेव प्रथमोपस्थितत्वात्। *ग्रहं सम्मार्ष्टीति*। अत्र ग्रहमिति ईप्सिततमे कर्मणि द्वितीयाबलादुद्देश्यस्य प्राधान्यं ग्रहस्य गम्यते, तदनुरोधेन गौणस्य संमार्जनस्य वृत्तिर्युक्तैव। अतः श्रूयमाणाप्युद्देश्यगता संख्या न विवक्षिता। 'पशुना यजेत' इत्यत्र तु यागं प्रति करणीभूतः पशुः गौणः। न च गौणानुरोधेन प्रधानस्यावृत्तिर्भवति इति वैषम्यम्। गृह्यते सोमरसोऽनेनेति ग्रहः पात्रविशेषः। अन्यत इत्यस्य विवरणमनुवाद्यस्येति। *वाक्यभेदादिति*। "ग्रहं संमाष्टि"इत्यत्रैकत्वस्यापि विधाने ग्रहमुद्दिश्य संमार्जनस्यैकत्वस्य च विधानाद्वाक्याभेदापत्तिरिति भावः। *संसर्गो जन्यत्वमिति*। आनन्तर्य्यस्याविशिष्यत्वेऽपि भुक्त्वैव तृप्तो न पीत्वेति प्रयोगाज्जन्यत्वं संसर्गः। एवं कदाचिदध्ययनेऽधीत्य तिष्ठतीत्यप्रयोगात् व्याप्यत्वमपि संसर्ग इत्यर्थः।

इति अभेदैकत्वसंख्याक्त्वाद्यर्थश्च।

---

# अथ स्फोटनिर्णयः ।

*वर्णस्फोट इति*। प्रकृतिप्रत्यया वाचका इत्यर्थः। *पञ्चकोशेति*। अन्नमयं ब्रह्म प्राणमयं ब्रह्मेत्यादेरनन्तरं ब्रह्मपुच्छं प्रतिष्ठेति श्रूयते, अत्र रसपरिणामत्वादन्नशब्देन शरीरमुच्यते। एतेन शरीरातिरिक्तस्य पुत्रकलत्रादेरात्मत्वभ्रमो व्यावर्त्तितः। एवं प्राणादिविशिष्टस्यात्मन उपदेशेन वाक्यस्यानात्मत्वं प्रतिपादितम्। एतेषां कोशत्वं चान्तःस्थितस्यात्मनः असिकोशवद्बहिराच्छादकत्वसादृश्यात्। प्राणो न भोक्ता, किंतु मन एवेति तदात्मेत्यर्थः। विज्ञायतेऽनेनेति विज्ञानमन्तःकरणं बुद्ध्याख्यवृत्तिमदन्तःकरणविशिष्ट आत्मा विज्ञानमय आनन्दाभिव्यञ्जकोपाधिविशिष्ट आत्मानन्दमयः। सचायमपि सोपाधिक एवेत्यत उक्तं ब्रह्मपुछमिति। पुच्छत्वेन प्रकल्पितमानन्दमयस्याधारभूतं "सत्यं ज्ञानमनन्तं ब्रह्म" प्रतिष्ठा आश्रयः। *गत्वावछिन्न इति*। यत्किञ्चिद्गकारभेदे तु गकारनिष्ठाभेदप्रतियोगिता यत्किञ्चिद्गकारत्वावछिन्ना। अत्रेदम्बोध्यम्—व्यवहारस्यानादितया प्रवाहानादित्वं शब्दस्य परैरभ्युपेयम्, तत्र चानन्दशब्दकल्पनापेक्षया नित्यैकशब्दस्वीकार एव लाघवम्। यथाहि कुण्डलादिविकारागमेऽपि सुवर्णमित्येवं सत्यम्, एवं सकलविशेषानुगतं स्फोटाख्यमेव सत्यम्। तत्र स्फोटशब्दो ब्रह्मणि श्रुतिषु प्रसिद्धः। ब्रह्मणशब्दात्मकत्वं च श्रुतौ प्रसिद्धम्। 'सत्यासत्यौ तु योभागौ' इति व्यक्तेरनित्यत्वाज्जातेश्च नित्यत्वादिति भावः। *उक्तं चेति*। असत्योपाधिस्तदुपहितमित्यर्थः। *आविद्यको धर्म इति*। अस्मिन्मते अविद्याकल्पितस्य गोत्वादिधर्मस्यासत्यत्वं युक्तमेव। *शुद्धतत्वमिति*। तत्त्वशब्दःपारमार्थिकवस्तुवाची। तदुक्तं हरिणा—

आत्मा वस्तुस्वभावस्य शरीरं तत्त्वमित्यपि।
द्रव्यमित्यस्य पर्यायतत्त्वमित्थमिति स्मृतम्॥ इति।

आभ्यन्तरमनवयवं बोधस्वभावं सर्वार्थमयं निर्विभागं शब्दतत्त्वं तदेव परार्थम्

शब्दब्रह्मेति चोच्यते। *पूर्णात्मने*—अप्रतिहतेच्छाय । *तदेव*—ब्रह्मैव । *प्रक्रियांशास्त्वविद्येति* । तदुक्तं हरिणा—

व्यवहाराय मन्यन्ते शास्त्रार्थप्रक्रियां यतः । इति ।

शास्त्रार्थप्रक्रियाः केवलमबुधानां व्युत्पादनायैव । अतो न शास्त्राणि तत्वं वक्तुं पारयन्तीति तदर्थः । तस्मादविद्यैव शास्त्रेषु प्रक्रियाभेदेनोपवर्ण्यते इत्याह-*शास्त्रेषु प्रक्रियाभेदैरिति* ।

नन्वेवमविद्योपदर्शकशास्त्रप्रक्रियाश्रवणं प्रेक्षावतामुपेक्षणीयं स्यादिति चेद् ? अत्रोक्तं हरिणा—

अनागमविकल्पात्तु स्वयं विद्योपवर्त्तते ॥ इति ।

अविद्योपमर्दन आगमविकल्परहिता शास्त्रप्रक्रियाप्रपञ्चशून्याविद्या प्रगटी भवति। एवं चाविद्यैव विद्योपाय इति तदर्थः । यथा कारणे सूक्ष्मरूपेणावस्थितं कार्य्यं स्वसामग्रीसमवधाने सत्याविर्भवति, एवमविद्याविलये सति विद्या आविर्भवतीति तदाशयः । *समारम्भ*—उत्पत्तिः ।

इति श्रीमद्देवीदत्तात्मजरामसेवकत्रिपाठीतनूद्भवाचार्य्य-कृष्णमित्रकृता वैयाकरणभूषणव्याख्या समाप्ता ॥ १ ॥



श्रीगणेशाय नमः ॥

## झोपनामकश्रीखुद्दीशर्ममैथिलमनीषिणा सङ्गृहीतः—

# तिङर्थवादसारः ।

वाणीं प्रणम्य शिरसि प्रणिधाय पाणी श्रीपाणिनिप्रमुखमुख्यवचो विचिन्त्य ।
आक्षिप्य तार्किकमतं च सजैमिनीयमाख्यातवाच्यमनुवच्मि यथामनीषम् ॥ १ ॥

अथ धातूनां फलव्यापारयोराख्यातस्य कर्तृकर्मणोः संख्याकालयोश्च शक्तिः । तत्र व्यापाराश्रयः कर्त्ता फलाश्रयः कर्म फलव्यापारयोर्धातुलभ्यत्वेनानन्यलभ्याश्रयमात्रमाख्यातशक्यम् । शक्यतावच्छेदकं चाश्रयत्वं तत्तच्छक्तिविशेषरूपमखण्डभूतम् । कर्तृप्रत्ययविवक्षायां कर्त्ता व्यापारस्य विशेषणम् कर्मप्रत्ययविवक्षायां कर्म फलस्य विशेषणं, संख्या च यथाविवक्षं कर्त्तृकर्मणोर्विशेषणम् । कालस्तु सर्वथा व्यापारस्यैव विशेषणम् । तथा च चैत्रस्तण्डुलं पचतीत्यादिवाक्यतस्तण्डुलाभिन्नाश्रयवृत्तिविक्लित्तिजनको वर्त्तमानकालिक एकत्वविशिष्टचैत्राभिन्नाश्रयवृत्तिर्व्यापार इत्यादिरीत्या बोधः। चैत्रेण तण्डुलः पच्यते इत्यादितस्तु एकत्वविशिष्टतण्डुलाभिन्नाश्रयवृत्तिजनको वर्त्तमानकालिक एकत्वविशिष्टचैत्राभिन्नाश्रयवृत्तिर्व्यापार इत्यादिरीत्या प्राचीनवैयाकरणमते बोधः ।

नवीनवैयाकरणमते तु—एकत्वविशिष्टचैत्राभिन्नाश्रयवृत्तिवर्त्तमानकालिकव्यापारजन्या एकत्वविशिष्टतण्डुलाभिन्नाश्रयवृत्तिविक्लित्तिरित्यादिरीत्या फलविशेष्यको बोधः । तेषां मते "सुप आत्मनः क्यच्" इतिसूत्रभाष्यानुरोधेन धातोः फले व्यापारे च खण्डशः शक्तिस्वीकारेण विशेष्यविशेषणभावव्यत्यासादिति सिद्धान्तः ॥

अत्र नैयायिकाः—यत्नाश्रयस्य कर्तृत्वेन तत्राख्यातस्य शक्तावनन्तानां यत्नानां शक्यतावच्छेदकत्वे गौरवाद्यत्नत्वजातेः शक्यतावच्छेदकत्वे च लाघवात्पचतीत्यस्य पाकं करोतीति विवरणदर्शनेन पच्धातुप्रतिपाद्यस्य पाकशब्देनाख्यातप्रतिपाद्यस्य यत्नार्थकेन करोतिना विवरणेन विव्रियमाणस्याप्याख्यातस्य यत्नार्थकत्वावश्यकत्वाच्च । कर्तुः समभिव्याहृतप्रथमान्तपदेनाक्षेपेण वा लाभाच्चानन्यलभ्ययत्न एव शक्तिः । "प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थः प्रधानम्" इतिन्यायानुरोधेन प्रत्ययार्थे यत्ने प्रकृत्यर्थो व्यापारो विशेषणम् । प्रत्ययार्थो यत्नः संख्या चाक्षेपादिलभ्ये प्रथमान्तार्थे विशेषणम् । तथा च 'चैत्रस्तण्डुलं पचति' इत्यादिवाक्यतस्तण्डुलनिरूपिताधेयतावद्विक्लित्त्यनुकूलव्यापारानुकूलयत्नवानेकत्वविशिष्टश्चैत्र इति प्रथमान्तार्थमुख्यविशेष्यक एव बोध इत्याहुः ।

तत्रेदं वक्तव्यम्—शक्तिग्राहकशिरोमणिभूतेन व्याकरणेन बोधितायाः कर्त्तरि लकारशक्तेस्त्यागे को हेतुः । तथाहि "लः कर्मणि च भावे चाकर्मकेभ्यः" इति सूत्रं कर्तरि लकारशक्तिं ग्राहयति । तत्र हि "कर्त्तरि कृद्" इत्यतश्चकारेण कर्तरीत्यनुकृष्यते बोधकतारूपां तिबादिशक्तिं तत्स्थानित्वेन कल्पिते लकारे परिकल्प्य लकाराः कर्मणि

कर्त्तरि च तेन विधीयन्ते । नकारविसर्गादिनिष्ठां कर्मकरणादिबोधकताशक्तिमादाय शसादिविधानवत् । न च व्याकरणं न शक्तिग्राहकम् ; अपि तु साधुत्वमात्रार्थकमिति वाच्यम् । "शक्तिग्रहं व्याकरणोपमानेति" नैयायिकवृद्धोक्त्यसङ्गतेः । अर्थविशेषपुरस्कारेणैव साधुत्वस्य महाभाष्यसम्मतत्वाच्च "पदसमयपरिपालनाय व्याकरणं प्रवृत्तम्" इतिन्यायभाष्योक्तेश्च ॥

नच "द्व्येकयोर्द्विवचनैकवचने" "ब्रह्मणो जनपदाख्यायाम्" इत्यादौ भावप्रधाननिर्देशस्य सूत्रकृच्छैलीसिद्धत्वेन पक्ता देवदत्त इत्यादावभेदान्वयोपपत्तये "कर्त्तरि कृत्" इत्यत्र कर्त्तृपरत्वेन क्लृप्तस्याऽपि कर्त्तृपदस्योक्तरीत्या लाघवरूपविनिगमकसद्भावेन प्रकृते शब्दाधिकाराश्रयणेन धर्मपरत्वे ऋषिस्वारस्यानुमानेन न शक्तिग्राहकं व्याकरणमपि प्रतिकूलमिति वाच्यम् । कर्त्तरि शक्तिस्वीकारेऽप्युक्तरीत्याऽऽश्रयत्वस्य शक्यतावच्छेदकत्वकल्पनेन गौरवाभावात् । रथो गच्छति जानातीत्यादावगत्याऽऽश्रये आश्रयत्वे वा लक्षणायां लक्ष्यतावच्छेदकत्वस्येव शक्यतावच्छेदकत्वस्यापि गुरुणि स्वीकारे बाधकाभावाच्च । अन्यूनानतिप्रसक्तवृत्तित्वरूपस्यावच्छेदकत्वस्य गुरुण्यपि सत्वात् । अस्तु वा सभवति लघौ गुरौ नावच्छेदकत्वमिति, परन्तु यत्र लघुगुरुरूपाभ्यां बोधो निर्विवादस्तत्रैव लघुधर्मावच्छिन्ने शक्तिर्गुर्वच्छिन्ने लक्षणेति युक्तम् । प्रकृते च प्रत्ययात्कृतित्वेन बोधः सविवादः, धातुत एव तद्बोधात् । शब्दाधिकारस्यानेकशक्तिकल्पनादूषितत्वेन गौरवपराहतत्वाच्च । "अतो गुण" इत्यतोऽत इत्यनुवृत्त्यैव सिद्धे "अव्यक्तानुकरणस्य" इतिसूत्रेऽत इतिकरणेन शब्दाधिकारस्य प्रमाणसापेक्षत्वसूचनाच्च "ष्णान्ता षट्" इतिसूत्रभाष्ये "न चान्यार्थं प्रकृतमनुवर्तनादन्यद्भवति, नहि गोधा सर्पन्ती सर्पणादहिर्भवति"इत्युक्त्या शब्दाधिकारस्यावहेलनाच्च ॥ न च नायं सर्वथा शब्दाधिकारः, किन्तु पूर्वत्र विशिष्टपरस्य कर्तृपदस्य विशेषणमात्रपरत्वमिति वाच्यम् । एतस्याऽपि लक्षणामन्तरेणासंभवेनैवमपि वृत्तिद्वयकल्पनाया दुर्वारत्वात् । किञ्च पक्ता देवदत्त इत्यादावभेदान्वयानुरोधेन कृतः कर्त्तरि शक्तिरिव पचतिरूपं देवदत्त इत्यादावभेदान्वयानुरोधेन तिङोऽपि कर्त्तरि शक्तिरावश्यकी । ननु तिङ्प्रत्ययो न नामेतिचेत् तृनादिरपि नेतितुल्यम् । तृजाद्यन्तं नामेति चेत् रूपबाद्यन्तमपि नामेति तुल्यम् । युक्तं चैतत्, अन्यथाऽर्धमात्रालाघवेनापि पुत्रोत्सवं मन्यमानो भगवान् पाणिनिः कर्त्तरीत्युक्तावपि "लः कर्मणि" इत्यत्र लक्षणाया गले पतितत्वेन "स्वायत्ते शब्दप्रयोगे किमित्यवाचकं प्रयुञ्जमह" इतिन्यायविरोधस्य दुर्वारत्वेन "कर्तरि कृद्"इत्यत्रैव मात्रालाघवानुगृहीतामाश्रये लक्षणामभिप्रेत्य कृताविल्येव ब्रूयात् कर्तरीति त्यजेत् ॥

किञ्च कथंचिच्छब्दाधिकारमाश्रित्याऽपि लकाराणां कृतिवाचकत्वं दुर्वचम्, पचन्तं चैत्रं पश्य, पचते चैत्राय देहीत्यादौ शतृशानजादीनामपि तिबादिवल्लादेशत्वाविशेषेण तेभ्यः कृतिमात्रबोधापत्तेः । न चेष्टापत्तिः, तत्राभेदसंसर्गस्यैव वक्तव्यतया कर्त्तृवाचकत्वस्यैव त्वयाऽप्यभ्युपगमात् ।नामार्थयोरभेदस्यैव संसर्गत्वात् । नन्वत एव शत्रादीनां कर्त्तरि शक्तिः तिबादीनां कृतावेवेति वैषम्यमिति चेन्मैवम् । स्थान्येव वाचको लाघवान्नत्वादेशो गौरवादिति हि तव मतम् । अत एव राम इत्यादौ सुत्वेनैकत्वे शक्तिरित्यादिस्त्वदीयानां व्यवहारः । एवं स्थिते तिबादीनां शत्रादीनां च स्मारकतया लिपिस्थानत्वम् । बोधकस्तु लकार एव स च शत्राद्यन्ते कर्त्तरि शक्त इति

स्थिते तिङन्ते कथं कृतिं बोधयेत् "अन्यायश्चानेकार्थत्वम्" इति न्यायात् ॥ अथ वैयाकरणरीतिमाश्रित्य सर्वत्रादेशा एव वाचका इति ब्रूषे, तर्हि घटं घटेन हरेऽव विष्णोऽव इत्यादिषु "सर्वे सर्वपदादेशा,, इतिन्यायेन पदस्फोटो वाक्यस्फोटश्च सिद्ध्येदिति महत्तवानिष्टम् ॥ किञ्च "युष्मदि समानाधिकरणे मध्यमः" "अस्मद्युत्तम" इति सामानाधिकरण्यप्रयुक्ता पुरुषव्यवस्था कर्त्तुर्वाच्यतायां प्रमाणं प्रयुज्यमानाप्रयुज्यमानयुष्मदाद्यर्थगतसंख्याभिधायित्वे मध्यम इत्याद्यर्थंस्तु लक्षणामन्तरेण कर्त्तुमशक्यः। लक्षणायां तु लाघवानवसरः ॥ किञ्चाख्यातस्य कृतिवाचकत्वेऽभिधानानभिधानव्यवस्थोच्छेदापत्तिस्तथाच चैत्रः पचतीत्यादावपि तृतीयापत्तिः स्यात्। न च "कर्तृकरणयोस्तृतीया" इत्यादेः "द्व्येकयोर्द्विवचनैकवचने"इत्याद्येकवाक्यतया कर्त्तृगतैकत्वादिसंख्यायामन्येनानभिहितायां तृतीयेत्याद्यर्थान्नापत्तिरिति वाच्यम्। कृत्प्रत्ययस्य सङ्ख्यावाचकत्वाभावेन पक्वा देवदत्त इत्यादौ संख्यानभिधानेन तृतीयापत्तेः। न च "कर्त्तृकरणयोः" इत्यत्राऽपि भावप्रधाननिर्देशमाश्रित्य कृतावनभिहितायां तृतीयेत्येवार्थः। तिङा विशेष्यतया कृता विशेषणतया च कृतेरभिधानान्न पचति चैत्र इत्यादौ पक्वा चैत्र इत्यादौ च तृतीयापत्तिरिति वाच्यम्। क्रियते घटश्चैत्रेणेत्यादावपि तन्मते करोतेः कृतिवाचकत्वाविशेषेण धातुना कृतेरभिधानेन तृतीयानुपपत्तेः। "तिङ्कृत्तद्धितसमासै" रितिपरिगणनस्य "विषवृक्षोऽपि सम्वर्ध्य स्वयं छेत्तुमसांप्रतम्" "नारद इत्यबोधि स" इत्याद्यनुरोधेनोपलक्षणत्वात्। रथो गच्छतीत्यादौ, तण्डुलः पच्यते स्वयमेवेत्यादौ चाचेतने रथादौ कृतेर्बाधितत्वेनागत्याऽऽश्रये लक्षणाया अवश्याभ्युपेयत्वेन तत्र तिङा कृतेरनभिधानेन रथादेस्तृतीयापत्तेश्च "कर्त्तृकरणयोः" इत्यत्र कर्त्तृपदस्याश्रयकृत्युभयपरत्वेनानभिहित आश्रयेऽनभिहितायां कृतौ च तृतीयेत्यर्थस्तु दुर्वचं इति न तावता रथादेस्तृतीया वारयितुं शक्यते ॥

किञ्च कर्त्तुरवाच्यत्वे साकर्यातिशयद्योतनेऽकर्मकात्पचतेर्भावे लकारे पच्यते ओदनेनेत्यादौ कर्मवद्भावेन 'ओदनपदाद्द्वितीयापत्तिः। नच ततः परत्वात्तृतीयया भाव्यम्। अतिदिश्यमानधर्मविरुद्धस्वाश्रयधर्मप्रयुक्तकार्याभावस्यातिदेशस्वभावसिद्धत्वात् । कर्त्तुः कुत्रापि लकारवाच्यत्वाभावेन "कर्मवत्कर्मणा" इत्यनेन लकारवाच्यस्यैव कर्त्तुः कर्मवद्भाव इत्यस्य वक्तुमशक्यत्वात् ॥ किञ्चाख्यातस्य कृतिवाचकत्वे पाचक इत्यस्य पचतीति विवरणं न स्यात्। असमानार्थत्वात्। किञ्च कृतिवाचकत्वे कृतित्वं शक्यतावच्छेदकमाश्रयत्वमाश्रयत्वत्वञ्च लक्ष्यतावच्छेदकं कृतिश्च शक्यतावच्छेदिकेति गौरवम्। आश्रयवाचकत्वे तु सर्वत्राश्रयत्वमेव शक्यतावच्छेदकमिति लाघवम् ॥

किञ्च कृतिवाचकत्वे कालस्य क्वचित्समानप्रत्ययोपात्तायां कृतावन्वयः, क्वचिच्च रथो गच्छतीत्यादौ धात्वर्थव्यापार इति आख्यातार्थकालनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधं प्रति आख्यातजन्यकृत्युपस्थितिर्धातुजन्यव्यापारोपस्थितिश्च कारणमिति परस्परजन्यशाब्दबोधे व्यभिचारादिवारणाय चाव्यवहितोत्तरत्वादिप्रवेशेन गौरवम्। आश्रयवाचकत्वे तु सर्वत्र व्यापार एव कालान्वयेनैक एव कार्यकारणभाव इत्यतिलाघवम् ॥ किञ्च कृतिवाचकत्वे आख्यातार्थसंख्यायाः समभिव्याहृतप्रथमान्तार्थे एवान्वयादाख्यातार्थसंख्यानिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधं प्रति प्रथमान्तपदजन्योपस्थितेः कारणत्वम्। तदपि 'देवदत्तो

भुक्त्वा व्रजति,, "चैत्र इव मैत्रो गच्छति' इत्यादौ क्त्वार्थवार्थयोराख्यातार्थसंख्या-न्वयवारणायेतराविशेषणत्वघटितं वाच्यम् । तत्रेतरत्वेन जगतः प्रवेशान्महद्गौरवम् ॥

किञ्च यत्नस्यापि व्यापारविशेषरूपतया धातुनैव लाभसंभवात्तत्राख्यातस्य शक्तिकल्पनमयुक्तम् । "अनन्यलभ्यो हि शब्दार्थ" इति न्यायात् ॥ न च सत्यपि गौरवे पचतीत्यस्य पाकं करोतीति विवरणानुरोधेनाख्यातस्य कृतिवाचकत्वमुपेयत इति वाच्यम् । करोतेर्यत्नार्थकताया असिद्धेः । कथमन्यथा "रथो गमनं करोति,, "बीजेनाङ्कुरः कृत, इत्याद्युपपद्येत, अचेतने रथादौ कृतेर्बाधाद् ॥ किं चैवं जानातेरिव करोतेरपि कर्तृस्थभावकत्वाविशेषेण कर्मवद्भावानुपपत्त्या ज्ञायते घटः स्वयमेवेतिवत् क्रियते घटः स्वयमेवेत्यपि न स्यात्, तत्र तत्रोत्पत्त्यनुकूलव्यापारे लक्षणाभ्युपगमस्तु गौरवेणैव पराहन्तव्यः । व्यापारसामान्यार्थकेन यत्नार्थकेन वा प्रकृतिभूतेन करोतिना विवरणमपि न पचतीत्यादौ तिङर्थस्य, किन्तु प्रकृतिभूतधात्वर्थस्यैव तत्र पाकशब्दस्य विक्लित्तिफलमात्रार्थकत्वेन करोतेश्च व्यापारसामान्यार्थकत्वेन धातोरंशद्वयस्योभाभ्यां विवरणात् । नचैवं काष्ठैः पाक इति न स्यादिति वाच्यम् । करोतिसमभिव्याहृतपाकपदस्यैव फलमात्रवाचकत्वात् ॥ कथमन्यथा पक्ववानित्यस्य पाकं कृतवानिति विवरणं, किं कृतमिति प्रश्नस्य पक्वमित्युत्तरमपि संगच्छेत । अत एव "कथं ज्ञायते क्रियावचनाः पचादय इति यदेषां करोतिना सामानाधिकरण्यम्, किं करोति पचति,, इति भूवादिसूत्रभाष्ये उक्तं संगच्छते ॥

किं च करोतेर्यत्नार्थकत्वे यत्नवाचकत्वाविशेषेण यततेरिवाकर्मकतापत्तिस्तथाच घटे यतते इतिवद्घटे करोतीत्यप्यापद्येत । न च करोतेरुत्पत्त्यनुकूलयत्नवाचकत्वेन न यततिसमकक्षता न वा क्रियते घटः स्वयमेवेत्यस्यानुपपत्तिः । उत्पत्तेः कर्मस्थत्वादिति वाच्यम् । एवं सति रथो गमनं करोतीत्याद्यनुरोधेन व्यापारार्थकत्वस्याप्यवश्याभ्युपेयत्वेन 'व्यापारत्वेन' व्यापारान्तरस्येव यत्नस्यापि वाचकत्वमभ्युगच्छतां शाब्दिकानां मतादविशेषात् ॥

न च कृधातोः क्तिन्प्रत्ययेन निष्पन्नात्कृतिशब्दाद्यत्नप्रतीतेः करोतेर्यत्नार्थकतोपेयत इति वाच्यम् । करोतेरेव मनिन्प्रत्ययेन निष्पन्नात्कर्मशब्दाच्छप्रत्ययेन निष्पन्नात्क्रियाशब्दाच्च क्रियायाः प्रतीतेस्तदर्थकत्वस्यैव युक्तत्वात् कृतिशब्दाद्यत्नप्रतीतेर्धातूनामनेकार्थकत्वेनाप्युपपत्तेः । किञ्च प्रत्ययार्थप्राधान्ये "भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानि" इति यास्कवचनविरोधः । न च निरुक्तस्य भावशब्देन भावयति क्रियामुत्पादयतीति व्युत्पत्त्या यत्न एवोच्यत इति न तद्विरोध इति वाच्यम् । आख्यातसामान्यलक्षणस्य भावाख्यातेऽव्याप्तेः । 'चैत्रेण सुप्यत' इत्यत्र धात्वर्थविशेष्यतायास्तैरप्यङ्गीकारात् । अन्यलभ्यस्य तस्य शास्त्रबलात्प्रत्ययार्थत्वस्याऽप्यङ्गीकारे कर्तृकर्मणोरपि शास्त्रबलात्तद्वाच्यता दुर्वारैव "अकर्त्तरि च कारके संज्ञायाम्" इत्युक्तेर्भावशब्दे कर्त्तरि घञो दुर्लभत्वाच्च । पचादि पाठकल्पने प्रमाणविरहाच्च । 'क्रियाप्रधानमाख्यातम्" इति रूपप्सूत्रस्थभाष्यविरोधस्यैवमपि दुष्परिहरत्वाच्च ।

नचाख्यातशब्दस्य "सर्वमाख्यातजन्नाम" इति "उणादय" इति सूत्रभाष्ये-"नामान्याख्यातजानि" इति शाकटायनोक्तौ च धातावपि प्रयोगदर्शनेन आख्यातं धातुः भावप्रधानं फलव्यापारयोरर्थयोर्मध्ये भावप्रधानमित्येवार्थः । किञ्च बहुव्रीहितत्पुरुष-

स्य लघुत्वेन भावाद्भावस्य वा प्रधानमाख्यातमित्यर्थसम्भवेन धात्वर्थभावनिरूपितं प्राधान्यमाख्यातस्येत्येव लभ्यते । यास्कवचनेन आख्यातशब्दस्य तिङि प्रयोगस्तु "आख्यातमाख्यातेन" इत्यादौ प्रसिद्ध एव । तत्र तिङन्तमित्यर्थस्तु प्रत्ययग्रहण-परिभाषालभ्य एव । "कर्तृकरणे कृता" इतिवदिति न तत्र शक्तेरुपयोग इति न निरुक्तविरोध इति वाच्यम्, "पचादिक्रिया भवतिक्रियायाः कर्त्र्यो भवन्ति" इति भूवादिसूत्रस्थभाष्यप्रामाण्येन तिङन्तजन्यबोधे भावप्राधान्य एव निरुक्तस्य तात्पर्यात् । धात्वर्थव्यापारापेक्षतिङर्थकृतिप्राधान्ये निरुक्तस्य तात्पर्यकल्पने तिङर्थकृतेः प्रथमान्तार्थ एवाकाङ्क्षावशेनान्वयस्य भवदभिलषितत्वेन प्रथमान्तार्थमुख्यविशेष्यक-बोधापत्तौ "पश्य मृगो धावति" इत्यादौ अन्तरङ्गादुपजीव्यादपि प्रधानकार्यस्य बल-वत्त्वस्य "हेतुमति च" इति सूत्रे भाष्ये प्रतिपादनेन मृगपदाद् द्वितीयापत्तेः । न च 'पश्य मृग' इत्यत्र तमिति कर्माध्याहार्यम् । वाक्यभेदापत्तौ भाष्यसिद्धैकवाक्यता-भङ्गापत्तेः । न च वाक्यार्थभूतधावनानुकूलव्यापारानुकूलकृतिविशिष्टस्य मृगस्य दर्शन-कर्मतयाऽन्वयेन वाक्यस्याप्रातिपदिकत्वेन न द्वितीयापत्तिः । न वा वाक्यभेदो, नापि कर्मतासम्बन्धेन तण्डुलस्य पाकेऽन्वयतात्पर्येण 'तण्डुलः पचति' इति वाक्यस्य प्रा-माण्यवारणायावश्यकतया "नामार्थधात्वर्थयोर्भेदेन साक्षादन्वयोऽव्युत्पन्न" इति व्युत्पत्त्या विरोधः । अथवा मृगस्य पूर्वं धावतीत्यनेनान्वयेन तिङ्समानाधिकरणे प्रथमा" इति वार्त्तिकात्प्रथमाया उपपत्तौ पश्चाद्दृशिना केवलस्य मृगस्यान्वयेऽपि न द्वितीया । प्रत्ययान्तत्वेनाप्रातिपदिकत्वादिति वाच्यम् । उत्कटधावनकर्मकदर्शन-प्रतिपिपादयिषयैव 'पश्य मृगो धावति' इति प्रयोगेण तद्विरोधात् सुबन्तार्थस्य कर्म-त्वादिना क्रियायामन्वये निराकाङ्क्षत्वाच्च । अन्यथा घट इति परिनिष्ठितस्य कर्मतया ऽन्वयेन घटः पश्यति इति प्रयोगापत्तेः । न च कृतौ विशेषणस्यापि धावनस्य दर्शनेऽ-न्वयः कर्तुं शक्यते । एकत्र विशेषणतयाऽन्वितस्यापरत्र विशेषणत्वायोगात् । अत एव वह्निमान्नास्ति' इति वाक्याद्वह्निमत्त्वावच्छिन्नप्रतियोगिताकाभाव एव बोध्यते । न तु वह्नित्वावच्छिन्नप्रतियोगिताकाभावोऽपि । धावनानुकूलव्यापारानुकूलकृतिवि-शेषितमृगस्य कर्मतया दर्शनेऽन्वयस्य दुर्घटत्वाच्च । तस्य वाक्यार्थत्वेन विशिष्टो-पस्थापकपदाभावात् पदज्ञानस्योपस्थितिद्वारा शाब्दबोधहेतुत्वेन नित्यो घट इत्या-दिवाक्यस्य प्रामाण्यवारणाय पदार्थः पदार्थेनान्वेति, नत्वपदार्थो न वा पदार्थताव-च्छेदकम्, नत्वपदार्थेन, नवा पदार्थतावच्छेदकेन" इति स्वीकारेण विशेष्यतासम्ब-न्धेन प्रकारतासम्बन्धेन वा शाब्दबोधं प्रति विशेष्यतासम्बन्धेन पदजन्यतादृशोप-स्थितेर्हेतुत्वात् । किञ्च विशिष्टस्य कर्मतयाऽन्वयाऽभ्युपगमे

"कूजन्तं राम रामेति मधुरं मधुराक्षरम् ।
आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ।

इत्यादौ कूजनकर्तृत्वविशेषितवाल्मीकिपदार्थस्य वन्दनेऽन्वयेन 'पश्य मृग' इत्य-तोऽविशेषेण द्वितीया न स्यात् । किञ्चैवं 'नीलो घटः करोति' इति वाक्यस्यापि प्रामाण्यप्रसङ्गः । न च दृशधातोरेव धावनकर्तृत्वविशिष्टमृगकर्मकदर्शने लक्षणा । अन्यानि पदानि तात्पर्यग्राहकाणीति वाच्यम् । सत्यां तात्पर्यानुपपत्तावेव लक्षणास्वी-कारात् । एवं यथेच्छलक्षणाऽभ्युपगमे "सहचरण-स्थान-तादर्थ्य-वृत्त-मान-धारण-सामीप्य-योग-साधना-पत्येभ्यो ब्राह्मण-मञ्च-कट-राज-सक्तु-चन्दन-गङ्गा-शाट-

कान्न–पुरुषेष्वतद्भावेऽपि तदुपचारः" इति गौतमोक्तपरिगणनभङ्गापत्तेश्च ॥ किंच-लक्षणास्थले कुत्राऽपि पदान्तरस्य न तदर्थप्रत्यायकत्वम् , किन्तु गौतमसूत्रे "तदुपचार" इति श्रुतेस्तीरादौ गङ्गात्वमारोप्य गङ्गात्वेनैव बोधः । अत एव न नपुंसकह्रस्वत्वम् । अत एव च 'गङ्गायां मीनघोषौ स्त' इत्यपि संगच्छते । अन्यथा गङ्गापदस्य तीरार्थकत्वे मीनाधारत्वासम्भवः । प्रवाहार्थकत्वे घोषाधारत्वासम्भवः । युगपद्वृत्तिद्वयकल्पनं तु न सम्भवत्येव । पदानां सति सार्थकत्वसम्भवे तात्पर्यग्राहकत्वमात्रकल्पनाया अन्याय्यत्वाच्च ॥न चैवं वाक्यार्थस्यान्वयानभ्युपगमे

'श्रुत्वा ममैतन्माहात्म्यं तथा चोत्पत्तयः शुभाः' ।
"पश्य लक्ष्मण पम्पायां बकः परमधार्मिकः' ॥
"देवाकर्णय संग्रामे रामेणासादिताः शराः" ।
"जानामि सीता जनकप्रसूता जानामि रामो मधुसूदनश्च" ॥

इत्यादिशिष्टप्रयोगाणां गतिविरह इति वाच्यम् । हृदिस्पृक् दिविस्पृगित्यादौ कर्मणि सप्तमीवत् उत्पत्तय इतिकर्मणि प्रथमेति सप्तशतीस्तोत्र नागेशगदाधरादिभिरभिहितत्वात् । पश्य लक्ष्मण पम्पायामित्यस्य—

शनैः शनैः पदं धत्ते जीवानामनुकम्पया ।
पश्य लक्ष्मण पम्पायां बकः परधार्मिकः ॥

इत्याकारकस्यैव श्लोकस्य श्रुतत्वेन परमधार्मिकबककर्तृकजीवानुकम्पाप्रयोज्यशनैःशनैःपदधारणकर्मकदर्शनस्यैव प्रतिपिपादयिषितत्वेन 'पश्य मृगो धावति' इत्येतत्समत्वात् । देवाकर्णयेत्यत्रापि "तिङ्समानाधिकरणे प्रथमा"इति वार्त्तिकानुरोधेन सन्तीत्यस्याध्याहारस्यावश्यकत्वेन रामकर्तृकासत्तिविशिष्टशरकर्तृकसत्ताकर्मकाकर्णनस्यैव शब्दतः प्रतिपिपादयिषितत्वात् । जानामि सीतेत्यत्र जानामि सीतां जनकप्रसूतामित्यादि द्वितीयान्तपाठेऽपि छन्दोऽहानेः । सीतेत्यादिप्रथमान्तपाठस्य क्वचिदुपलम्भेऽपि लेखकप्रमादपतितत्वकल्पनात् ॥ न चैवं वाक्यार्थस्यान्वयाऽनभ्युपगमे "सपर्यया साधु स पर्यपूपुजत्"

"जगाद मधुरां वाचं विशदाक्षरशालिनीम्" ।
"स जगदे वचनं प्रियमादरान्मुखरताऽवसरे हि विराजते" ॥

इत्यादिप्रयोगेषु अर्घ्यादिकत्वविशेषितसपर्यापदार्थस्य पूजने मधुरत्वविशेषितवाक्पदार्थस्य गदधात्वर्थे प्रियत्वविशेषित–वचनपदार्थस्य च गदधात्वर्थेऽभेदेनान्वयः । कथं निर्वहेत् विशेषणरहितसपर्यादेः पूजनादावन्वयस्य 'घटो घट' इत्यादिवदव्युत्पन्नत्वादिति वाच्यम् । धातूनामनेकार्थकत्वेन तत्र पूजयतेः सत्कारार्थकत्वस्य गदधातोरुच्चारणार्थकत्वस्य कल्पनेनोपपत्तेः । जगाद मधुरामित्यादौ माधुर्यविशिष्टवागादेरभेदेन गदादिधात्वर्थेऽन्वयाभ्युपगमे मृदु पचतीत्याद्यनुरोधेन तार्किककल्पितेन "क्रियाविशेषणानां कर्मत्वं क्लीबत्वं च" इति वचनेन नपुंसकत्वापत्तेश्च । वाक्यस्फोटसिद्धान्तशालिनां शाब्दिकानां मते वाक्यशक्तेरभ्युपगमेन शाब्दबोध आकाङ्क्षाज्ञानस्य हेतुत्वानभ्युपगमेन वाक्यार्थान्वयस्याऽपि सम्भवाच्च ॥

यत्तु 'पश्य मृगो धावति' इत्यादौ धावनस्य कर्मतासम्बन्धेन दृशिक्रियायामन्वयो न सम्भवति । "न हि क्रिया क्रियान्तरसमवायं गच्छति" इति "सार्वधातुके यक्" इति सूत्रस्थभाष्यप्रमाण्येनैकस्याः क्रियायाः क्रियान्तरेऽन्वयस्याव्युत्पन्नत्वात् । अन्यथा

चन्दनसंयोगजन्यसुखतात्पर्येण "चन्दनं संयुनक्ति सुखयतीति" तन्तुनाशप्रयोज्यपटनाशतात्पर्येण "तन्तुर्नश्यति पटो नश्यतीति" नाशोद्देश्यकगमनतात्पर्येण "नश्यति गच्छतीति" व्रजनविषयकश्लाघातात्पर्येण "व्रजति श्लाघयतीति" चैत्रगमनद्वेषतात्पर्येण-"चैत्र आगच्छति द्वेष्टीति" शिष्यपाठेच्छातात्पर्येण "शिष्याः पठन्त्विच्छति गुरुः" इत्यादिप्रयोगापत्तेरित्याहुः । तदसत् । तिङ्प्रकृतिधात्वर्थस्य ज्ञानार्थकधातुभूधात्वर्थयोरेव भेदसम्बन्धेनान्वये साकाङ्क्षत्वमित्यत्रैव भाष्यस्य तात्पर्यात् । "जानीहि जानकि न जीवति रामचन्द्रः" जानीहि जगन्नाथाज्जायते जगत्" । "पश्य मृगो धावति' "पचति भवति" इत्यादावेव तथाऽन्वयस्य दर्शनात् । "याहि याहि याति । इत्यादावभेदान्वयस्य दर्शनाच्च ।

हरिं नमेच्चेत्सुखं यायादित्यादौ हेतुहेतुमद्भावादिनाऽन्वये तु लिङादिसमभिव्याहार एव हेतुः । अत एव भूवादिसूत्रे भाष्ये—"पचादयः क्रिया भवतिक्रियायाः कर्त्र्यो भवन्ति" इत्येवोक्तम् , न तु भवत्यादिक्रियाया इति । यद्यपि क्रियायाः प्राधान्ये

"प्रयाति पुरुषस्तस्य पादयोरभिवादय" । इत्यादौ ।

"सुरथो नाम राजाऽभूत्समस्ते क्षितिमण्डले ।

तस्य पालयतः सम्यक्

इत्यादौ च तत्पदेनाप्रधानत्वात्पुरुषसुरथयोः परामर्शो न स्यादित्याहुः । तदपि—

हिमांशुमाशु ग्रसते तन्म्रदिम्नः स्फुटं फलम् ।

इत्यत्र तच्छब्देन ग्रसनपरामर्शो न स्यादित्यनेनैव पराकरणीयम् ॥ तस्मात्सर्वनाम्नामुत्सर्गतः प्रधानपरामर्शित्वमित्यत्र प्रधानत्वं वृत्तिग्रहमुख्यविशेष्यत्वमेव वाच्यम्, न तु शाब्दबोधीयमुख्यविशेष्यत्वम् , तच्च पुरुषसुरथग्रासादीनामस्त्येवेति न क्वाचिदनुपपत्तिः । नवा 'शोभना गङ्गा तां पिब' इत्यादीनां प्रयोगाणामापत्तिश्च । अत एव ।

पटोलपत्रं पित्तघ्नं मूलं तस्य कफापहम्' ।

"दृश्यते राजमातङ्गास्तस्यैवामी तुरङ्गमाः ।

चैत्रो ग्रामं गतस्तत्र मैत्रः किं कुरुतेऽधुना ॥

अप एव ससर्जादौ तासु वीर्यमवासृजत् ।

नीलो मणिर्गणः सोऽत्र दात्रादिर्बोध्यते तदा ॥

इत्यादयः सङ्गच्छन्ते । अत एव च महाभाष्ये—"अथ शब्दानुशासनम्" केषां शब्दानामिति प्रश्नः सङ्गच्छते । यदपि क्रियायाः प्राधान्ये "अश्वो धावत्यानय" "मृगो धावति मारय" इत्यादयः प्रयोगा न संगच्छेरन्निति कश्चिदाक्षिप्तम् , तदपि प्रथमान्तार्थप्राधान्यान्न । 'शृणु मेघो गर्जति' 'निवारय देवदत्तः प्रलपति' इत्याद्यसङ्गतितुल्यसमाधानम् । तस्मात्स्वकपोलकल्पनया न प्रयोगव्यवस्थाऽऽस्थेयेत्येव श्रेयः, स्थितस्य गतिश्चिन्तनीयेति न्यायात् ।

किञ्च यत्किञ्चिदभेदसम्बन्धेनैकविशेषणविशिष्टे तत्सजातीयसम्बन्धेन विशेषणान्तरान्वयोऽव्युत्पन्नः । अत एव समवायेन घटत्वविशिष्टे घटे समवायेन द्रव्यत्वस्यान्वयतात्पर्येण घटो द्रव्यत्वस्य' इत्यादयो न प्रयोगाः । तथाच समवायेनैकत्वविशिष्टे चैत्रे समवायेन कृतेरन्वयस्यैवासम्भवेन क्व प्रथमान्तार्थविशेष्यकबोधस्यावसरोऽप सम्भवेत् । न चेदृशव्युत्पत्त्यभ्युपगमे वृत्तित्वसम्बन्धेन वर्तमानकालविशिष्टे व्यापारे

कथं तेनैव सम्बन्धेन तिङर्थाश्रयान्वयो भवदभिमतः सिद्ध्येदिति वाच्यम् । तत्र व्यापार आश्रयस्य जन्यत्वसम्बन्धेनैवान्वयाभ्युपगमात् ।

अथ पचतिभवतीत्यतो विक्लित्त्यनुकूलव्यापारकर्तृकसत्ताविषयकबोधोपगमे समानवाक्ये तिङ्द्वयलाभेन तत्र निघातव्यावृत्त्यर्थं "तिङ्ङतिङ" इति सूत्रेऽतिङ्ग्रहणस्यावश्यकत्वेन तत्प्रत्याख्यानपरभाष्यविरोध इति चेद्? न । लौकिकैकवाक्यत्वसत्त्वेऽपि "एकतिङ् वाक्यम्" इति परिभाषितस्य तस्यासत्त्वेन प्रत्याख्यानसंगतेः । न च सर्वत्र व्यापारविशेष्यकबोधमभ्युपगच्छता 'न पचति चैत्रः' इत्यतश्चैत्राभिन्नाश्रयाभाववान् विक्लित्त्यनुकूलो व्यापार इति बोधोऽभ्युपेतव्यः । अभावश्च वृत्तित्वसम्बन्धावच्छिन्नप्रतियोगिताको वक्तव्यः, स च न सम्भवति । वृत्तित्वस्य वृत्त्यनियामकतयाभावप्रतियोगितावच्छेदकत्वादिति वाच्यम् । पारिमाण्डल्येन न घट इत्यत्र जन्यत्वस्य तृतीयार्थतया पारिमाण्डल्यनिरूपितजन्यत्वस्याप्रसिद्धत्वेन तादृशजन्यत्वनिष्ठाश्रयत्वसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य वक्तुमशक्यत्वेन निरूपितत्वसम्बन्धावच्छिन्नपारिमाण्डल्यनिष्ठप्रतियोगिताकाभावस्यैव तृतीयार्थजन्यत्वेऽवश्यवक्तव्यत्वेन वृत्त्यनियामकसम्बन्धस्याप्यभावप्रतियोगितावच्छेदकत्वस्वीकारात् । वृत्तित्वे वृत्त्यनियामकतायाः सविवादत्वाच्च । 'न पचति चैत्र' इत्यतश्चैत्राभिन्नाश्रयवृत्तिविक्लित्त्यनुकूलव्यापाराभाव इति बोधस्यैवाभ्युपगमाच्च । शाब्दिकमते व्यापारविशेष्यक एव बोध इत्युद्घोषस्य नञसमभिव्याहारस्थलनियतत्वाच्च ॥

न चैवमपि व्यापारविशेष्यकबोध इति प्रवादः । त्रयः काला इत्यतः प्रथमान्तार्थविशेष्यकबोधस्यैव सत्त्वेन व्यभिचरित एव । न च तत्र क्रियाध्याहारः सम्भवति । त्रयाणां कालानामविद्यमानत्वेन सन्तीत्यस्याध्याहर्तुमशक्यत्वात् । क्रियान्तराध्याहारस्य "अस्तिर्भवन्तीपर" इति कात्यायनवचनविरुद्धत्वाच्चेतिवाच्यम् । अस्तिर्भवन्तीतिवचनस्थास्तिपदस्यान्वययोग्यक्रियावाचकधातुमात्रोपलक्षणत्वेन 'त्रयः काला' इत्यत्रेश्वरेण ज्ञायन्त इत्यस्याध्याहारेण क्रियाविशेष्यकबोधप्रवादपरिरक्षणात् ।

युक्तं चैतत्; कथमन्यथा ईश्वरो जानातीत्यस्याध्याहारमन्तरेण "चैत्रेण सुप्यत" इत्यादावगत्या क्रियाविशेष्यकबोधाभ्युपगमे प्रथमान्तार्थविशेष्यक एव सर्वत्र बोध इति भवत्सिद्धान्तसिद्धः प्रवादो न व्यभिचरेदिति विभाव्यताम् ॥

अथ सर्वत्र क्रियाविशेष्यकबोधस्यैवाभ्युपगमे द्वित्वकत्वयोर्बहुवचनविधायकेन "अस्मदो द्वयोश्च" इति सूत्रेण 'पटुरहं ब्रवीमि' इत्यत्र पाक्षिकबहुवचनवारणायारब्धे "सविशेषणानां प्रतिषेधः" इति वार्त्तिके जागरूके 'के यूयं, मैथिला वयम्' इति प्रश्नोत्तरवाक्ये ।

"तव गुणविलिखनहेतोर्वयमपि कुब्जाः किमौदास्यम्"

इति कविप्रणीतवाक्ये च बहुवचनानुपपत्त्या क्रियायोग एव स निषेध इत्यवश्यवक्तव्यम् । तथा च तत्र तत्र क्रियाध्याहारे बहुवचनानुपपत्तिः । अनध्याहारे सर्वत्र क्रियाविशेष्यक एव बोध इति नियमासङ्गतिरिति सेयमुभयतस्पाशारज्जुरिति चेद् ? नैवम् । "तिङ्समानाधिकरणे प्रथमा" "अभिहिते प्रथमा" इति,, वार्त्तिकस्वारस्येन क्रियाध्याहारस्यावश्यकतया उक्तवाक्यद्वये उद्भूतावयवभेदविवक्षायां बहुवचनस्य साधुत्वकल्पनात् । स निषेधस्तु मुख्यार्थकस्यैव । अत एव—

त्वं राजा वयमप्युपासितगुरुप्रज्ञाभिमानोन्नता ।

इत्यादावपि बहुवचनं सङ्गच्छते ॥

अथ प्रथमान्तार्थस्य प्राधान्यादेव पुत्रमिच्छति पुत्रीयतीतिवदिष्यते पुत्र इत्यर्थे न क्यच्, भिन्नार्थत्वात्" इति भाष्यं संगच्छते । तत्र हि भिन्नार्थत्वं कर्तृप्रत्यये व्यापाराश्रयस्य प्राधान्येन कर्मप्रत्यये फलाश्रयस्य प्राधान्येनैव सम्भवतीति चेद् ? मैवम् । "सुप आत्मन" इति सूत्र इच्छायामित्यस्यानुवृत्तेरिच्छानुकूलव्यापारार्थे एव क्यचो विधानेन कर्मप्रत्यये व्यापारजन्येच्छाया एव बोधेन गुणप्रधानभावव्यत्यासकृतभिन्नार्थत्व एव भाष्यस्य तात्पर्येण तत्सङ्गतेः ॥

अथ तिङर्थस्याप्राधान्ये "तदधीते तद्वेद,, इत्यनेन विहितेन वैयाकरण इत्यादावणाऽध्येतुर्वेत्तुर्वा बोधो न स्यात्; क्रियायाः प्राधान्येन तस्या एव तद्धितप्रत्ययवाच्यत्वादिति चेत्सत्यम्, तद्धितस्थले विशेष्यविशेषणभावव्यत्यासस्य "क्वचिद्गुणप्रधानत्वमर्थानामविवक्षितम्' इत्युपक्रम्य ।

"आख्यातं तद्धितकृतोर्यत्किञ्चिदुपदर्शकम् ।
गुणप्रधानभावादौ तत्र दृष्टो विपर्ययः,,

इति कारिकया हरिणा स्पष्टमभिधानात् ॥ भाष्येऽपि—"तद्वहति" इति सूत्रे वहत्यर्थे रथादिभ्यः प्रत्ययविधिरनर्थकः "तस्येदम्" इत्यधिकारस्थेन "रथाद्यत्" इत्यनेन विहितत्वादित्याशङ्क्य वहति वोढेति शब्दभेदान्न तेन सिद्धिरित्युक्त्वा शब्दभेदेऽप्यर्थसामान्यात्सिद्धम् । य एवार्थो रथं वहति स एवार्थो रथस्य वोढेति दृढीकृत्य द्विरथ्य इत्यादौ यतो लुगभावार्थं तदिति सिद्धान्तितम् । य एवार्थ इत्यादेः रथ्य इत्यस्य विग्रहभूते रथं वहतीत्यत्र योऽर्थः यावानर्थो विषयीक्रियते; स एव तावानेव तद्विग्रहभूते रथस्य वोढेत्यत्र विषयीक्रियते इत्येतावन्मात्रतात्पर्येण गुणप्रधानभावव्यत्यासकृतोऽर्थभेदो नाश्रयणीय इति स्पष्टमेव प्रतीयते ॥

एतेन य इदानीमप्रयुक्ताः शब्दा नामी साधवः स्युरित्युपक्रम्य ऊषेत्यस्यार्थे क्व यूयमुषिता इति, तेरेत्यस्यार्थे क्व यूयं तीर्णा इति, चक्रेत्यस्यार्थे क्व यूयं कृतवन्त इति, पेचेत्यस्यार्थे क्व यूयं पक्ववन्त इति पस्पशाभाष्येण प्रथमान्तार्थप्राधान्यलाभेन क्रियायाः प्राधान्ये तद्विरोध इत्याक्षिपन्तः परास्ताः ।

गुणप्रधानभावव्यत्यासस्य सोढव्यत्वात् । ऊषेत्यादिप्रतिपाद्यस्यार्थस्य वाक्यान्तरणार्थतोऽपि लाभ इत्यत्रैव भाष्यस्य तात्पर्येण क्व यूयमुषिता इत्यादीनां विवरणत्वाभावाच्च । विवरणत्वे च ऊषेत्यादिना किं शब्दार्थस्य युष्मच्छब्दार्थस्य चास्पर्शेन तवाऽप्येतद्भाष्यासङ्गतिर्दुर्वारैव । तस्मादूषेत्यत्र लिटा प्रतीयमानं क्रियागतं यद्वक्तृपरोक्षत्वं तत्क्रियाप्रतिपाद्यत इति त्वयाऽपि वाच्यम् । तच्च परोक्षत्वे किमः शक्त्यभावादार्थिकमेव किमः प्रश्नविषयार्थकत्वेन प्रश्नस्य चानुभूतविषयकताया एव दर्शनेनार्थतः पर्यवसानात् । अत एव तत्र कैयटेन यद्यपि ऊषेति ऊषिता इत्यनेन सामानार्थो न भवति परोक्षत्वादेर्विशेषस्यानवगमात्, तथापि तत्प्रत्यायकपदान्तरसहितः प्रयुज्यत इत्युक्तम् ॥ क्रियायाः प्राधान्यादेव नोपमानत्वं तस्याः सिद्धत्वेनाभावात् । कर्त्तुस्तु क्रियां प्रति विशेषणत्वात् । तदुक्तं सनूसूत्रे भाष्ये—"न वै तिङन्तेनोपमानमस्ति" इति,, "किंतु सम्भावनार्थमिव शब्दस्तत्र तत्र" इति कैयटः । तिङन्तेन शब्देनोपमानबोधो नास्तीति तद्भाष्यार्थः ॥ "अनद्यतन" इति सूत्रे च भाष्ये—"अयं तु गन्ता यदेवं पादौ निदधातीत्यादौ अनद्यतनभविष्यद्विषये लुट्कथमित्याशङ्क्य गन्तेव गन्तेत्यर्थे नवै तिङन्तेनोपमानमस्तीति सूचयित्वा अनद्यतन इवानद्यतन इति व्याख्यातम् ।

प्रयोगदर्शनवशाद्गौणेऽप्यनद्यतने प्रत्यय इति कैयटे च ॥ उपमेयत्वं तु क्रियाया अपि भवत्येव, ब्राह्मणवदधीत इत्यादावध्ययनस्योपमेयत्वेन प्रतीतेः । नचाध्ययने ब्राह्मणसादृश्याभाव इति वाच्यम् । ब्राह्मणपदस्य तत्कर्तृकाध्ययने लाक्षणिकत्वात् ॥

आलङ्कारिका अपि—

"लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।
असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता,,

इत्यादावनुक्तविषयत्वेनोत्प्रेक्षामेव वदन्ति ॥ काव्यप्रकाशे मम्मटाचार्यरपि व्यापनादि लेपनादिरूपतया संभावितमित्येवोक्तम् ॥

हरिरप्याह—

साध्यस्यापरिनिष्पत्तेः सोऽयमित्यनुपग्रहः ।
तिङन्तैरन्तरेणेवमुपमानं ततो न तैः ॥ इति ।

अनिष्पत्तेः सिद्धत्वेनाभानात् । तयोरिव मान्तरेण सिंहो माणवक इत्यादिवत् "पठति रोदिति" इत्यादौ सोऽयमित्यभिसंबध्यभावात्तिङन्तार्थौ नोपमानं यस्योपमानस्य इव मन्तरेण उपमेयेन सह सोऽयमित्यभिसंधिस्तस्यैव समभिव्याहार उपमानत्वेन प्रतीतिरित्यङ्गीकारात् ।

ननु रोदितीव पठतीत्यादौ कर्तुरेवोपमानत्वं भवतु, तस्य च सिद्धत्वेन भानादत आह—

"साधनत्वं प्रसिद्धं च तिङ्क्षु सम्बन्धिनां यतः ।
तेनाध्यारोप एव स्यादुपमा तु न कल्प्यते,, ॥

सम्बन्धिनां गुणाभूतानां साधनत्वं कारणत्वम् अध्यारोप उत्प्रेक्षा ॥

दण्डयप्याह—

"यद्युपमानत्वं स्याद्यद्भूतौऽसौ क्रियापदे स्वक्रियासाधनव्यग्रो नालमन्यमुपेक्षितुम्" इति,, ।

नन्वेवं स्वीकारे "स यथा वै श्येनो नियत्यादत्ते एवमयं द्विषन्तं भ्रातृव्यं नियत्यादत्ते यमभिचरति श्येनेन,, इत्यादावपि श्येनपदार्थायंपदार्थयोरप्युपमानोपमेयत्वेन प्रतीतिर्न स्यादिति चेन्न । यत्प्रकारकं श्येनकर्तृकं पक्ष्यादानं तत्प्रकारकमेतत्कर्तृकं भ्रातृव्यादानमिति बोधोत्तरं तमेव धर्मं निमित्तीकृत्य पश्चात्तयोरुपमानोपमेयभावः । सर्वत्रैव यथाशब्दसमभिव्याहारे बोधद्वयं बोध्यम् । एवं च न वै तिङन्तेनोपमानबोधोऽस्तीत्यनेन शाब्दस्यैव बोधस्य निषेध इति न किंचिदेतत् ॥ यथाशब्दशक्तिस्वभावात् । थालः सादृश्यार्थकत्वं तु न युक्तम् । यथा हरिस्तथाहर इत्यादितो यत्सदृशो हरिस्तत्सदृशो हर इति बोधेऽपि हरिसदृशो हर इत्यर्थालाभात् तस्मात्सादृश्यविशिष्टस्स्थाल्प्रत्ययार्थः येन प्रकारेणेति विग्रहवाक्ये तृतीयार्थो वैशिष्ट्यमिति दिक् ॥

अथ कर्तुराख्यातार्थत्वेऽपि क्रियाविशेष्यको बोधो न शक्यते वक्तुम् । "प्रकृतिप्रत्ययौ सहार्थं ब्रूत,, इति न्यायविरोधात् । तथा च प्रथमान्तार्थविशेष्यकबोध एवाञ्जसा स्वीकर्तव्य इति चेन्नैवम् । 'प्रकृतिप्रत्ययौ सहार्थं ब्रूत' इत्यस्य हि यः प्रत्ययार्थः स प्रधानमेवेति, यः प्रधानं स प्रत्ययार्थ एवेति वाऽर्थो न कर्तुं शक्यते । अजा अश्वा छागीत्यादौ स्त्रीत्वस्य प्राधान्यापत्तेरजादेस्तदनुपपत्तेश्च । किन्तु उत्सर्गोऽयम् । विशेष्यत्वादिना बोधस्तु आख्यातार्थकर्तृप्रकारकबोधे विशेष्यतया धातुजन्यभावनोपस्थितिर्हेतुरिति कार्यकारणभावमूलकव्युत्पत्त्यनुरोधात् ॥ अत एव प्रधानप्रत्ययार्थवचनमर्थस्या-

न्यप्रमाणत्वादित्याह भगवान् पाणिनिः । प्रधानं प्रत्ययार्थं इति वचनं न कार्यम् । अर्थस्य अर्थावबोधस्य अन्यप्रमाणत्वात् । व्युत्पत्त्यनुसारित्वादिति हि तदर्थः ॥

एतेन व्यापारस्य प्राधान्यानुरोधेन फलमात्रं धात्वर्थः, व्यापार आख्यातार्थं इति मीमांसकोक्तमपि प्रत्युक्तम् ।

फलमात्रस्य धात्वर्थत्वे ग्रामस्य संयोगाश्रयत्वेन ग्रामो गमनवानित्यादिप्रयोगापत्तेश्च । नच भावार्थकल्युटा फलानुकूलव्यापारप्रतीतेर्न ग्रामो गमनवानित्यस्यापत्तिरिति वाच्यम् । भावविहितप्रत्ययानां धात्वर्थानुवादकत्वेन प्रयोगसाधुत्वमात्रार्थकत्वमिति स्वसिद्धान्तविरोधापत्तेः ॥ नच पचतीत्यस्य पाकं करोतीति व्यापारसामान्यार्थककरोतिना विवरणदर्शनादाख्यातस्य व्यापारार्थकत्वमिति वाच्यम् । करोतिना धात्वर्थस्यैव विवरणात् । कथमन्यथाऽऽख्यातरहितस्य पक्ववानित्यस्य पाकं कृतवानिति विवरणं किं कृतमिति व्यापारविशेषविषयकप्रश्नस्य पक्कमित्युत्तरं च सङ्गच्छेत ॥ किंच तिङ्कृदुभयसाधारण्येन भावनायाः प्रतीतेरुभयसाधारण्येन धातुरेव तद्वाचक इति युक्तम् ॥ किं च फलमात्रस्य वाच्यत्वे क्रियावाचिनां विधीयमाणा धातुसंज्ञैव न स्यात् । तथा च संज्ञानिबन्धनाः प्रत्ययास्तेभ्यो न स्युः । नच तत्र क्रियाशब्देन फलमेव गृह्यत इति तद्वाचकत्वादेव धातुसंज्ञा सेत्स्यतीति वाच्यम् । एवं सति धात्वर्थत्वं क्रियात्वं क्रियावाचकत्वे सति भ्वादिगणपठितत्वं च धातुत्वमिति क्रियात्वग्रहे धातुत्वग्रहस्य धातुत्वग्रहे क्रियात्वग्रहस्य चापेक्षणेनान्योन्याश्रयापत्तेः । मम तु—

"यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते ।
आश्रितक्रमरूपत्वात्सा क्रियेत्यभिधीयते"

इति हर्युक्तेः । साध्यत्वेन प्रतीयमानत्वं क्रियात्वम्, तद्वाचकत्वे सति गणपठितत्वं च धातुत्वमिति लक्षणाऽभ्युपगमेन नान्योन्याश्रयस्य सम्भावनेत्यपरमनुकूलमित्यलं पल्लवितेनेति शिवम् ॥

इत्थं यथामति विभाव्य तिङर्थवाद-सारं विलिख्य विबुधाः समुपाहरामि ।
पश्यन्त्वमत्सरधिया सकलं भवन्तः खुद्दीबुधोऽहमिति साञ्जलिरर्थये च ॥ १ ॥

इति झोपनामकश्रीखुद्दीशर्ममैथिलमनीषिकृततिङर्थवादसारः ।

# अथ भूषणसारोल्लिखितग्रन्थकृतां विशेषमतान्तराणां च सूचकम् ।




| नाम-सम्बन्धसूचकं च | पृष्ठम् । |
|---|---|
| शब्दकौस्तुभः | ६, २३३।४२० |
| वाक्यपदीयम्(१) | १०।१२।१४।१८४।१९०। ३४८।४२४ |
| दर्शनान्तरीयरीतिः ( मीमांसकरीतिः ) | १७।१११ |
| मीमांसकाः | १८।६७।६९।१११।२५१ |
| बृहद्वैयाकरणभूषणम् | २५।९६ |
| नैयायिकादयः | २६।५१।५७।७२ |
| निरुक्तम् | ३३ |
| भाष्यम् | ६५।८८।९३।९६।१९३।१९७ |
| भट्टपादः | ७०।३७०।४०९ |
| नैयायिकनव्याः | ७२।९२ |
| भाट्टरीतिः | ७५।४०९ |
| सूत्रम् | ८० |
| वार्तिककारः | ९६।३४८ |
| हेलाराजीयम् | ९६ |
| नवमे ( मीमांसाध्याये ) | १०१ |
| अभियुक्ताः | १०८ |
| केचित् | १०९ |
| श्रुतयः | ११३।१२१ |
| किरणावली, उदयनः | १२४ |
| मण्डनमिश्रः | १३६ |
| भगवान् व्यासः | १६८ |
| उत्तरमीमांसाधिकरणे सूत्रकारः | १७४ |

| नाम-सम्बन्धसूचकं च | पृष्ठम् । |
|---|---|
| भाष्यम् ( वेदान्ते ) | १७६ |
| वृत्तिकारास्तु | १८८ |
| वार्त्तिकम् | २००।२४०।३४४।३४८ |
| नैयायिकवृद्धाः | १९९।२०१।४१७ |
| वेदः | २१६ |
| वेदभाष्यम् | २१६ |
| लिङ्गानुशासनम् | २१८ |
| प्राचीनवैयाकरणाः | २३३ |
| व्यपेक्षावादी | २४१।२५२ |
| मीमांसकंमन्याः | २५६ |
| जैमिनीयाः | २७० |
| कोशः | २३९ |
| आकृत्यधिकरणवार्तिकम् | ३३३ |
| कैयटः | ३३७।३३८।४१९ |
| महाभाष्यकारः | ३८९ |
| वर्णस्फोटवादी | ३८९ |
| वैयाकरणाः | ३८९।३९३ |
| वेदान्तैकदेशी | ४०९ |
| वाचस्पतिः | ४०९ |
| कल्पतरुः | ४०९ |
| परिमलः | ४१८ |
| भृगुवल्ली | ४२२ |
| आनन्दवल्ली | ४२३ |
| भट्टोजीदीक्षितः | ४४२ |


इति भूषणसारोल्लिखितग्रन्थकृतां विशेषमतान्तराणां च सूचकम् ।



( १ ) अत्र सर्वत्र प्रथमाभिन्नविभक्त्यन्तानामपि ग्रन्थग्रन्थकारवाचकपदानां प्रथमविभक्त्या विपरिणामं कृत्वा निर्देशः कृत इति बोध्यम् ।

# अथ वैयाकरण भूषणसारस्थकारिकाणाम-कारादिक्रमेणानुक्रमणिका ।




| कारिकारम्भः । | का०अं० | पृष्ठम् |
|---|---|---|
| अतएवगवित्याह | २७ | २२८ |
| अत्रार्धजरतीयंस्यात् | ५० | ३४९ |
| अथादेशा वाचकाश्चेद् | ६४ | ३९८ |
| अनेकव्यक्त्यभिव्यङ्ग्या | ७२ | ४३५ |
| अभावोवा तदर्थस्तु | ४१ | ३०९ |
| अभेदश्चात्र संसर्ग | ५३ | ३५३ |
| अभेदैकत्वसङ्ख्याया | ५६ | ३६३ |
| अविग्रहागतादिस्था | १९ | १०५ |
| अव्ययकृत इत्युक्तेः | ६० | ३७५ |
| अषष्ठ्यर्थबहुव्रीहौ | ३४ | २४९ |
| असाधुरनुमानेन | ३८ | २९६ |
| अस्त्यादावपि धर्म्यंशे | १२ | ८३ |
| आख्यातं तद्धितकृतोः | ३५ | २७१ |
| आख्यातशब्देभागाभ्याम् | १४ | ८८ |
| आश्रयोवधिरुद्देश्यः | २४ | १४७ |
| इत्थं निष्कृष्यमाणम् | ७४ | ४३९ |
| इन्द्रियाणां स्वविषये | ३७ | २५५ |
| उपेयप्रतिपत्त्यर्था | ६९ | ४२२ |
| उत्सर्गोऽयं कर्मकर्तृ | ४ | ४८ |
| एकं द्विकं त्रिकं चाथ | २५ | २०३ |
| औपाधिकोवाभेदोऽस्तु | ७१ | ४३२ |
| कथं कर्तुरवाच्यत्वम् | ६३ | ३९२ |
| कल्पितानानुपाधित्वम् | ७० | ४२७ |
| किंकार्यं पचनीयं चेत् | ९ | ७५ |
| किंत्तूत्पादनमेवातः | ६ | ५९ |
| क्रीडायांणस्तदस्यास्ति | ५५ | ३५६ |
| कृत्तद्धितसमासेभ्यः | ४९ | ३४४ |
| कृत्वोऽर्थाः क्त्वातुमुन्वत्स्युः | २० | १०८ |
| कैश्चिद्व्यक्त्य एवास्या | ७२ | ४३५ |

| कारिकारम्भः । | का०अं० | पृष्ठम् |
|---|---|---|
| घटेनेत्यादिदिषु नहि | ६५ | ४०० |
| चकारादिनिषेधोऽथ | ३२ | २४७ |
| जायन्ते तज्जन्यबोध | ५२ | ३४७ |
| तथान्यत्र निपातेऽपि | ४३ | ३२५ |
| तथायस्यचभावेन | १७ | १०० |
| तस्मात्करोतिर्धातोः स्यात् | ८ | ६७ |
| द्योतकाः प्रादयो येन | ४२ | ३२३ |
| धात्वर्थं च क्रियात्वञ्च | ११ | ८२ |
| नञ्समासे चापरस्य | ४० | ३०७ |
| नञ्समासे चापरस्यद्योत्यम् | ४६ | ३३२ |
| नामार्थयोरभेदोऽपि | ६४ | ३९६ |
| निपातानां वाचकत्वम् | ४७ | ३३५ |
| निपातत्वं परेषां यत् | ४८ | ३३८ |
| निर्वर्त्यंच विकार्यंच | ७ | ६१ |
| पञ्चकोशादिवद् | ६९ | ४२२ |
| पदार्थः सदृशान्वेति | ४४ | ३२८ |
| पदेन वर्णा विद्यन्ते | ६८ | १११ |
| पर्यवस्यच्छाब्दबोधः | ३६ | २७२ |
| प्रदेय एववाशक्तिः | ५४ | ३५४ |
| प्रयोगोपाधिमाश्रित्य | ५१ | ३४७ |
| फणिभाषितभाष्याब्धेः | १ | ७ |
| फलव्यापारयोर्धातुः | २ | ७ |
| फलव्यापारयोस्तत्र | ३ | ४७ |
| फलव्यापारयोरेक | १३ | ८६ |
| बहूनां वृत्तिधर्माणां | ३३ | २४१ |
| भाट्टास्तेऽपीत्थमेवाहुः | ६७ | ४०९ |
| भेदः संसर्ग उभयं | ३१ | २३७ |
| भेद्यभेदकसम्बन्धोपाधि | २१ | ११० |
| भौतपूर्व्यात्सोऽपि | ३० | २३७ |
| यद्यपि [illegible] वत्यर्थः | १८ | १०४ |

| कारिकारम्भः । | का० अं० | पृष्ठम् |
|---|---|---|
| रदाभ्यां वाक्यभेदेन | ५९ | ३७३ |
| लक्षणादधुनाचेत्तत् | ६७ | ४०१ |
| लक्ष्यानुरोधात्सङ्ख्यायाः | ५७ | ३७० |
| वर्तमाने परोक्षेश्वो | २२ | ११८ |
| वाक्यात्पदानामत्यन्तम् | ६९ | ४११ |
| वाक्यस्फोटोऽतिनिष्कर्षे | ६१ | ३८७ |
| विधेये भेदकं तन्त्रम् | ५८ | ३७२ |
| व्यवस्थितेर्व्यवहृतेः | ६२ | ३५२ |
| व्यापारो भावनासैव | ५ | ४९ |
| शक्यत्व इव शक्तत्वे | ७१ | ४३२ |
| शब्दोऽपि यदिभेदेन | २६ | २२४ |
| शरैरुस्रैरिवोदीच्यान् | ४५ | ३३० |
| सत्यंयत्तत्रसाजातिः | ७३ | ४३८ |
| समासे खलुभिन्नैव | ३२ | २५१ |
| समासस्तुचतुर्धेति | २९ | २३४ |
| सम्बोधनान्तं कृत्वोर्थाः | १६ | ९३ |
| सम्बन्धिशब्दे सम्बन्धो | ३९ | ३०५ |
| स्वरदैर्घ्याद्यपिह्यन्ये | ७० | ४२७ |
| सर्वनामाव्ययादीनाम् | १० | ८० |
| साध्यत्वेन क्रिया तत्र | १५ | ९१ |
| सुपां सुपा तिङा नाम्ना | २८ | २३१ |
| हरेवेत्यादिदृष्ट्वा च | ६६ | ४०१ |
| ह्योभूतेप्रेरणादौच | २३ | १२९ |


इति वैयाकरणभूषणसारस्थकारिकाणामकारादिक्रमेणानुक्रमणिका ।

प्राप्तिस्थानम्—

**चौखम्बा संस्कृत पुस्तकालय,**

**बनारस सिटी ।**

